# प्रबन्ध-मंजरी

"मुद्रयति वदनविवरं मृतभाषावादिनां मुहुर्गणाम्
स्मरयति च भट्ट-बाणं भट्टाचार्यस्य सा वाणी"

पण्डितहृषीकेशशास्त्री भट्टाचार्यः

# प्रबन्ध-मञ्जरी

सकलरस-परम्परातरङ्गितानां प्रबन्धानां
संग्रहः

प्रबन्धप्रणेता
पण्डितहृषीकेशशास्त्री भट्टाचार्यः

—:०:—

*"मुद्रयति वदनविवरं मृतभाषावादिनां मुहेराणाम्
स्मरयति च भट्ट-बाणं भट्टाचार्यस्य सा वाणी"*

—:०:—

सम्पादकः
पद्मसिंहशर्मा

* * *

प्रथमं संस्करणम् ]  १९८६ विक्रमाब्दः  [ मूल्य १॥)

* * * * * * * * * * * * * * * * * * * * * * *

प्रकाशकः—

श्रीकाशीनाथशर्मा काव्यतीर्थः

काव्यकुटीर-कार्यालयः

ग्रामः—नायक नगला

पो०आ०—चाँदपुर ( बिजनौर, यू० पी० )

To be had of :—

KAVYAKUTIR

Nayak Nagla

P.O. Chandpur,

Dt. Bijnor, ( U. P. )

* * * * * * * * * * * * * * * * * * * * * * *

Pages 1 to 208 printed at the Jagdish Press. by Ramanand Tewari, at 112, Cotton Street, Calcutta. The rest at the Prabasi Press, by Sajanikant Das, at 120-2, Upper Circular Road, Calcutta.

प्रबन्ध-मञ्जरी



"श्रीमतो भीमसेनस्य स्वर्गिणः सुहृदः स्मृतौ
स्नेह सम्मान भावेन मञ्जरीयं समर्प्यते"

# विषय-विश्लेषणम्

श्रीः

# निर्मायं निवेदनम्

( प्रस्तावना )

सांप्रतिक-संस्कृतविदुषां यदुपक्रमं परीक्षामुत्तीर्य पदवीलाभः, यदुपज्ञञ्च संस्कृतभाषायां सामयिकपत्र-प्रकाशनविधिः, सुरभारती-रसिकानां देशकालज्ञानशून्यता-लक्षणविरहितानां नास्त्यपरिचिता यदीया लेखनी, सोऽयं सुरपुरनिवाससुखमिदानीमनुभवन् दृशाम-गोचरोऽपि मनोवृत्तेः सर्वदा गोचरो, वंगेषु भट्टपल्लीग्रामाभिजनो भट्टाचार्योपनामकः श्रीहृषीकेशशास्त्री कस्य वा भवेदविदितः। अमुना महानुभावेन सम्पादितं विद्योदयाभिधं सर्वतः पुरातनं दीर्घ-जीवि संस्कृतमासिकपत्रं केनावलोकितं न स्यात्। सहृदयदौर्भाग्य-

दक्षिणानिलसहचरेण कालहतकावग्रहेणावगृहीतासु तल्लेखनी-निर्झरामृतवर्षासु पिपासाकुलितानां विद्वन्मनश्चातकानां प्रवृद्धं सन्तापमपनेतुमिवेदानीं रसिकधौरेयैः श्रीपद्मसिंहशर्मभि विद्योदये प्रकाशितानां कतीनांचिद् भट्टाचार्यमहोदयप्रबन्धानाममृतनिपानमिव संग्रहः प्रबन्धमञ्जरीतिनाम्ना स्वकीयात् काव्य-कुटीर-कार्यालयात् प्रकाशयितुमारब्धः ।

अस्य संग्रहस्य कियांश्चिद् भागो मन्नयनयोरासेचनतां यातः । विद्योदये सुपठितामपि भट्टाचार्यमहाभागस्य प्रसन्नमधुरां सजीवामिव प्रत्यक्षमुपलभ्यमानां भारतीमद्य नवीभूतामिव पुनरास्वाद्य कोऽपि भावातिशयो हृदयमाक्रामति । संस्कृतभारत्या यौवनं प्रख्यापयत्यपि पुरातने समये यत्सत्यं विरला एवासन्नीदृशाः प्रबन्धारः, दूरे त्वद्ये-दृशानां कथा ।

"मुद्रयति वदन-विवरं मृतभाषा-वादिनां मुहेराणाम् ।
स्मरयति च भट्टबाणं भट्टाचार्यस्य सा वाणी ॥"

यथा चास्य भाषा-सौष्ठवं तथा विषय-प्रतिपादन-सरणिरपि कमपि प्रगल्भतातिशयमावहति ।

क्वचिदिदानीन्तन-धर्मदुर्दशावर्णने करुणा-स्रोतोनिर्झरः, क्वचिद् विद्वद्भ्यः कर्तव्योपदेशे प्रशान्त-महासागरगाम्भीर्यम्, क्वचित्

कौतुकेनैव दर्शन-दृष्टार्थ-विवेचने ऽद्भुत-चमत्कारः, क्वचित् स्वार्थसक्त-मानवजातिनिर्घृणता-निदर्शने बीभत्स-कल्लोलाः, क्वचित् तिरश्चां वनस्पतिप्रभृतीनां च सभावर्णनमुखेनेदानीन्तनसभाभिनय-परिहासः, क्वचित् सिंहाद्यप्रस्तुतप्रशंसया दुष्टजन-रौद्र-ख्यातिः, क्वचित् तिर्यक्षु तत्कल्पेषु च समुचित-भयानक-निवेशनमित्येवमादि-सकलरस-परम्परातरंगिता इमे प्रबन्धाः सम्यगभिध्यायमाना न केवलं तात्कालिक-प्रमोदमहोत्सवायैव कल्पन्ते, अपितु सामयिकं किमपि कर्तव्यमतिरमणीयया पद्धत्या समुपदिशन्तः कान्तासम्मिततयोपदेश-योगं काव्यस्य परमं प्रयोजनं सम्यङ् निष्पादयन्ति ।

एवंविध-प्रबन्धसंग्रहं प्रकाशयद्भि र्नूनमतिमहदुपकृता सुरभारती कालेऽस्मिन् सुहृद्वरैः श्रीमद्भिः पण्डितपद्मसिंहशर्म्ममहाभागैः । इदमेवात्राशास्यते—

"अस्यां प्रबन्धमञ्जर्यां रमन्तां बुध-षट्पदाः ।
जायतां जगती चास्याः सौरभोल्लाससम्भृता ॥"

इमं च संग्रहमुत्तमशिक्षापाठनक्रमे सन्निवेश्य सम्यगुपकुर्वन्तु सामयिक-नीति-रीति-परिशीलन-नैपुणी-प्रापणेन शिक्षार्थिनः शिक्षा-कर्णधारा विश्वविद्यालयादिनेतार इत्यपि मया निर्माय निवेद्यते ।

सर्वथा संस्कृतज्ञेष्वप्रतिहतं प्रसारमस्य संग्रहस्याभिवाञ्छामि भगवन्तं जगन्नियन्तारमिति ।

श्रीगिरिधरशर्म्मा चतुर्वेदः

( महामहोपाध्यायो जयपुराभिजनः )

# प्रबन्ध-परिचयः

"यस्यैकस्य सुवर्णसम्भृतपदन्यासानवद्यक्रम-
व्यक्तिः प्रेङ्खति गौरनर्गलगति स्वाच्छन्द्यहृद्याकृतिः ।
प्रख्याताद्भुत-सर्गबन्धरचना-संरब्धिरोजस्विनः,
काव्यस्योदयभूरसौ भवतु वः प्रीत्यै पुराणः कविः ॥"

अयि ! मञ्जरी मकरन्दमाद्यन्मन्थर-घूर्णमान-मानसाः प्रियपाठक-चञ्चरीकाः !

आस्वादयन्तु तावदमुष्या मञ्जर्या रसमाकण्ठं पायं पायम् । अथ प्रतिपादितप्रायमेव सर्वं प्रबन्धमञ्जरीप्रारम्भे ( प्रबन्धप्रणेतुर्जीवनचरिते ) यादृशो यत्समाचारश्चायं भट्टाचार्य महाशयः । इदानीं वयं तदीयया सरस्वतीहृदय-समुल्लेखिन्या लेखन्यापि भवतां संस्तवमुत्पादयितुमभिलषामः । प्रबन्धमञ्जर्याः प्राक् नयनगोचरी-चरीकरिष्यन्ति, शास्त्रिणां जीवनवृत्तान्तम् । यदि शास्त्रिणां जीवनवृत्तं तदात्मीयो लिखित्वा न प्रत्यार्पयिष्यत्तर्हि सुतरामुपदेशप्रदेन तदीय-जीवनेन सर्वो लोको वञ्चित एवास्थास्यत् ; तदर्थं सोऽपि सुतरां प्रशंसनीयः ।

भट्टाचार्यपाद आदौ प्रबन्धान् प्रस्तुवन् शिष्टाचारपरम्परापरिप्राप्तं मङ्गल-मुपन्यभान्त्सीत् । ततः परञ्च विबुधानां स्मरणस्येष्टसाधकत्वात्—

'विबुधामन्त्रणम्'—

नाम प्रबन्धम् । अत्रैवमेव यथायथं संगतिरूह्या । एते खलु सर्वेऽपि प्रबन्धा वर्तमानपाश्चात्यशिक्षाविकृतमस्तिष्काणां ''किं धर्मेण, किं कर्मणा, किं वेदेन, कृतं यज्ञेन, क आचार'' इत्युक्तिभिस्तिष्ठतु दूरे धर्मकथा, अन्तर्धत्तां स्नानार्चनादिपद्धतिः, कुड्यालयमालम्बतां गुरूपदेश आश्रयतु नामशेषतां पित्रोराज्ञापालनवार्ता, पाखण्ड एवैकपत्नीव्रतमित्युद्घोषैश्च कलेः साहायकमाचरतामिवैहिकक्षणिकदुःखोदर्क-सुख-संवर्द्धनगर्धानां वार्द्धक्येऽपि सहस्रधा प्ररोहद्वासनाङ्कुराणां, वयसा स्थविरभावमनुभवतामपि विषयभोगेच्छया पुनर्युवत्वं कामयमानानां, विस्मृतव्यात्तास्यमृत्युकवलीभावानां जनानां, विशेषतश्च मदान्धानां यूनां प्रबोधनायैव लिखिताः । यथा ते स्वधर्मनिरताः कृतसदाचारपरिग्रहाश्च भवेयुर्न चैव परिहरेयुः कष्टेष्वपि शाश्वतं धर्मं परम्पराचरितं सदाचारश्च । एवञ्च प्रथमे प्रबन्धे सनातनार्यधर्मस्य चातुर्वर्ण्यमर्यादायाश्चोपप्लवेनातितरां क्लिश्यन्, प्राक्तनसर्वविधगुणावहरीतिसमुच्छेदमाकलयन् सर्वथापि विस्मृतपूर्वगौरवोत्कर्षं वर्षं भारतमालक्ष्याश्रूणि मुञ्चन् कादम्बरीप्रतिभटेन भट्टैकवेद्येन हृद्येन गद्येन विद्यातिशयमिवात्मनो द्योतयन्, चतुर्णामपि वर्णानां प्राचीनार्वाचीनदशे साधु तुलयतिस्म । तथाहि पठ्यतामादिममेव पृष्ठं, विभाव्यतां हेतूद्भावनप्रक्रिया, अहो ! अहो ! कथमिव चर्व्यमाणानि पदानीमानि, समुद्गिरन्ति रसमिक्षुदण्डा इव, को नाम रसेष्वधीती बाण-गद्यबन्धेन प्रबन्धमिमं तुलयन् लघयेत् । तद् यदि १४० पृष्ठोक्तानि वङ्गीयबालकविताविशेषणान्यस्यैव कवितायै दीयेरँस्तर्हि किन्नामात्युक्तं स्यादस्माभिः । भवतु—

"यद्यस्ति वस्तु किमपीह तथानवद्यं
द्योतेत तत्स्वयमुदेष्यति चानुरागः ।"

अथ किञ्चिदितोऽपि दीयतां दृष्टिः, दृश्यतां दृश्यतां किमिति मन्त्र्यते ऽस्याम्——

'उद्भिज्ज-परिषदि'—

कोनु नाम विषयो मीमांस्यते, किमयमश्वत्थमहोदयः शाखा-हस्तमुत्थाप्य प्रतिपादयति ? पाठकाः ! सुमहच्चित्रं यदस्यां चर्च्यते मानवानां, स्वभावचर्चा, प्रदर्श्यते च मानवचेष्टितानामसारता, शिक्ष्यते च वर्तमानसाम्प्रदायिकानां दाम्भिकता, सकृदपि वर्णने कर्णगोचरीकृते पुरस्तादिव नाट्यमानं सर्वं दृश्यं नयन-चषकपेयं जायत इव । अमी हि खलु नास्तिका 'नास्ति परमेश्वर' इति व्याहरन्तो व्यञ्जयन्ति स्वीयां पाण्डित्यकाष्ठां काष्ठास्वित्युद्घोषितं सरसपद-न्यासवत्या श्रीमतो ऽश्वत्थमहाभागस्य भणित्या ; सम्यक् प्रदर्शितः खलु संक्षिप्तः सर्वशास्त्रमतसारः । ये हि सुकुमारमतयो घोराच्छास्त्रकान्तार-प्रचाराद् बिभ्यति, सारमात्रञ्चादित्सन्ति, तैरेकधाऽस्मदनुरोधेन नूनमध्येतव्योऽयं प्रबन्धः । यत्र च सञ्चरन्तस्ते नानुभविष्यन्ति मनागपि कष्ट-कण्टकच्छेदम् । अपूर्वः खलु प्रवर्तितस्तेषां कृतेऽयं कथोपकथनव्याजेन मनोरमः पन्थाः । अत्र हि वेदान्तिनां निरूपिता भर्तारमपि भर्त्सयन्ती निदिशन्तीव जाया परे ब्रह्मणि माया । उपन्यस्तं नैयायिकानामीश्वरसाधकमनुमानम् । मीमांस-कानां प्रतिष्ठापितं कर्मणः प्राधान्यम् । संख्यावदग्रेसरस्य प्रसंख्यानपरस्य प्रकाशितं मतं सांख्यस्य । निरूपितं कुसुमाञ्जल्यादिषु सुदुर्बोध-मनायासेनैव शक्तेः स्वरूपम् । कथितं जीव-प्राज्ञ-प्रकृतीनामिदमात्म-कत्वम् । पण्डितप्रकाण्डानामपि यशोऽयाश्वत्थज्ञानगरिमाणमुपश्रुत्य संशय-सागरे निमग्नम् ! जीवसृष्टिप्रवाहेष्वित्यादिना विन्यस्ता मानवानामतीव दुःशी-लता, कृता च तत्समीक्षा, येन सापराधैरिवास्माभिः ( मनुष्यैः ) क्षमापयि-

तव्यो जायत इवात्मा, प्रकाशनीया च कृतज्ञताऽश्वत्थमहोदयस्य, तत्तादृक्-लोकोत्तर-रहस्यप्रकाशनपर-व्याख्यानाख्यानानुग्रहकृते। सर्वथा शास्त्रिण:-किमयं, सर्वेऽपि प्रबन्धा अनत्तरं चीरोदफेनपटलपाण्डरं यशो व्याहरन्ति, यश:पताकायमानाश्चेमे प्रबन्धा दोधूयन्ते विद्वत्समाजमूर्धसु। पठनमात्रतश्च जायते युगपदेव नयनयो र्लपने च 'वा:'! भवतु, तदेतद्विषये यावदेव कथयामस्तावदेव स्वल्पम्; न पारयिष्यामो चपयित्वापि पाठकानामनल्पं कालं, वितत्यापि प्रसभसमाकृष्टपदजालं यथावद्वर्णयितुमिति कृत्वा विरमाम: प्रबन्धरचनासम्बन्धे एतावन्मात्रमुक्त्वा, यच्छास्त्रिणां वचांसि वा वाक्यानि वा पदानि वा—

"राकेन्दोरपि सुन्दराणि हृदयग्राहीणि बालाङ्गना-
मुग्धालापकथामृतादपि मनोहारीणि हारादपि" इति॥

अथ पश्यन्तु पाठका अग्रिमं प्रबन्धम्। सभाजयन्तु सफलयन्तु च विधाय—

'महारण्यपर्यवेक्षणम्'—

चक्षुषी। को हि नाम विदितपदतदर्थसंगतिमात्र: पुर: परिस्फुरन्तमिव शब्दोपकल्पितं निर्विकल्पं विकल्पं न कल्पयेत् सहृदय: शब्दतोऽपि पठित्वा। अत्र चेदमैदम्पर्यम्—यच्छास्त्रिमहाभागै: साधूपश्लोकिता मनुष्याणामुद्भिज्जान्, आरण्यक-पशूँश्चापेक्ष्य लघुता, सर्वेष्वपि कर्मसु विशेषत: शुभेषु, प्रबन्धेऽस्मिन् यथा भवन्तो विज्ञास्यन्ति किञ्चिदिवाग्रे।

शास्त्रिणाश्चायं विचार: संवदति विज्ञशिरोमणेराधुनिकराजनीतिविदां पुर:सरस्य श्रीमतो माक्लिकावले-( मेक्यावलि )-विचारेण। माक्लिकावलिर्हि राज्यलाभं ( Reason of state ) सर्वतो मुख्यं धर्मञ्च न्याया-

धीशस्य ( Judges ) साधनं ( Instrument ) मन्यते। स्वीये 'प्रिन्सा'-( Prince )-भिधेये "दी डिस्कोर्सेज़-( The Discourses )—नामके च पुस्तके हननात्याचारादीन् सर्वानेव राज्यलाभहेतोः क्रियमाणान् गुणानेवाऽऽतिष्ठत। मानवीयस्वभावनिरूपणविषये ऽप्यतिभीषणं चित्रणमसौ व्यधत्त। मेक्यावलिमते हि मानवीया जातिः खल्वतीवोग्रा स्वार्थैकव्रता स्वार्थावेशप्रेरिता सती कामनासम्पादनपरा ऽहरहः परान् खेदयति मारयति कुट्टयति हन्ति मोचयति च प्रियेभ्यः प्राणेभ्योऽसंख्यान् प्राणिनः। लोभोपहितनेला चेयं कृतहन्त्री प्रवञ्चनतन्त्री ह्यविनिश्चितविचारगन्त्री च वर्तते। भवन्ति खलु मनुष्याः स्वभावतो दुराशया धूर्त्ताः क्रूराश्च। अत एव राज्ञि न केनापि प्रत्ययः करणीयः। नापि राज्ञा प्रजास्वित्यसावसकृन्निगमयामास। किञ्च ये केचन कतिचन मनुष्येषु गुणा लक्ष्यन्ते न हि ते ऽप्यस्य स्वाभाव्यजुषः, किन्तु परमावश्यकतानान्तरीयकतयैव तेषां तेष्ववस्थितिः। यच्चापि चेष्टते मनुष्य इष्टमनिष्टं वा वष्टि खलु तेनासौ स्वेष्टपूर्तिमात्रमित्यादि। इत्थमस्माभिर्महारण्यपर्यवेक्षण-प्रतिपाद्यविषयतः प्रसङ्गतो मेक्यावले-( माक्षिकावलेः )—र्विचारसाम्यं तत्तारतम्यञ्च सारतः प्रतिपादितम्। तद्विषये विशेषजिज्ञासुभिस्तु श्रीबनारसीदासचतुर्वेदिना सम्पाद्यमाने 'विशालभारते' (द्वितीयवर्षस्य पञ्चमेऽङ्के त्रयोविंश्यां पूर्णसंख्यायां) द्रष्टव्यम्। माक्षिकावलिविचाराश्च सप्तदशशताब्द्याः प्रख्याततमं नीतिवेत्तारं हाब्स-(Howos) मप्यतिशेरते। तयोर्विचारांस्तौ च विदुषामग्रेसरोऽसौ शास्त्रिकुलधुरन्धर इति। भवतु, प्रकृतमनुसरामः। अस्मिन्नवेक्षणेऽवेक्षिष्यन्ते पाठका वर्णितं मानवीयस्वभावं हृदयहारिण्या शैल्या, राजप्रजयोः परस्परं व्यवहारम्—कथं राज्ञि वर्तितव्यं प्रजाभिः, कथं तत्पुरः स्वदुःखमावेदनीयन्ताभिः, कथञ्च स्वामिना सान्त्वनीया

प्रयेति । वस्तुतो मानवसमाजे सर्वविधसद्भावप्रवर्तनमुद्दिश्यैव निबद्धा इमे प्रबन्धा इत्यत्र नास्ति सन्देहकणिकापि । इदमप्यत्र दृश्यतां कथङ्कारं शास्त्रिमहोदयेन शास्त्ररहस्यमुद्घाटितम् । यस्य संयोगविप्रलम्भादेः स्वरूप-मनेकधा गुरुमुखादधीत्यापि शास्त्राणि, मुहुर्मुहुरभ्यस्यापि तास्ताः फक्किका न शक्यते यथावदवगन्तुं, तत्तत्क्षणादेव परिचीयते गुडजिह्विकया सकृदपि पर्यवेक्षणावेक्षणेन । काम-लोभादीनां बलीयसामान्तरशत्रूणां वर्णितानि चेष्टितानि—कथं नाम वामः कामो वामासु, लोभश्च समुत्पादितचित्तक्षोभ उन्मथ्नाति पुरुषमिति । ( ६४ पृष्ठे ) "जायते तेषां गौरवं"—इत्यादि वर्णन-मनुहरति "यत्र च मलिनता हविर्धूमेषु न चरितेषु" इत्यादि कादम्बरीवर्णितं जाबाल्याश्रमवर्णनम् । येन निमज्जति सकृदान्तरमनुत्तरे परमानन्दमहार्णवे । किञ्च—"अथ सुरवधूपन्यस्तसान्ध्यप्रदीपा इव" इत्यादि ( १०४ पृष्ठस्थं ) वर्णनमपि बाणेनाप्यनाकलितचरं पूर्वैः कविभिरप्रतिहतं मार्गमावेदयति । पाठक-महानुभावाननुरुन्ध्महे साग्रहमेकधास्य वर्णनस्याध्ययनाय, यदि नाम रुचिरं भविष्यति वर्णनमिदं तावतैव मंस्यामहे प्रबन्धमञ्जरी-मुद्रणायासं सकलमपि बहुकरम् । एवं ( १०६ पृष्ठे ) 'अथ बालातपमण्डलं गगनमण्डले"—इत्यादि स्थले भ्रान्तिमानपि दिवापि कस्य न सहृदयस्य शास्त्रियशश्चन्द्रिका-भ्रान्तिमुत्पादयेत् ! एवं ( ११४ पृष्ठे ) वर्णिताऽधुनिकसभ्यतालीलापि पठित्वैव शक्यावगन्तुं कीदृक्-प्रकारेति । ११५, ११६, पृष्ठयं 'यत्र च मना'—इत्यादिरूपं वर्णनमप्यतीवमनोहरम् । किम्बहुना महारण्यावेक्षणं महारण्यमिवातिगहनमपि मनोहरं सुविस्तीर्णमप्यनुद्वेजकञ्च सहृदयानामस्तीति निर्विवादम् । एतदीयसंस्कृतसौष्ठवविषये तु वयमेतदेवोक्त्वा विरंस्यामो यत्—

"मधुस्यन्दी मन्दीकृतविपदुपाधिर्भवमरु-
भ्रम-क्लेशावेश-प्रशम-कमनीयो विजयते ।
अखण्डश्रीखण्डद्रव-नवसुधासार-सरसः
प्रसादो वाग्देव्याः प्रवरकविकाव्यामृतवपुः ॥"

अथ वाचयन्तु पाठकमहोदया :—

## 'प्रास-पत्रम'

यत्र प्रदर्शिता: स्त्रीजातिमधिकृत्य क्रियमाणा अत्याचारा: । (१२२ पृष्ठे) 'सम्मार्जनी-प्रयोगकुशलेति'पदं सकलस्यापि पत्रस्य जीवितं, यत्र श्लेषेण वर्णितमाधुनिकसभ्यताकौशलम् । तथाहि—द्विविधोऽत्र कविना सम्मार्जनीप्रयोगोऽभिप्रेत: । एकस्तावत्, गृहाङ्गनावकरनिकरं पिण्डीकृत्य बहिः-प्रक्षेपणम् । द्वितीयश्च भर्तु: ससम्मार्जनीप्रहारं समुचितं शिक्षणम् । अहो कौशलम् ! किम्बहुनाऽऽपत्रारम्भात् समाप्तिं यावत् पत्रमिदं सर्वतोऽपि गभीरं शिक्षाप्रदञ्च हास्यरसं परिपुष्णाति । १२६ पृष्ठस्थं 'या: संसारस्य मूलमि'-त्यादि—वर्णनं बोधयति शास्त्रिणां सहृदयतां महिलानां विषये । एवमे-तत्पृष्ठवर्ति—गतं गतं गार्हस्थ्यसौख्येन''—इत्यादिवर्णनमपि लोकोत्तरमेव । नाद्यावधि स्त्र्यधिकारपरिपोषकेषु केनापि लिखित, इत्थमुद्भटबन्ध: प्रबन्ध: । (१२८ पृष्ठे)—दीर्यन्तेऽमीभिरिति व्युत्पत्तिरप्यश्रुतपूर्वैव समुद्भाविता शास्त्रि-वर्येण *। १३० पृष्ठे 'ततस्ता इतस्तत: संचरमाणा अपी'त्यपि पूर्ववदेवा-

---

* यत् सत्यं व्युत्पत्तिप्रकारोयं नितरां मर्मस्पृङ् मनोहरश्च । अत्रायमभिसन्धिः । दीर्यन्ते—भेदबुद्धिमुत्पाद्य विभक्ता विधीयन्ते भ्रातरोऽमीभिः ( दारशब्दस्य बहुत्वं पुंस्त्वं चाभिप्रेत्यामीभिरित्युक्तम् ) एतदुपष्टम्भकं पद्यं नीतिशास्त्रेऽपि पठ्यते—

पूर्वम्। यथावद्वस्तुस्वरूपवर्णने शास्त्रिणः सर्वत्राऽप्रतिभटा एव लक्ष्यन्ते। दृश्यतां ( १२४ पृष्ठे ) संस्कृतपण्डितस्वभाववर्णनम्।, वस्तुतः संस्कृत पण्डिताः स्वलेखस्य शुद्धिमन्यतो न कथमपि सहन्ते। एवं ( १२७पृष्ठस्थं) 'अचेतनमपि स्त्रीलिङ्गं वस्तु' इत्यादेराशयं विभावयन्तु। तथाहि—यद-चेतनं स्त्रीलिङ्गमभ्युपगम्यते ज्योत्स्ना-लताप्रभृति, तदपि कापट्येन मनोहरेण मायारूपत्वादयथार्थं ब्रह्मरूपं निह्नुत इत्याद्यूह्यम्। ( १३३ पृष्ठे )—"अथ ये ······इत्यारभ्य 'न वा विलास······' इत्येतत्पर्यन्तः सन्दर्भोऽर्भकानपि शब्दमात्रवेदिनोऽपि मोहयेदेवेति नः प्रत्ययः। एतदीयसंस्कृतविषये तु—

"जयन्ति ते पञ्चमनादमित्रचित्रोक्तिसन्दर्भविभूषणेषु।
सरस्वती यद्वदनेषु नित्यमाभाति वीणामिव वादयन्ती॥"

एतावदेवोक्त्वाऽलम्।†

अथेतोऽपि क्षिपन्तु चक्षुः क्षौद्र-क्षीर-रस-मनोहरे श्रीमतः—

---

"भ्रातृणां सततं भेदः कथं नाम न जायताम्।
अध्यापितानां पत्नीभिर्द्वेषविद्यां सदा निशि॥"

पूर्वोक्तव्युत्पत्तिप्रकारप्रदर्शनसमये पद्यमिदं नूनं स्मृतं श्रीमत्याऽनामिकया, श्रीमद्भिः शास्त्रिपादैर्वेति शक्यमनुमातुम्। ( सम्पादकः )

† 'महारण्यपर्यवेक्षणे' हि प्रदोष-प्रभातयोर्वर्णनमप्यपूर्वं मनोहरञ्च। वंगीयशारद-महोत्सवसमारम्भ-दृश्यमपि नितरां नैपुण्येन तत्र चित्रितं, यत्पठतां प्रत्यक्षमनुभवतामिव सञ्जायते मानस-दशान्तरं किमपि भावुकानाम्। वारं वारं पठित्वापि नोपशाम्यति तत्पिपठिषा। यैर्हि वंगेषु शारदोत्सवसमारम्भः प्रत्यक्षीकृतस्त एवात्र साक्षिणः, कीदृशं यथार्थं तद्वर्णनमिति ( सम्पादकः )

## 'चण्डीदासस्य'

चरिते। अत्र खलु यदपि वक्तव्यमस्माभिर्न तत्पुनरुक्तपक्षादतिरिच्यते। यतः स्वयमेवास्वाद्य विज्ञास्यन्ति प्रबन्धमञ्जरी-मधुव्रताः पाठकमहाभागाः। अत्र हि प्रतिपदं प्रस्फुरति भगवती-सरस्वती-कृपाप्रसादः। मन्यामहे पुरुषोत्तमस्य जीवनचरितलेखनाङ्गीभूय आत्मानं पावयितुकामा इव शब्दाः समासाश्चाहमहमिकयाऽत्र समवेताः। यतो नान्यत्र भट्टाचार्य-प्रबन्धे विलोकितेदृशी समासभूयिष्ठता। एतादृशी साक्षरडम्बरापि प्रसादभूयिष्ठा न क्वचिदपि प्रसृता वाणी। अयन्तु प्रबन्धः सर्वैरपि कण्ठीकरणीय एव शास्त्रिपरीक्षादित्सुभिरित्यस्माकं तान्प्रत्याग्रहः। (१४३ पृष्ठे) धनेश्वरादिसाम्यम्; (१४५ पृष्ठे) सरणिः सदाचारस्येत्यादि वर्णनं विशेषतो मनोरमं हृदयङ्गममिति हस्तकङ्कणन्यायेन खलु खलूक्त्वा। तथापीदमवश्यमेव निश्चेतव्यम्—

"धन्यानाममृतद्रवन्ति हृदये कर्णे वलन्मल्लिका-
लङ्कारस्तबकन्ति कण्ठपुलिने मुक्ताकलापन्त्यपि।
शैलान्दोलनदुग्धसिन्धुलहरीभङ्गाभिरामोद्गमाः
केषाञ्चित्कृतिनां वसन्ति वदने शब्दार्थपाका गिरः॥"

अथाकर्णयन्तु पाठकमहोदयाः—

## 'यमं प्रति सम्भाषणम्'—

अत्रैतद्भाति, यच्छास्त्रिवर्येणात्मनैवात्मचरितं भङ्ग्या भणितमिति। यतोऽत्र वारं वारमनेकधाप्येक एवार्थः शब्दान्तरैरुपस्थापितो न वैरस्यमनागप्यावहति, प्रत्युत समुत्पद्यते यमार्चनेच्छा! अथ चात्रादौ मातुरात्मजस्य पत्न्याश्च मरणमनुभूतचरमिव वर्णितम्। यद्यपि विनापि तं शक्यते तन्मयीभावमात्रे-

याप्येतद्वर्णनं तथाकर्त्तुमिति शक्यते प्रतिपत्तुम्, तथापि जीवनचरितीयभूयः-सादृश्यमहिम्ना वयमेवमुट्टङ्कयितुं विवशाः। तथाहि जीवनचरितस्य नवमे पृष्ठे प्रथमं स्नेहमयी जननी मञ्जरीकर्तुः, सहसा सान्निपातिकज्वरेणाक्रान्ता दिवसत्रयाभ्यन्तर एव सुरलोकमियाय। ततश्च ( १०मे पृष्ठे ) मासचतुष्टया-नन्तरं सहधर्मिण्या मरणमसौ वर्णयामास, तत्रैव च पुत्रेषु चत्वार एवा-वशिष्टा इति च लिखितम्। एवं द्वादशे पृष्ठे भ्रातुः परलोकप्रस्थानवार्तामुप-न्यस्यति। एतेन स्पष्टमेवास्माकमसौ प्रत्ययो दृढीकृतो भवति। रचना त्वत्र प्रतिपदमश्रूणि मोचयति, सुतरां सरसा सरला मनोहरा चेति, कृतं भूयसीभिरुक्ति-भिरिति।

अथ पातयन्तु पाठका लोचनयुगलं क्षणं वीक्ष्य परिशिष्ट-गतं—

## 'वैतरणी-तीरम्'—

अस्मिन् यस्याशयस्य स्फोरणं वर्तते सोऽयमस्माभिः सकृन्नाम पाठमात्रादेवा-वगन्तुं शक्यते, अत्र हि वैतरणीतरणावसरे कीदृशो जनसम्मर्दः ? कथं वार्ता ? कीदृशाः पातकिनो मनुष्या इत्यादि सर्वं निगदनीतार्थत्वान्न वक्तव्यं बह्वपेक्षते। विशेषतस्तु पद्यद्वयमेवात्र लक्षयितव्यम्, 'जननामिति। घोरेत्यादि च। तत्र छात्रमात्रदुर्बोधत्वादनयोरर्थो प्रदर्श्यते।

जनानामिति—नगरपरिषदो मनुष्यपालयित्र्याः ( Muncipality ) सभायाः शासकस्याधिकर्तु-( Chairman ) र्बलान्नियोगात् रोगादेः प्रभव उत्पत्ति र्यस्मात्तादृशमशुभं निहन्तुं व्यावर्तयितुं, स्वयं नासाबद्धो बिद्धनासिकः सन्, अमेध्यानपवित्रान्, दुर्गन्धान् पूतिगन्धजुषो मलभारान् वहति (अन्योऽपि 'महत्तरादि'र्मलशोधनकाले नासां पेटनावृणोति बध्नाति, कर्मणि च प्रवर्तते ) सोऽयं तादृशो धर्म-वृषभो ( धर्मार्थं वृषोत्सर्गादिषूत्सृष्टो

वृषभो धर्मवृषभः । 'धर्म सांड' इति यस्य भाषा ) भवतामशेषं कल्याणं दिशतु ; अशुभनिहन्तुरेव कल्याणदेशनायां सामर्थ्यात्काव्यलिङ्गमलङ्कारः ।

घोरेति—घोरेषु महत्सु भयानकेषु चाऽऽवर्त्तेषु विवर्तनव्यतिकरेणाऽऽघूर्णन्तस्तत्रैव परिवर्तमाना ये जलप्रवाहा जलवेगास्तेषूच्छलन्तो व्यात्तास्याश्च ये ऽतिस्थौल्याद् गजाभा (ह्वेलापरपर्यायाः) नक्रमकरास्तेषां श्वासैरग्निसंधुक्षणैरग्नीनां समिन्धनैस्तप्तानां, उत्तालानां—तालसमोच्छ्रायाणां, तरङ्गाणां रिङ्गितैरुत्क्षेपैर्ये महान्तः कल्लोलाः—महावीचयस्तैः कृत्वा भीतिप्रदा, तथा दुष्पारा—दुर्गम-परतीरा, तथातिगभीरा विस्तृता च तनुर्यस्यास्तादृशी ; क्षारमुष्णञ्च नीरं यस्यान्तादृशी च । वैतरणीति पूर्वेण सम्बन्धः । वर्तत इति च शेषः । एतत्संस्कृतविषये त्वेतावदेव वक्तव्यम् , यत्—

"अनभ्रवृष्टिः श्रवणामृतस्य सरस्वतीविभ्रमजन्मभूमिः ।
वैदर्भरीतिः कृतिनामुदेति सौभाग्यलाभप्रतिभूः पदानाम् ॥" इति ।

अथ पाठकमहोदयाः सावधानमाकर्णयन्तु गभीरञ्च मनोहरञ्च हर्षजननञ्च हास्यप्रकाशोल्लासितं श्रीदुर्गानन्दस्वामिनः—

'आत्मवायोरुद्गारम्'—

अत्र प्रदर्शितो महत्यारभट्याऽऽत्मनः सर्वेभ्योऽप्युत्कर्षः । वर्णितश्च कतिपयनिमेषायुषि जनुषि कथं कथमात्मानं लोकोत्तरं सम्भावयत्ययं मृतिधर्मा मनु-पोतः । सर्वेभ्योप्यवतारेभ्य आत्मनो गरिमदर्शनाय विचित्रोऽयं प्रकरणगत-तान्त्रिकसदाचारानुसारतो यथार्थोपि हास्यास्पदं हेतु 'यन्मत्स्य-कूर्म-वराहास्तु मया बहुश उदारसात्कृता' इति । दाशरथेः श्रीरामस्योत्कृष्टत्वदर्शनाय सीतापरित्यागः प्रधानं हेतुरुत्प्रेक्षितस्तमपि चात्रभवान् दुर्गानन्द-स्वामी—'मयापि निर्दोषाणां स्वदाराणां जनापवादभयमन्तरैव परित्यागः कृत' इति सपटहो-

दुघोषमुद्घोषयन् हेलयैव जिगाय। अत्र दाराणामिति बहुवचनं सत्यपि तस्य शब्दस्य नित्यबहुवचनान्तत्वे किमेकस्या एव स्त्रिया अपि तु 'बह्वीना' मित्येवं बङ्गीय-कुलीन-ब्राह्मण-बहुविवाह-व्यवहारस्वरूपपरिचायिकां विच्छित्तिमपि पुष्णाति। एवं पितुराज्ञानुवर्तिताऽपि पितृक्लेशावहत्वेन विपरीतैव सम्भाव्यते स्वामिना श्रीरामस्य। अत्र च विषये श्रीमान् दुर्गानन्द आत्मन: प्रावीण्य-प्रदर्शनमिषेण स्वभावोद्धतानां कलि-कलुषकर्मणां कुपुत्राणां चरितं प्रख्यापयति। पश्यन्तु भवन्त:—'अहन्तु तयोर्मुखेत्य दिसन्दर्भं (१६४ पृष्ठे समुल्लिखितम्)। (१६५ पृष्ठे)—"येषां चित्तं केवलं परब्रह्मणि न वित्तार्जने" इत्यादि वाक्यजातमप्यद्भुतमेव। (१६६ पृष्ठे)—"अत्र हि केवलं धाष्ट्यं शाठ्यञ्चैतद्-द्वयमपेक्षितमस्तीति"-वचनेन परप्रतारणपरायणानां लोकनेतृम्मन्यानां महत्त्वमूलं महद् रहस्यमुद्घाटितम्। सत्यमेवाद्यत्वे प्रलापभूयिष्ठवचनाडम्बरेण धूर्ता मनुष्या: ख्यातिं लभन्ते, विशेषतो धार्मिकेषु प्राबल्येनाव्याहतं प्रचरत्ययं संक्रामको व्याधि:। दिने दिने वर्धते च। सर्वमेतत्प्रत्यक्षऽकृतमस्माभिरति, मास्मभ्यं कोपं बिभ्रत्वार्य-धर्मधौरेया:। १६८ पृष्ठे—किञ्चेत्यादिना वर्णितानां हेतूनां परम्परापि लोकोत्तरैव। (१७२ पृष्ठे)—अवश्यमनुगृह्णन्तु सकृत्पठित्वा जनपद-वर्णनम्। १७३ पृष्ठस्थानि सम्भाव्यन्तां वाद-निर्णय-स्थानानि। "जन्मभूमौ नादरो लभ्यते" इत्यस्य कार्यकारणजालं सकृदवश्यं पर्यालोचयन्तु (१७८ पृष्ठे)—एतन्निदर्शनमस्मत्परिचितेषु श्रद्धास्पदा: श्रीमन्त: कविताकामिनी-कान्ता: पण्डितनाथूरामशङ्करशर्माण:, येऽनेकश: सादरं समर्पितानि सभापतिपदान्यपि प्रवासभीरुतया स्वावासपरित्यागक्लेशेन चिराय तृणाय मन्यन्ते। सबहुमानमाहूता अपि शङ्करसदनापरपर्यायं स्वकाव्य कुटीरं परित्यज्य न कुत्रापि गच्छन्ति।

—[ एतद्विपक्ष-दृष्टान्तभूताः, सन्त्येवंविधा अपि यशोलुब्धा मिथ्यामहत्त्व-कामना-कामिनी-कामुकाः श्रीदुर्गानन्दस्वामिनश्चरित-सहोदराः। ये सभापति-पदप्राप्तये पङ्क्यामेवाण्डमन-कारावासगमनमपि न क्लेशकरं गणयन्ति, नगरे कान्तारे स्वर्गे नरके वा यत्र तत्रैव यशो-मधु-लाभ-सम्भावनया रङ्का इवाकालोपहता व्यात्ताननाः—

"सर्वे प्रददतु दानं सुयशो-मधु भूयसी क्षुन्मे"

( "दान करें सब लोग सुयश-मधु भूखा हूँ मैं" )

इति सोरस्ताडं करुणाक्रोदीरयन्तोऽगणितात्मपाता व्रजन्ति। यशो-दुग्ध-पिपासयाऽद्भुतं वैडाल-व्रतमाचरन्ति, महिम-मत्स्य-जिघृक्षयाऽपूर्वां बकवृत्तिमाश्रयन्ते, विचित्रं माया-जालं प्रसार्य श्रद्धा-जडान् जन-मृगान् बलाद् व्यापादयितुं वैतंसिकतामालम्बन्ते। किंबहुना, महत्त्वाकाङ्क्षाहेतो र्यैं ब्रह्म-हत्याऽपि, मित्रघातोऽपि सुकृतमिवानुष्ठातुं शक्यते।

निदर्शनञ्चात्र यथा बहिस्तथान्तर्मलिनरूपः कलुषाशयः कश्चिन्न-राकारो वेतालो जङ्गमो वा तमालतरुस्तरक्षोस्त्रस्यन्ती मुग्धमृगीव यदभिधानाद् बिभ्यती पापशङ्कयेव कृष्णानना लेखनी न पदं निधत्ते! काल-सर्पदष्टेवावरुद्धरुधिरसञ्चारा शुष्यन्मषीद्रवा नाक्षराण्युद्गिरति!! तदास्तां तत्पाप-कथा।—सं॰ ]

त एव भारतीयपदेन व्यवहर्त्तुं योग्या ये स्निह्यन्ति भारतायेति सव्यङ्ग्यं वदता शास्त्रिणा देशोत्थानमूलमन्त्रोऽत्रैवेति प्रतिपादितम् ( यत्र सम्पादकैः पादटिप्पणी प्रदत्ता ; १७६ पृष्ठे )। पण्डिताः केवलं पूर्व-प्रहत-पद्धति-सञ्चरणशीलाः शास्त्र-शकट-धुरन्धरा एव भवन्ति, न ते राजनी-तिविषये किमपि विजानन्तीत्ययशः शास्त्रिभिर्मृष्टम्—'अपरे तु सुजाताः

स्वदेशीयस्येत्यादि' वर्णयद्भिः। सत्यं भारतस्य स्वराज्यानवाप्तेरिदमेव निदानं यत्पारस्परिकः कलहो नामेति, प्रमाणं चात्रेतिहासाः।

( १८२ पृष्ठे ) कविनोपन्यस्ते 'समुद्र'-पदे वयं पाठकानामवधानं विशेषत आक्रष्टुमिच्छामः। अत्र हि यथा चातको जलायाक्रोशति, अलब्ध्वा चाम्बुदनीरकणं समुद्रं प्राप्तोऽपि पिपासां शमयितुं नालं भवति, तथैव भारतकमपि पत्रं समुद्रं—पञ्चभिर्मुद्राभिः सहितमपि, यद्वा मुद्रया पत्रेषु पत्रालये (Post-Office) दीयमानया समन्वितं ( एतेन मध्ये पञ्चाधिकरूप्यकसत्ता तदपहरणशङ्का चापाकृतेतिविज्ञेयम् ) चातककल्पस्य मम दुर्गानन्दस्वामिन इत्यर्थः। श्रीदुर्गानन्द-स्वामिचरिते ( १७० पृष्ठे ) "जानात्येव भवानहं परमहंसो जलचरः संन्यासी"-त्यत्र परमहंसस्य जलचरेति विशेषणमपि वैशिष्ट्येन चमत्कारचारुत्वपरिचायकम्। जलं—मद्यं, चरति—भक्षयति—पिबतीति यावत्। "मद्यपः" इत्यर्थः। हंसो हि जलचरः पक्षी। दुर्गानन्दसदृशां तान्त्रिक-परमहंसानामपि मद्यपानरूपं जलचरत्वमव्याहतमेव। इत्थं सम्यगुभयोर्जलचरत्वे साम्यम्। अहो शास्त्रिणां वर्णनचातुरी! एवं ( १८४ पृष्ठगतं ) पत्रस्यादिमं वाक्यमपि नितरां मनोहरं, येन वयं तच्छब्दैरेव शास्त्रिणां विषये निःशङ्कं वक्तुं शक्नुमः—"यद्भवल्लेखनमत्यधिकरससंवलितत्वात्सचेतसामन्तःकरणं बलादिवाकर्षतीति।" आधुनिकशिक्षितसमाजदशाविज्ञानार्थं १८८, १८९, १९० पृष्ठानि, पाठका नूनं पठन्तु; तत्र हि सामाजिकदशाचित्रणं साधुतरं कृतमस्तीति।

एवं विद्योदय-प्रकाशनकार्ये कियतः क्लेशान् शास्त्रिणः सोढवन्त इति सम्यक् परिच्छेत्तुं शक्यमस्माभि रस्मादेव प्रबन्धात्।

किञ्च प्रबन्धेनैतेनसंस्कृतभाषोपरि वैदेशिकानामनूनः प्रेमाऽस्माकञ्च

भारतीयानां बलवत्युपेक्षाऽपि साधु व्यञ्जिता भवति। ( दृश्यतां पत्रावगमोपशीर्षके १८६ पृष्ठे, शास्त्रि-महाभागानां पत्रम् ) यच्च सुमहल्लज्जाकरमस्माकं संस्कृतानुरागिम्मन्यानां भारतीयानाम्। संस्कृतानुरागिणः काञ्चिदपि ग्रहीष्यन्त्येतेन शिक्षाम् ?*

अथोद्गाराङ्गीभूतस्योदरदर्शनस्यापि दर्शनं मनाक् कुर्वन्तु हास्य-दर्शन-रसिकाः। येन विज्ञास्यन्ति शास्त्रिणां गभीरं परिहास-पाण्डित्यं कीदृगिति। अस्मिन् दर्शने 'जठर-ब्रह्म'-प्रतिपादकानि रुद्रा इवैकादश सूत्राणि वर्तन्ते। येष्वष्टम-नवमयोर्वृत्तिः कामप्यभिख्यां लोचनपेयामेव प्रकाशयति। तत्रापि सर्वप्रत्यवहाररूपस्य तृतीयस्य हेतोर्व्याख्या त्वतीव ह्लादं जनयिष्यति सचेतसामिति संशय-शय-पराहति-मर्यादातिगम्। एवं नवमसूत्रस्य ईक्षत्युप-सर्गविलासोऽपि प्रसभं मनो हरति। आधुनिक-ग्रन्थकाराणां कुत्सितमनो-वृत्तिविषयेऽपि साधूक्तं भट्टाचार्यैः। वर्तमान-ग्रन्थकर्तारो हि क्वचिद्भावं हरन्ति, क्वचित्पदानि परिवर्तयन्ति, यथाऽपि स्यात्तथा अपि विधाय मुखपृष्ठपरिवृत्तिमपि, क्रीत्वा पण्डितान् भृत्या, स्वनामप्रख्यापनतो न

---

* अवशिष्यतेऽवश्यवक्तव्यं किमपि, तद्विलम्ब्यतां किञ्चित्, आत्मवायोरुद्गार-भूमावेव। अशुद्धिबहुल-पुस्तकप्रकाशनमधिकृत्य (१६८-१६९ पृष्ठयोः) या भर्त्सना कृता स्वामिभिः सा सर्वथा सत्यैव। एतन्नवीननिदर्शनन्तु प्रबन्धमञ्जरीमुद्रणमेव। सर्वात्मना प्रयतमानैरप्यस्माभि 'मुद्रायन्त्राधिदैवतस्य भीषणपिशाचस्यानुल्लङ्घ्यशास-नान्' न विशुद्धमुद्रणे साफल्यमवाप्तम्। भारते सर्वत्रैवाप्रतिहतशासनस्यापि मुद्रायन्त्र-पिशाचस्यात्र कलकत्तानगरस्थेषु मुद्रागारेषु विशेषतः प्राबल्यमनुभूतं, मन्ये प्रधानमिदं शासनस्थानं तस्य, राजधानीयं मुद्रायन्त्राधिदैवत-पिशाचस्येति। अतो मदनुरोधेनापि स्वामिपादानां मुद्रायन्त्रविषयिणीं तामुक्तिं मवलोक्य मुद्रायन्त्रपिशाचशासनजन्यम-शुद्धमुद्रणदोषं क्षंस्यन्त्येवोदाराः प्रियपाठकाः। ( सम्पादकः )

जिह्वियति । शास्त्रिभि र्नूनमित्थमनुभूतमपि भविष्यति, क्व वा ऽन्यथैतादृक्-स्वभावचित्रणकौशलमुपलब्धं स्यात् ! इति । अथ पश्यन्तु—

## 'पुंसामविमृश्य-कारिताम्'—

सूक्ष्मेक्षिकया, लेखस्यास्य शीर्षकाध्ययनमात्रेण विज्ञास्यन्ति दोषज्ञा अविमृश्यकारिता-रहस्यम् । शीर्षकं दृष्टिलक्ष्यमकृत्वा तु कवेर्हृदयं दुरवगाह्यमेव स्यात् । अहो प्रतिपदमुल्लसति कापि व्यङ्ग्य-कटाक्षवर्षाऽनामिकादेव्याः । अत्र पुंसो लक्ष्यीकृत्य व्यङ्ग्य-कटाक्षं क्षिपन्ती विच्छित्त्यैवोपहसति देवी पण्डित-म्मन्यान् नरान् । दृश्यतामेषां 'विमृश्यकारितायाः' पराकाष्ठा । इमे प्रखरधिषणाः पुमांसो विधवानां दुःखं सोढुमशक्नुवानास्तासां हृच्छूलं मूलतो लिलविषयाऽध्यापन्ति, उपदिशन्ति, ग्राहयन्ति च ताः सीतासावित्र्यादीनां पातिव्रत्यावताराणा माचरणीयं चरितम् । अहो प्रतीपः पन्थाः । सत्यमेवामी पयःकाम्यया पुङ्गवं पयो दुहन्ति । अहो पुंसामुपायोपेय-योग्यता-निर्धारण-योग्यता ! नूनं कालान्तरे ऽपूर्ववैज्ञानिका इमे मृदोऽपि पटं पटादपि च मृदमुत्पादयितु-मुत्सहिष्यन्ते ! सेयं लोके कस्य न स्वल्पतरधियोऽपि विस्मयं कौतूहल-मुपहासञ्च न बलादकामनयापि जनयेत् **पुंसामविमृश्यकारिता** । अस्या भीषणनृत्यं शास्त्रिणां शब्देष्वेवात्रभवन्तः पाठका भोत्स्यन्त इति कृतं कालक्षेपमात्रफलेन विस्तरेण ।

अथ समाजिघ्रन्तु, पाठकमहाभागा मञ्जर्या द्वादशं पुष्पगुच्छायमानं प्रबन्धं

## 'संस्कृतभाषाया वैशिष्ट्यम्'—

इति यस्य नाम । यत्र प्रदर्शितास्ते शास्त्रिभिर्हेतवो यै र्ज्ञायते कथं संस्कृत-भाषा देवी वागिति व्यपदिश्यते । कीदृक् चास्ति वैशिष्ट्यमत्र-

भवत्याः सुर-सरस्वत्याः। अनेनानायासेनैव विज्ञास्यन्ति पाठकाः संस्कृत-भाषाया अद्वितीयमुत्कर्षम्। वयं तु शास्त्रि-सरस्वतीं यथा यथावगाहामहे, तथा तथा तन्निमज्जनजन्यं कञ्चिदलौकिकमेवामन्दमानन्दं विन्दामहे। भवतु, किमिति वृथा वागाडम्बरेण, सहृदयानां हृदयमेवात्र साक्षि भविष्यतीति।

इत्थं प्रबन्ध-मञ्जरी-सम्पादकानां निदेशमनुवर्तमानै रस्माभिः, यथामति सम्यक् समीक्ष्य परिचायिताः प्रबन्धाः।

अथेदानीं सामान्यतः शास्त्रिणो लेख-शैलीं परिशीलयितुमभिलषामः। आधुनिकानां देवीवाणी-समुपासकानां विदुषां मध्ये श्रीमान् शास्त्रिमहाशयः यत्सत्यं शेखरायतेस्म। अयञ्चोदञ्चन्नैसर्गिक-प्रतिभाप्रभाप्रसरः सुरभारती-चरण-कमलमञ्जुमञ्जीर-कलहंसकोऽपूर्व एव लेखनकलायामवर्त्तिष्ट। तदीयले-खाश्च माधुर्य-प्रसाद-सम्पदा व्यङ्ग्य-सम्पुटेन चात्मानन्दनिर्विशेषं विच्छित्ति-विशेषं पुष्णन्ति। तद्-गद्यबन्धः 'प्रायशो महाकवि-काव्यरसाल-मञ्जरी-सुहृत् पञ्चबाणं बाणमनुसरति, तत्प्रबन्धाः प्रायेण कादम्बरी-रसं स्वादयन्ते, स्मारयन्ति श्रीभोजसंसत्सभास्तारान् कविवरान्, चित्रयन्ति—नेत्रविषय-तामिवापादयन्ति प्राक्तन-कविराज-समाजान्। विद्योदये मुद्रिताः कतिचन निबन्धास्तु हृदयमकामयतोपि विद्विषतोऽपि पदयोजन-मात्रविदोऽपि हठाद् हरन्त्येव।

गद्यवत्पद्यबन्धेप्यकुण्ठितप्रतिभा एव शास्त्रिवर्या इति प्रबन्धमञ्जरी-मङ्गलाचरणात्मक-भवानी-प्रार्थनपद्यत एव सुकरमवसातुम्। इदमपरं मनोहरं तदीयं प्रार्थना-पद्यं पठ्यतां, कण्ठे क्रियताञ्च काव्य-रसिकैः।

"शर्वाणि! निर्वाण-पदं न याचे,
गीर्वाणभूयं नहि वार्थितं मे।

गीर्वाण-वाणी कृपया चिराय,
विलास-नृत्यं प्रतनोतु कण्ठे।"

स्वीयप्रबन्धेषु धार्मिक्याः सामाजिक्याश्च दशायाश्चित्रणे यथा शास्त्रिणः साफल्यं लब्धवन्त स्तथा नान्ये लेखका इति शक्यतेऽशङ्कं वक्तुम्। प्रबन्ध मञ्जरी-सम्पादकैः शास्त्रिणमुद्दिश्य लिखिते ( 'पद्म-परागा'भिध-लेखसंग्रहे मुद्रिते ) निबन्धे यथा प्रतिपादितं, समालोचन-कलायामपि शास्त्रिणां कोस्ति प्रतिस्पर्धी ! 'आर्यालहरी,' 'स्वप्नप्रभातं', 'अभिज्ञान-शाकुन्तलोत्तर-चरितयोः' इत्यादिषु 'विद्योदये' प्रकाशितं समालोचन-कौशलमपि कौतुकं जनयति। भट्टाचार्यस्य खण्डन-मण्डनप्रकारोपि सुतरामद्भुत एवाभूत्। कटूक्तयस्तु तत्साधु-स्वभावभीता इवावकाशमलभमाना नोपसर्पन्तिस्म तत्सविधम्।

किंबहुनोक्तेन, सर्वमपि विद्योदय-सम्पादकानामत्यद्भुतमाचरितं किमपि लोकोत्तरत्वमेव व्यनक्तिस्म।

वयं च सारासारविवेचिन्या मत्या साधु बहुश आमृश्य ब्रूमहे यद् हृषीकेशशास्त्रिणां लेख-शैलीमनुशीलयतां पठतां वाचयतामभ्यस्यतां शृण्वतां व्याहरताञ्च संस्कृतमतीनां छात्राणां सम्भविन्यतितरामुपकृतिरिति निःसंशयमेतत्। एतदर्थं च वयं छात्रान् प्रोत्साहयामः शुभ-चिकीर्षया हित-सम्मतिमनापृष्टा अपि दद्महे, यत्ते भूयोभूयोऽभ्यसेयुरिमान् मञ्जरी-प्रबन्धान्। शास्त्रि-परीक्षार्थिनां काव्यतीर्थमुत्तितीर्षूणाञ्च महदेतेन निबन्धजातेनोपकृतं भविष्यतीति। तथाहि निर्मायमाणमं प्रबन्ध-मञ्जरी-प्रस्तावनायामाप्ततमै-र्महामहोपाध्यायैः श्रीगिरिधराचार्यपादैः।

परिचयोपसंहृतौ साहित्य-सुधा-सौहित्य-शीलान् विबुधानपि सप्रमोदं निमन्त्रयामो यत्तेपि भट्टाचार्य-प्रबन्धरसमास्वाद्याऽऽत्मानं कृतार्थयन्त्विति, यत्सत्यं परमं सन्तुष्टा भविष्यन्ति ते। इदञ्च स्वानुभवेन मुक्तकण्ठं समर्थयिष्यन्त्यस्मन्मतम्—

"यः पीयूष-मयूख-धामनि सुधाधाराच्छ-कच्छेपि यः,
क्षुभ्यत्क्षीरसमुद्र-सान्द्रलहरी-लावण्यपूरे ऽपि यः।
यः कान्ताधर-पल्लवे मधुरिमा नासौ समुद्गाहते,
'भट्टाचार्य-विपश्चितः' खलु वचोवीचि-समीचीनंताम् ॥" इति।

विदुषां विधेयौ—

*श्रीहरिदत्त-काशीनाथशर्माणौ*

* *
*

ॐ

# सम्पादकीयं वक्तव्यम्

## ( प्रबन्ध-प्रकाशन-कथा )

महानयं प्रमोदावसरो यदद्य समुपह्रियते 'प्रबन्ध-मञ्जरी' नाम गद्यनिबन्ध-संग्रहः सुरभारती-भक्तेभ्यः सहृदयेभ्यः ।

चिराय चेतसि समारोपितो मनोरथतरुरद्य परमेशकृपया फलेग्रहिः सञ्जातः । पञ्चत्रिंशत्समाः समयः समतीयाय, छात्रावस्थायामधीयानस्य 'विद्योदयं' मम हृदये समुन्मिमेषैषा संकल्प-कलिका, 'सति समये विद्योदयात् संगृह्य ते ते प्रबन्धा अवश्यं प्रकाशनीयाः, यानधीत्याहमिवान्येपि संस्कृताध्येतारो विद्यार्थिनः समुपकृताः संजायेरन्निति ।' तदानीमेव विद्योदयस्य ग्राहकत्वं प्राप्तवता मया १८९० खृष्टाब्दादारभ्य मुद्रिता विद्योदयस्य दुरवापाः समस्ताः संख्याः ( या इदानीं सर्वत्राप्यलभ्याः सन्ति ) सुमहता यत्नेन सञ्चित्य सञ्चित्य संरक्षिताः, रक्षकेणेवास्ततन्द्रं शेवधिवद् गोपायिताश्च ।

कथङ्कारं तत्तेषां विद्योदय-प्रबन्धरत्नानां प्रकाशनं सुकरं स्यात्, केनोपायेन विद्योदय-विधातारो भट्टाचार्यपादाः प्रबन्ध-प्रकाशनायानुमन्तु मपूर्णांश्च तेषु कांश्चित् पूरयितुं पूर्णांश्च पुनरालोचनेन परिष्कर्तुं प्रार्थयित्वानुकूलतां नेयाः, कृतेऽप्यर्थने ऽनुमंस्यन्ति स्वीकृत्या चानुग्रहीष्यन्ति न वेति को वेत्ति । प्रकाशनाऽनुमत्या सफलीभूतायामप्यस्यामर्थनायामर्थसापेक्षया मुद्रणादिव्यवस्था

कथमनुष्ठेया; कोन्वस्मिन् सर्वथा फलशून्येऽनर्थके च व्यापारे ऽर्थसाहाय्यमाचरिष्यति! अथाश्वरहितेन रथेनेव साहाय्यमन्तरा पङ्गुना मनोरथेन प्रबन्धमुद्रण-भारोऽयं कथं वोढुं शक्येत?

प्रबलेऽस्मिन् कलि-काले, हसति संस्कृत-संप्रदाये, दिवङ्गतायां देववाण्यां, म्लेच्छतामापन्ने भूदेव-कुले, "ब्राह्मणेन निष्कारणमिंग्लिशभाषाऽध्येया ज्ञेया चेति" नवीनं शासनं स्वीकृत्य सर्वात्मना श्रुतिमिव राजभाषामभ्यस्यति द्विजवर्गे, सुचिरं ब्राह्मणवर्ग-संपर्कात् संक्रान्तपातकायामिव प्रभविष्णुब्राह्मणेतर-समाजनेतृसमाज्ञया स्वराज्यप्राप्ति-बाधकतया दण्डनीय-दुर्गुणत्वेन गण्यमानायां संस्कृत-चर्चायां, सबहुमानं प्राकृत-गुणगानं गायति 'लीडर'-लोके, कर्णविवरं बधिरयति राष्ट्रभाषा-डिण्डिमनादे, सन्ध्यार्चनादि-धर्मानुष्ठानेभ्योऽपि बहिष्कृत्य देवभाषां, तत्स्थाने बलादादेष्टु मिष्टायां राष्ट्रभाषायाम्; इत्थंभूते व्यतिकरे संस्कृतप्रचार-व्यापारो हि प्रमत्त-जनव्यवहारमनुहरतीति नास्ति संदेहलेशोऽपीत्येवमादिभिश्चिन्ताशतै राचान्तचित्तः सुचिरं व्यचिन्तयं, न चाध्यगच्छं कमप्यभ्युपायम्। सर्वतो निराशाजनकेऽपि वायुमण्डले, विघ्न-वात्या-पराहतोऽपि मानस-कुटीरकोणे प्रज्वलन्नाशा-प्रदीपोयं यन्नो निर्वाण-दशामभजदत्रादृष्टमेव प्रबलं कारणं मन्ये। भवतु, संकल्पं तं सफलयितु-मनुकूलं कालं प्रतीक्षमाणस्य चिन्ताचुम्बितचेतसो मे गणरात्रं व्यत्यगात्। अथैकदा प्रबन्धमुद्रणविचारं दृढीकृत्य ज्वालापुरीये महाविद्यालये वर्तमानेनानेन जनेन चिरराय चिन्तितोऽसौ विचारो विद्वन्मूर्धन्यानामभिन्न-हृदयानां सुहृद्वराणां श्रीभीमसेनशर्मणां पुरः प्रत्युपस्थापितः। ते तु हृष्टेन चेतसा प्रीति-विस्फारितेन चक्षुषा सप्रमोदमन्वमोदन्तेमं प्रस्तावम्। ततस्तदर्थमर्थ-चिन्तायामुपस्थितायां कतिभिश्चित्-सम्पदा-समर्थैः सुरभारती-भक्तैः साहाय्यकं

वरणीयमित्यन्तो निरचीयत। रजतमुद्राणां शतकत्रयं कार्यस्यास्य संपादनेऽल-मिति तदा निरधार्यत, पञ्चदश वा विंशतिर्वा संस्कृतसाहित्यरसिकाः स्वल्प-शोऽप्यर्थमात्रां वितरेयुस्तदा खल्विदं मनीषितं सुकरं स्यात् कार्यपरिणतं विधातुम्। इत्यादिकं निर्धार्य श्रीभट्टाचार्याणां विद्योदय-सम्पादकमहाभागानां पुरतः प्रस्तावोयं पत्रद्वारा प्रहितः। प्रार्थिताश्च ते यदि तत्रभवन्तो भवन्तः प्रकाशयितुमिष्टानां निबन्धानां मनाग् दृष्टिपातेन पुनरालोचनया यथोचितं परिवर्तन-परिवर्धनादिकं तथाऽपूर्णानाञ्च केषाञ्चित् पूर्तिं विधाय प्रकाशनानु-ज्ञयाऽनुगृह्णीयुस्तदा सुतरां चतुरस्रतामापन्ना इमे प्रबन्धा अस्माभिर्मुद्रयितु-मभीप्सिताः। ते तु निसर्गदयालुतया वा स्वभावसौजन्य-प्रवणतया वा ऽप्रचार-पङ्कनिमग्नानां विद्योदय-गवीनां पुनरुद्धारदिदृक्षाप्रमोद-प्रेरणया वा प्रार्थनामिमां स्वीचक्रुः, हर्षप्रकर्षं प्रकटयन्तश्च लिखितवन्तः—

"श्रीरामः शरणम्।

भाटपाड़ा, २४ पर्गना
१६ मार्च, १६१२

"स्वस्ति श्रीमत्स्वस्मास्वकृत्रिमस्नेहवत्सु पण्डितप्रवरेषु सादरं विज्ञापनमेतत्—

श्रीमतां प्रत्यक्षरस्नेहसद्भावसूचकं पत्रं यथाकालमधिगतं मया। तद-धिगत्याद्योपान्तं द्विस्त्रिः पठित्वा च धन्योस्मि संवृत्तः। मन्ये च तत्तत्-प्रबन्धलेखन-परिश्रमं सफलं संजातमद्य। वस्तुतो नाहमस्मि तथाविध-गुणानां पात्रं, ये खलु कृपालुभिः श्रीमद्भिर्मय्यारोपिताः। भवन्ति खलु लोकोत्तरमहिमसम्पन्ना विद्वांसः प्रायशोऽर्थवादनिपुणाः स्वभावत एव। मत्प्रशंसापराणि भवदीयश्रुतिमधुरवचनान्यर्थवादरूपाण्येव प्रतिभान्ति मे।

एतैः किल वचनैश्चिरकृतज्ञातापाशेनाऽऽबद्धोऽस्म्यहम् । किं ब्रवीमि नास्त्यधुना बहु भाषितुं शक्तिर्मम । श्रीमद्भिः कृपया क्षुद्रेऽपि मयि या प्रार्थना कृता सा सर्वथैवानुमता । श्रीमन्तो यथेच्छं विद्योदयप्राचीन-निबन्धान् मुद्रयितुं प्रभवः, किन्तु तैः सहान्यदीयप्रबन्धानां साङ्कर्यं न कार्यम् । अपिच ये नाम प्राचीनप्रबन्धाः श्रीमद्भिः पुनर्मुद्रयितुमीप्सितास्ते सर्वे कृपया मुद्रायन्त्रालये प्रेरणात् पूर्वं मत्सकाशे प्रेषणीयाः । अहन्तेषां स्थानविशेषेष्वावश्यकं परिवर्त्तनं परिवर्धनं संशोधनं च कृत्वा तथाऽसम्पूर्ण-निबन्धस्य पूर्णतां विधाय, कामपि प्रस्तावनां लिखित्वा पूर्वं संयोज्य श्रीमत्समीपेऽविलम्बं पुनः प्रेषयिष्यामि तान् । प्रेरयिष्यामि चोपरि-तनपत्रस्य ( Title page ) प्रकारप्रतिलिपिं तैः सह ।

श्रीमतामेतत्साधुसंकल्पसमुत्साहितोऽयं प्रबलवार्धक्यग्रस्तोऽपि पुनर्नवीनीकृतः । विद्योदयस्तु वार्धक्यमुलभशैथिल्यकवलितोऽपि नास्तमुपगतः । प्रकाशते सोऽधुनापि; किन्तु मुद्राकरदोषेण न नियतसमयमनुसरति । यदि श्रीमतां सुहृत्सु केचिदनुग्रहेण जिघृक्षवो भवेयुस्तदा वात्सरिकैकरौप्यमूल्येन ते लभेरंस्तम्······"

श्रीमतां—

हृषीकेशशर्म्मणः शास्त्रिणः ।"

शास्त्रिणामित्थं स्वीकृतिमुपलभ्याहं तदुपकण्ठमुपाढौकयं मुद्रयितुमिष्टं प्रबन्धसंग्रहम् । ते तु तस्मिन् कुपितवाते वार्द्धक्यपीतसारे वर्षीयसि वयसि वर्तमाना अपि युवकजन-सुलभेनोत्साहेनातीवतत्परत्वेन निबन्धान् संशोध्य परिवर्त्य परिवर्ध्य च द्रागित्येव न्यवीवृतन् ।

अथ मुद्रणचिन्ता चेतसि पदं चकार। क्व मुद्रयन्तामिति, विशेषचिन्ता-कारणं तु—शास्त्रिणो ह्यात्मनैवान्तिमं मुद्रितं निदेशनपत्रम् (Last Proof) द्रष्टुमभिवाञ्छन्ति स्म। तैरित्थं स्वाभिलाषः पत्रे प्रदर्शितः—

"······श्रीमतां प्रूफपत्र-दर्शननैपुण्यं प्रति नास्ति मम स्वल्पोपि संदेहः, मत्तोप्यधिकाभिनिवेशेन श्रीमन्तः प्रूफपत्रं द्रक्ष्यन्तीति च मे निश्चयः। तथापि स्वकृति-ममत्वेनान्तिम-प्रूफपत्रं द्रष्टुं बलवती मे स्पृहा वर्तते। यदहरेव तदत्रागमिष्यति तदहरेव तदवलोक्य प्रतिप्रेषयिष्यामि ; इत्थं न विशेषविलम्बशङ्का कार्या। यद्येवं व्यवस्था मुद्रायन्त्राधिकारिणां भृशमसम्मता भवेत् तदाऽगत्या निरोधव्या मया सा स्पृहा"— (१३-१२-१६१२)

सर्वात्मनाभिनन्दनीयापि शास्त्रिवर्याणामियं स्पृहा कथं सफला विधेयेत्य-पराऽप्रतिविधेया चिन्ता दुर्लङ्घ्या विघ्नशिलेव मनोरथपथमुपरुरोध। हन्त प्रतिहतगमनं गमनोन्मुखं कार्य-शकटम्! यतो नाऽभूत्कश्चन मुद्रणालयो निकटवर्ती येन श्रीभट्टाचार्याऽभिलषितानुरूपतया विधित्सितः प्रबन्धोऽनाया-सेन विधेलिमः स्यात्। ये हि मुद्रणालया मुद्रण-सम्पदा सम्पन्ना विख्याताश्च साधु-मुद्रणकर्मणि, शक्ताश्चान्यत्र प्रूफपत्रप्रेषणे, ते द्रविणमात्रामतिमात्राम-याचन्त, सुलभाश्च दुर्विधास्ते तावति दूरे—दविष्ठे भट्टपल्लीस्थाने—प्रूफपत्राणि प्रेषयितुं नानुमेनिरे। भीषणेयं समस्या-सुरसा दुष्पूरं विघ्न-वदनं वितत्य पुरस्ता-दुपस्थिता! किमत्र प्रतिविधेयं, कश्च सुगमः पन्था अवलम्बनीयः!

अथ चेतसा संख्यायमानेषु सीसकाक्षरयोजकागारेषु श्रीदुर्गाप्रसादगुप्ते-नाधिकृते कलकत्ता-नगरस्थान्यतममुद्रण-यन्त्रे दैवाद् दृष्टिर्निपतिता। मयाऽनुयुक्तो गुप्तमहोदयोऽल्पेनैव व्ययेन सहर्षं मुद्रयितुं प्रत्यज्ञासत। प्रारब्धं च मुद्रणकर्म।

परं सर्वङ्कषी भगवती भवितव्यता केन वा निरोद्धुं शक्यते ! प्रथमप्रूफपत्राणि सोत्कण्ठं प्रतीक्षमाणे शास्त्रिवर्ये मुद्रणालयतः पत्रप्राप्तेः पूर्वमेव दुर्दान्त-कृतान्त-प्रेरितो मृत्यु-व्याधिरतर्कितपातं प्रादुरभूत्। सिद्धौषधैरप्यसाध्येन प्राणाचार्यैर्भिषग्वरैरप्यचिकित्स्येन प्राणापहारिणा तेनाऽऽक्रान्ता भट्टाचार्य-पादा स्तत्यजुः पाञ्चभौतिकं वपुः, सह प्रूफपत्र-दिदृक्षया, सुहृज्जनस्य वाष्प-बिन्दुभिर्बान्धववृन्दस्य च निवापाञ्जलिभिः !

एवमसौ सुरभारत्याः सुपुत्रः संस्कृताम्भोनिधि-मन्दरः, गुणैर्गरीयान् यशसा महीयान्, विद्वन्माला-मध्यमणिः साधीयान् समर्थकः प्राचीनार्य-संस्कृतेः, अवष्टम्भो वर्णाश्रमव्यवस्थायाः, अवलम्बः साधुभाव-रोलम्बानाम्, उपघ्न-तर्कलेखनकला-लतायाः, पुम्भावापन्न-सरस्वती-मधुरक्वणत्कृतिरणत्कण्ठवर्ति-नूपुरक्वाणो जन्मान्तरापन्नो बाणः सहसैव न्यलीयत। हा हन्त ! कष्टम् !

"ध्वस्तः काव्योरु-मेरुः कविविपणिमहारत्नराशिर्विशीर्णः,
शुष्कः शब्दौघसिन्धुर्विलयमुपगतो वाक्य-माणिक्यकोशः।
दिव्योक्तीनां निधानं प्रलयमुपगतं हा हता हन्त वाणी,
'भट्टाचार्ये' ह्यु वाणी-प्रणयिनि विधिना शायिते मृत्युशय्याम्।"

हन्त भट्टाचार्याणामिदमन्तिमं मनीषितं ( प्रूफ-पठनरूपम् ) नापूर्यत दैवहतकेन, सहैव नीत्वा लोकान्तरं जग्मुः। एवं प्रत्यूह-प्रतिरुद्धा मनोरथ-पथा नाम ! सत्यमुक्त मभियुक्तैः—

"चिन्तयत्यन्यथा जीवो हर्ष-पूरितमानसः।
विधिस्त्वेष महावैरी कुरुते कार्यमन्यथा॥"

अथ सहैव नीत्वा प्रूफपठनाभिलाषां लोकान्तरं प्रस्थितेषु शास्त्रिपादेषु, केन विलोक्यन्तां प्रूफ-पत्राणि, इति विचिकित्सायां समुपस्थितायां, श्रीभव-

विभूतिभट्टाचार्यमहाशयो मया विज्ञप्त:। क्रियतां, कार्यतां वा केनापि प्रूफपठन-निपुणेन कार्यमेतदिति। तेन तु सौम्य-शिरोमणिना प्रियवरेण प्राय: सर्व एव भट्टपल्लीनिवासिन: कलकत्तानगरी-स्थाश्च परिचिता: पण्डिता: प्रार्थिता:, परं तेषु नैकोऽप्येतत्कार्य-सम्पादनपटु-रुपलब्ध:। कश्चिन्नागराक्षरवाचनेऽसमर्थ:, कश्चित् संशोधनकलानभिज्ञ:। इत्यन्ततो गत्वाऽगत्याहमात्मानमेव तत्कार्यकरिष्णुं पश्यन्नप्रभविष्णुरपि तद्धुरि न्ययूयुजम्। एषु वासरेषु मया 'बुलन्दशहर'-प्रान्तीये' अहिहार-( आहार ) —नामके ऽग्रहारे वसता विहारि-सप्तशत्या भाष्यं विरच्यते स्म। अहिहारस्य वाष्पयानावस्थानस्थानतो विदूरत्वेन मुद्रितपत्र-( Proofs )-संशोधनपर्या-वर्तने कालापेक्षिणी अभूतां, तथा च दशभि र्द्वादशभिर्वाऽहोभि रेकफर्मामुद्रण-कार्यं सम्पद्यते स्म। एवंगते गते सार्धद्विमासे काले केवलं पत्रसञ्चय-षट्कमात्र-ममुद्रयत*। एतावतैव च प्राकीर्तित: श्रीमान् गुप्तमहोदयो मुद्रणालयात् सम्बन्धमच्छिन्त। तत्स्थानाभिषिक्तश्च नव्योऽभव्य: प्रबन्धकस्तावति दवीयसि स्थाने संशोधनार्थं प्रूफ-पत्राणि प्रेषयितुं नानुमेने। एवञ्च मुद्रणकार्यं व्यरंसीत्। तदनु शीघ्रमेव स वैदेशिको महाऽऽहव: प्रारभत। ततश्च कर्गलव्ययस्तेन च मुद्रणव्यय: एवमन्येऽपि प्रथमं साधारणत्वेन गण्यमाना अनेके व्यया: पिण्डिता भूयांसं धनराशिमपेक्षांचक्रिरे। तस्य चात्र कुत: पूर्ति-सम्भावना।

दुर्दैवादित्थं विरते मञ्जरी-मुद्रणे तत्र स्थापितानि मुद्रितपत्राण्यनाय्यन्त, तानि च सद्मान्त:प्रघाणे निहितानि शनै: शनैरुपजिह्विकानां जिह्वालताभि-

* एतत्पुस्तकान्तर्गत ५४ पृष्ठस्थ-'भारतीयशास्त्रेषु कापीति'-पाठपर्यन्तो भाग-स्तस्मिन् प्राथमिके समुद्योगे मुद्रित आसीत्।

राश्लिष्यन्ते स्म। मम बहिरवस्थानेन तत्पर्य्यवेक्षणस्य यथारीत्यभावात् सर्व-घस्मर-कालप्रतिनिधिभिरिव वम्रीभि र्भक्षितानि, कीटैः कवलितानि कारणात्म-तामापन्नानि तानि। इत्थं सकृद्‌विहितः प्राथमिकः समुद्योगो नैष्फल्यमवापत। परं मुद्रणविचारार्चिः शोकधूमायिता हृज्जरत्तृणनिकरेऽन्तरान्तरा प्रकर्षेण दीप्यतेस्म। हन्त! ये सुहृदोऽस्मिन् कर्मणि समुत्साहदानेन प्रावर्तयँ-स्तेप्येकैकशो मामसहायं हित्वा देवलोके हृषीकेशपर्षद्-रत्नतामिवाप्तुं, 'नाधुना मञ्जरी-मुद्रणप्रत्याशाऽपि, तानि मुद्रितानि पत्राण्यपि हापितानि, निराशा-मिहिका-मुकुलितेन पद्मेनेति' वाचिकमिव श्रीहृषीकेशं वक्तुं महाप्रयाणं दत्त-वन्तः। अवसाने चाभिन्नहृदयं मित्रं, अपात्रं दुर्गुणानां, महाऽमत्रं सौजन्यस्य, पत्रञ्च साधुतायाः, महाविद्यालय-मुख्याध्यापको विद्वद्वरिष्ठवरिष्ठेनः श्रीपण्डित-भीमसेनोऽपि विमुच्य स्नेहं, भङ्क्त्वा प्रेमपाशं, गलहस्तयित्वा सौहार्दं, मामेकपदेऽजहात् †। तानि मुद्रणावशिष्टानि हस्तलिखितानि प्रबन्धपत्राण्यपि शनकै र्जीर्यन्ते स्म।

एवमतिक्रामति काले 'पद्मपरागं' (हिन्दीभाषामयं स्वकीयं प्रबन्धसङ्ग्रहं) मुद्रापयितुमहं गते श्रावणे मासि कलकत्तानगरं पर्यापतं, सह शास्त्रिवर्यस्य तेन निबन्ध-संग्रहेण। अवसिते 'पद्मपराग'-मुद्रणे 'प्रबन्ध-मञ्जरी'-मुद्रणविचारं केषाञ्चिन्मित्राणां पुरतोऽवास्थापयम्। यदि नाम प्रकाश्येरन्नमी प्रबन्धा-स्तदा भवेत् सुरभारती-समुपासकानां कृते किमपि कृतज्ञतास्थानम्। सन्तुष्येच्च दिवंगतानां श्रीहृषीकेशशास्त्रिणामात्मापि, मम च निर्वाणमुपेया-च्चिररात्राय चितेव चेतसि प्रज्वलन् मित्रऋणानपाकरणेन्धन-समिद्धश्चिन्ता-

† एतद्-वियोगव्यथायाः करुणकथा तु 'पद्म-परागे' पण्डित-श्रीभीमसेन-शर्माभिधे निबन्धे द्रष्टव्या।

वह्निरिति । ते तु परोपकारायत्तचित्ता: सहर्षं प्रस्तावेनामुना समगंसत । एषा संक्षिप्ता प्रबन्ध-प्रकाशन-प्रत्यूह-कथा ।

अथ पुनरादित एव प्रारब्धं मुद्रणकार्यं, तच्चाजस्रमाधि-व्याधि-पराहतेन कर्तव्यानुरोधात् प्राणाधिकं परिश्राम्यतापि मया कथं कथमपि त्रिभिर्मासै: सम्पूर्णतामनीयत । परं दुर्गानन्दस्वामिभिरात्मत्रायोरुद्गारे भृशं प्रशंसितस्य मुद्रायन्त्राधिदेवतस्य भीषण-पिशाचस्या ऽदमनीयाद् दौरात्म्यान्न विशुद्धमुद्रणे साफल्यं लब्धमिति नितान्तं खिन्नोऽस्मि । लज्जितोस्मि च शास्त्रिमहाभागानां स्मारं स्मारं तां विशुद्धमुद्रणाभिलाषां यया प्रणोदितास्ते स्वात्मनैवान्तिमं प्रूफपत्रं द्रष्टुमाकाङ्क्षन्ति स्म । हन्त नायं मुद्रणावसरस्तज्जीवनकाले-ऽलभ्यत । पश्चाद्विहितस्तु प्रयत्नो न तन्मनोरथानुसारं साधु समपद्यतेति क्षते क्षारमिवासह्यं प्रतिभाति, बलवद् दुनोति च मानसं, येनास्मिन् हर्षा-वसरेऽपि न सन्तोषोऽनुभूयते । अथापराधमिमं मूर्ध्ना प्रणिपत्य क्षमा-पयितुं भृशं तरलिते चक्षुषी तं गवेषयत: प्रबन्ध-नवयुग-प्रवर्तकं विद्योदय-विधातारं तत्रभवन्तं सुगृहीतनामधेयं भट्टाचार्यपादं, परमनवाप्य तं लक्ष्यशून्ये सती स्थिते भवत: । भवतु, नास्त्युपाय: ।

यद्यपि पुस्तकान्ते शुद्धिपत्रसयोजनं नाम भारतीय-मुद्रायन्त्रमुद्रितेषु पुस्त-केषु शिष्ट-परम्पराचारपरिप्राप्तत्वादवश्यानुष्ठेतामावहतीति सार्वजनीनमेतत् । अतस्तदर्थं न किमपि विशेष-वक्तव्यमपेक्ष्यते । तथापि भट्टाचार्याणामन्तिम-प्रूफपत्रदिदृक्षात्मिका बलवती सा 'स्पृहा', वारं वारं किमपि वक्तुं बलात् प्रवर्तयति । अतस्तद्विषयेऽत्र किञ्चिदुच्यते ।

शास्त्रिभि: संशोधितप्रबन्ध-सग्रहमधिकृत्य यानि [illegible] पत्राणि मदन्तिके प्रहितानि, मन्ये तान्यधीत्य सुस्पष्टमेतद्भविष्यति कथमशुद्धि-सद्भावशंका

तज्जन्या चाऽन्तिम-प्रूफपत्र-दर्शन-स्पृहा तान् बलवद् व्याकुलयति स्म । अथ च विहितेऽपि प्रयत्ने किन्तत् कारणं येनाऽशुद्धीनां न सम्यङ् निराकरणं जातमित्यत-स्तेषां पत्राणामत्र प्रकाशनमुचितं प्रतिभाति ।

संशोधित-निबन्धजातस्य प्रत्यावर्तने विलम्बमवलोक्य मया तत्कारणं पृष्टाः शास्त्रिपादा एतदाशयकं पत्रं प्रेषितवन्तः—"प्रबन्धेषु परिवर्तनादिकं वङ्गाक्षरैरनुष्ठितम् । नागराक्षरलेखने पटुरिदानीमत्र दुर्लभः । उपलब्धे तस्मिन् नागराक्षरे लेखयित्वा प्रेषयिष्यामीति विलम्बहेतुः ।"—"भवन्तस्तु नागराक्षरविन्यासे स्वयं सुतरां समर्था आसन्, तत्तदक्षरैरेव परिवर्तनादिकं किन्न विहितम्, कथञ्च तदर्थमन्योऽपेक्ष्यते ? ।"—एतदुत्तरे पत्रमिदं प्रहितवन्तः—

"......सत्यमहमनर्गल-नागराक्षरलेखन-समर्थ आसम् । सत्यञ्च मम लेखनीतो वंगाक्षरेभ्यो नागराक्षराण्यनायासनिर्गतानि बभूवुः । किन्तु "ते हि मे दिवसा गताः" इदानीं वार्धक्यसुलभदौर्बल्यपरिगृहीतोऽहं लेखने सर्वथैवापटुः संवृत्तः । लेखनावसरे हस्तकम्पप्राबल्यान् न सुस्पष्टान्यक्षराणि निर्गच्छन्ति मे लेखनीतः । बाल्यसंस्कारवशाद् वंगाक्षरैः कथं कथमपि लिखितुं प्रभवामि । तत एव प्रबन्धांशविशेषपरिवर्तनादीनि वंगाक्षरैरेव कृतानि । भवतु, तानि पुनः नागराक्षरेषु सन्न्यस्यैव श्रीमतां समीपे प्रेषयिष्यामि ।" (५।१०।१९१२)

तदनु स्पष्टास्पष्टै राकृत्या बाहुल्येन वङ्गलिपिमनुहरद्भि र्नागराऽऽभासैरक्षरै-र्लेखयित्वा शास्त्रिभिः प्रेषिताः प्रबन्धाः । तेषां सुस्पष्टैरक्षरै र्मुद्रणयोग्यां प्रतिलिपिं छात्रैः कथमपि कारयित्वा सन्देहनिवृत्तये पुनस्तदन्तिके प्रेषितास्ते । तानवलोक्येदं विज्ञापयाम्बभूवुः शास्त्रिमहाभागाः—

"स्वस्ति श्रीमत्सु बहुप्रेमास्पदपण्डितकुलधुरन्धरेषु यथोचितप्रत्यभिवाद-नपूर्वक-सादर-सम्भाषणानि विलसन्तुतराम् । श्रीमतां 'अक्टोबर'-मासीय-षोडशदिवसीय-पत्रं, तत्रोल्लिखितं "भारतोदय"-पत्राङ्कद्वयञ्च यथा-समयं समधिगतम् । पठितञ्च मया, विज्ञातञ्च वृत्तम् ।······प्रतिप्रेष्यते भवत्प्रेरितं प्रबन्ध-त्रयं ; सर्वस्यैव च प्रबन्धस्यांशविशेषाः संशोधिताः परिवर्तिताश्च । अथ येन तथाविधपरिवर्तित-संशोधिताश्चांशा नागरा-क्षरेषु पुनर्लिखितास्तस्य नागराक्षरलेखे नाभ्यासो वर्तते । अयमेव च प्रथमोद्यमः । अथ स्थानस्थानेषु स्खलितान्यक्षर-विपर्यासाश्चावश्यं-भाविनः । किञ्च मयापि दुःसहकण्ठक्षत-प्राबल्यात्, जराशैथिल्याच्च प्रतिलेखनानन्तरं न समीक्षिताः प्रबन्धाः । अतः सानुनयं प्रार्थये श्रीमद्भिः स्वयमन्यैश्च संस्कृताभिज्ञैः साभिनिवेशमाद्योपान्तं पुनः प्रेक्षणीया एते प्रबन्धा येन सुविशुद्धं मुद्रिता भवेयुः । शक्यञ्चेन्मुद्रणा-वसरे सकृद् प्रूफपत्रं मम समीपे प्रेषणीयमहं तदविलम्बमेव प्रतिप्रेषयि-ष्यामि ।······" (३।११।१९१२)

पुनः पत्रान्तरेऽप्ययमेवाभिप्राय इत्थं प्रकटितः—

······"एतान् प्रबन्धांशविशेषानवलोक्य ज्ञायते मया येन खलु प्रथममत्र मदीय-वङ्गाक्षरस्य नागराक्षरे परिवृत्तिः कृता, तेनैव स्थानस्थानेषु प्रमादः कृतः । ततश्च तल्लिखितनागराक्षरावबोधाक्षमेण श्रीमन्नियुक्तलेखकेनेति । कारणादेतस्मात् प्रबन्धानामपरेष्वप्यंशविशेषेषु प्रमादजनितासङ्गतिदोष-स्यान्येषामपि भावविपर्ययादिदोषाणाञ्च सद्भावः शङ्क्यते मया । ततश्च सानुनयं विज्ञापयामि, यद्यत्र प्रूफपत्रं प्रेरितं न भवेत्तदा श्रीमद्भिः साभिनिवेशं सर्वं प्रूफपत्रं त्रिचतुरवारान् प्रसमीक्ष्य मुद्रणाज्ञा दातव्येति । यथा प्रबन्धा-

नामेषामुपरि समादरस्थाने सम्यगनादरः सहृदयानां न भवेत्। मम च प्रबन्धानिमान् द्वारीकृत्य विद्वत्समाजेषु किमपि दुर्यशो न भवेत्। तथैव सावधानं सम्पादनीयाः प्रबन्धा एते। सत्यपि श्रीमतां तथाविध-कार्यसम्पादने स्वतः प्रयत्ने तस्य दार्ढ्यविधानायैव प्रार्थनेयं ममेति विज्ञा-तव्यमिति।······” ( ६।२।१९१३ )

निगदव्याख्यातमेतेन पत्रजातेन शास्त्रिणां तत्सर्वमपि शङ्काकारणम्। एवमेतदशुद्धिबाहुल्ये बङ्गाक्षरतो नागराक्षरेषु परिवृत्तिः, श्रीभट्टाचार्याणां पुनः प्रबन्धानामनालोचनम्, कृतेपि शोधने प्रेसकर्मचारिणामप्रतिविधेयः प्रमाद इत्यादीनि पिण्डितानि हेतुः ( नतु हेतवः ) मया तु मन्देन यथामपि बहुलं प्रयतमानेनापि स्वीयाऽयोग्यतया यत्र पारितमशुद्धिनिराकरणे तेन महान्त-मनुतापमनुभवामि। सुहृद्वरसाहित्याचार्यश्रीशालग्रामशास्त्रिमहोदयोपज्ञं पद्यरत्नमिदमीषत्परिवर्तितमुच्चार्य च क्षमाशीलान् प्रार्थनीयान् पाठकान् प्रार्थये :—

“दुर्मोषो दोषसंघः क्षणमपि न दृढा शेमुषी मानुषीयं
वारं वारञ्च प्रूफाण्यपि कलयतस्तत् त्रुटि र्न व्यपागात्।
अद्धा बद्धाञ्जलिस्तद्गुणगणनिकषान् प्रार्थये प्रार्थनीयान्
जोषं जोषं विदोषं कलयितुमखिलं जोषमेवाऽऽनतोऽहम्॥”

इदमप्यत्र निवेदनीयं यद् भट्टाचार्यैर्मञ्जर्यां मुद्रितमादिमं प्रबन्धत्रयमेव पुनरालोच्य विशोधितम्। तत्र तृतीयस्य उद्भिज्जपरिषच्छीर्षकस्य प्रबन्ध-रत्नस्य ‘मनुष्यसृष्टिः खलु विधातु र्बुद्धिलाघवं प्रकटयतीति ( पृ० ५६ ) इत्येतावत्पर्यन्तो भाग एव विद्योदयस्य प्राचीनाङ्केषु प्रकाशित आसीत्, ततः परं सर्वोप्यंशो मदनुरोधाद् विरच्य प्रबन्धपूर्तिर्विहिता। अन्यच्च प्राथमिके

मुद्रणोद्योगे प्रथमं प्रबन्धत्रयमेव प्रकाशयितुं प्रस्तुत मासीत्। अपरे निबन्धास्त्वीदानीं मुद्रणसमये यथामुद्रितमेव वियोदयाङ्केभ्यस्त्वरित-त्वरितं संगृहीताः, शास्त्रिभिनते पुनरालोचिताः। एषु "दुर्गानन्दस्वामिन आत्मवायोरुद्गारः" प्रबन्धः शताधिकपृष्ठव्यापी सुमहान् मनोहरश्च वर्तते; विस्तरभिया स्थालीपुलाकन्यायेन तस्य कियांश्चिदेवांशोऽत्र समुद्धृतः। यद्यस्य द्वितीयमुद्रणवेला लप्स्यते तर्हि तमविकलमखिलं मुद्रयितु मभिलषामः, परमाधुनिकानां संस्कृतानुरागमाकलय्य दुर्विधमनोरथायितमेतत प्रतिभाति! भवतु, भूतभावनो भगवानेव वेत्ति, भविष्यति किं भविष्यतीति।

तदित्थं मञ्जरीविषये सर्वमन्यन्निवेदितप्रायं, येयं यादृशी चेति। इदानीं सदाचार-परम्पराप्राप्तं कृतज्ञताप्रदर्शनपुरःसरं धन्यवाददानमवशिष्यते। तत्रादौ तत्रभवद्भ्यः सर्वतन्त्रापरतन्त्रप्रतिभेभ्यः परमाराध्य-गुरुवरश्रीद्द्काशीनाथशास्त्रिचरणेभ्यो ऽनेकशः प्रणामपूर्वकान् हार्दिकान् परःसहस्रान् धन्यवादपुष्पाञ्जलीन् समर्पयामि। यैः खलु कृपापरवशैः शुभाशिषा सहामुया मञ्जर्या कृतार्थितोऽयं स्वीयः शिष्य-परमाणुः।

तदनु मान्येभ्यः सहृदय-सुहृद्भ्यो महामहोपाध्याय-पण्डितप्रवर-श्रीगिरिधराचार्यचतुर्वेदमहाभागेभ्यः प्रयणगर्भान् बहुकृत्वो हृदयतलोद्गतान् धन्यराशीन् वितरामि, यैः खलु गुणगृह्यै र्विद्वच्चेतश्चमत्कारिणीं स्वल्पीयसीमप्यर्थगुर्वीं प्रस्तावनां—तदन्तर्गतां पुस्तिकामुखावरणालङ्करणभूतामद्भुतां सूनृतसूक्तिरूपां (मुद्रयति वदनवित्रमित्यादिकां) आर्याञ्च विरच्य—विभूषितेयं मञ्जरी-सुन्दरी; भट्टाचार्यपाण्डित्यं निर्माय प्रशंसद्भिर्दर्शितञ्च सुमहत्सौजन्यम्।

भारत इव द्वीपान्तरेष्वपि पाण्डित्यप्रकर्षेण प्रथितमहिमानो महनीया भट्टाचार्य-सुहृद्वराः श्रीमन्तो महामहोपाध्यायवर्याः श्रीहरप्रसादशास्त्रि-

महात्मानोऽपि बहुलान् धन्यवादानर्हन्ति। अमीभिरिंग्लिशभाषामयीं शुभोदर्कां प्राक्कथनरूपां (Foreword) सम्मतिं विलिख्य विदितवेदितव्या व्यधायि राजभाषाभिज्ञा संस्कृतानुरागिणी पण्डितमण्डली। ( सम्पादकीयवक्तव्य-समाप्तौ सादरं सन्निवेशिता सा सम्मतिः )

अन्ये चापि सम्मतिप्रदानेनानुग्रहकर्तारः पण्डितप्रकाण्डाः सुभृशं प्रशंसनीया बहुशो वन्दनीयाश्च, तेषामिममुपकारभारमवनतेन मूर्ध्ना वहामि।

एवं प्रबन्धमुद्रणकर्मणि साक्षात् परम्परया वा प्रयोज्यभावेन प्रयोजकभावेनार्थादि-साहाय्यप्रदातृषु विश्वमित्रसञ्चालकं श्रीमूलचन्द्रमहोदयं, विशाल-भारत-सम्पादकं प्रवासिजन-सुहृत्तमं श्रीबनारसीदासचतुर्वेदिनञ्च भूयो भूयः सस्नेहं सदा संस्मरिष्यामि।

संवर्धयामि च भूयोभिराशीराशिभिः काव्य-वेद-व्याकरण-न्यायादितीर्थं सम्प्रति ज्वालापुरीये महाविद्यालये मुख्याध्यापक-पदभाजं ( स्वर्गीय-सुहृद्वर-पण्डितभीमसेनशर्मणां तनूजन्मानम्) प्रियवरं श्रीहरिदत्तशास्त्रिणम्। आयुष्मन्तं (साम्प्रतं हापुड़निकटवर्ति-असौड़ाऽग्रहारीय-श्रीयुतदेवीसिंहचतुरधुरीणप्रतिष्ठापित-सुप्रसिद्धदेशभक्त-श्रीरघुवीरनारायणसिंहसञ्चालित-संस्कृतविद्यालयस्य मुख्याध्यापकं ) काव्यालङ्कारतीर्थं श्रीकाशीनाथशर्माणं प्रेष्ठं ज्येष्ठञ्चात्मजम्।

इमौ हि मया 'प्रबन्ध-परिचय'-लेखने नियोजितौ, अनयोश्च सा कृतिर्मामसंभावितत्वाद् वा, आत्मीयत्वाद् वा, कृतिपाटवाद् वा ऽतूतुषत् कलया कलया। साधुकृतमित्युच्चारयन् वश्मि च तयोः प्रात्यहिकीं बालचन्द्रमस इवैधमानां लेखनशक्तिं ग्रन्थपरिशीलनभक्तिञ्च परेशम्।

एवं प्रायः संवृत्तमेव धन्यवाद-प्रत्यर्पणम्।

ओः शिव शिव! दिष्ट्या न कृतघ्नतापराधेन दूषितोस्मि, परत्रानेकगुण-

देयर्ण-बन्धनान्मोचित आत्मा, यदयमागत: स्मृतिपथं देवभाषायामिव मातृभाषायामपि काव्यकर्मण्यकुण्ठप्रतिभाप्रभो भव्यमूर्त्तिः सौजन्यनिधिर्विपश्चितामपश्चिमः सहृदयाग्रेसरो बहिरिवान्तरपि महत्या प्रभयोज्वलः, विभावसुरिव विप्ररूपधरो युवाप्यनूचानः श्रीमानपि श्रुतिमान् गाङ्गेयभवन-स्वामी प्रियपण्डितः श्रीगाङ्गेयनरोत्तमः शास्त्री। येन महानुभावेन न केवलं मञ्जरीमुद्रणे प्रत्युत स्वभवने वसतिं प्रदाय मम प्रवासक्लेशहरणे च बहु बहु साहायकमाचरितम्, सर्वथाऽऽत्मीयजननिर्विशेषं समुदार-सभ्योचितञ्च व्यवहृतम्। तत्किं बहुविधया वाचां परिपाट्या. साम्प्रतं केवलं तस्मै अजस्रं साधुवादान् ददिदं कृतज्ञतापाशबद्धं ममान्तरङ्गम्।

मञ्जरीकारस्य गुणैर्गरीयान् मध्यमः सूनुः सुतरां सौम्यस्वभावो मूर्त इव विनयो विद्याभूषणः श्रीमान् पण्डितवरः श्रीभवविभूतिभट्टाचार्य-एम० ए०-महोदयोऽप्यत्र सुभृशं प्रशंसनीयः। नितरां स्निह्यति मम मानसमस्मिन्, पुत्ररूपेण वर्तमानं श्रीहृषीकेशमेवाऽवैमि तमेनं प्रियवरम्।

प्रियचन्द्रदत्तशास्त्री श्रीभगीरथशास्त्री चापि धन्यवादपात्रं मन्ये तेन तेन कर्मणा। प्रूफपठनादिकर्मणि साहाय्यमाचरन् प्रियगोपालचन्द्रोप्याशीर्भाजनं समजनि।

आयुष्मान् प्राणेभ्योऽपि प्रेयान् कनीयाँस्तनयो रामनाथोपि मञ्जरीकृते सुचिरं प्रवासस्थेन मया स्नेहप्राप्तिवञ्चनक्लेशं प्रापितोऽपि धैर्यमत्यजन् काव्यकुटीर-कार्यकलापञ्च यथाविधि निर्वहन् हार्दिकेनाऽऽशीर्वचसा संयोज्यते। एवम्—

"अन्ये चापि महाभागा नामतो न स्मृता इह।
ये ते सर्वे प्रसीदन्तु धन्यवादान् भजन्तु च॥"

उपसंहृतौ चेदं भूयोपि सविनयं विनिवेद्य विद्वत्सु विरमामि—

"मूर्ध्नाऽहं विदुषां प्रणम्य बहुशः पादाविदं प्रार्थये,
यन्मौढ्यात्पदतोऽर्थतश्च गलितं भ्रष्टं तथा मुद्रणे।
तत्तत्सर्वमिदं सुशोध्य कृपया पश्यन्तु सन्तो ऽनघा
दोषान्मेऽविगणय्य दूषणनिधेर्दोषे गुणग्राहिणः॥"

इति

गाङ्गेयभवनम्
कलकत्ता,
श्रीवसन्त-पञ्चमी
संवत् १९८६ वि॰

विदुषां वशंवदः
**पद्मसिंहशर्मा**
( सम्पादकः )

*  *
*

# FOREWORD

By

*Mahamahopadhyaya Pandit Haraprasad Shastri*
*M. A. Ph. D., C. I. E.*

Pandit Hrishikesh Shastri, in many senses, was a remarkable man. Born in 1850, he died in 1913 at the age of 64. He was pre-eminently a Sanskrit writer, and his capacity for literary work was wonderful. Incessant work undermined his health; otherwise he might have lived for many years more. From his student-days, he was assiduous, painstaking and he never wasted any moment of his life. Born in the line of many distinguished Pandits of Bhatpara, it was early known that he would be one of the rising stars of the place. After finishing his *tol* studies in grammar, lexicon, literature and other subjects, he early conceived the idea of studying English, which was tabooed in the Pandit family all over Bengal in the middle of the last century. To indulge in his taste for studying English he had to leave Bengal and proceed to Lahore, where in a short time he passed all the Lahore University Examinations in the Oriental Faculty with distinction and the Entrance Examination too.

At Lahore, in a short time he made his mark, and was a favourite of the University authorities there. Dr. Lietner, the founder of the University was charmed with his Sanskrit composition, and he started the

Sanskrit magazine 'Vidyodaya' with the Shastri as its Editor. The "Vidyodaya" continued its useful, or I should rather say, its glorious career for more than fifty years. when after the death of tho editor and his supporters, it had to be stopped by his sons. It is no small credit to the Shastri that he conducted the paper single-handed for 44 years. He was the principal if not the sole writer of the magazine. His admirers have compared his Sanskrit prose composition with that of Banabhatta and other writers of ancient fame. Those who are not his admirers cannot but admire the variety and diversity of subjects he dealt with. The ancient Sanskrit literature was his principal theme ; but he often wrote on the current topics of the day ; and these are written in a light and humorous vein. To write in that vein in Sanskrit in the 19th century is certainly a very creditable performance. and the current topics were many and embraced the Hindu life in many of its aspects. But the Shastri undertook an impossible task,—a Sanskrit magazine in the 19th century saturated with European ideas, European mode of thinking and a love of European literature. How he conducted it for 44 years is what I believe to be a wonder and a miracle. Even Max Muller admired the Shastri's work, and I for myself can say that the VIDYODAYA was a delightful reading though I think with Macaulay that Sanskrit composition in the 19th century is but a hot-house plant and an exotic of costly growth. Yet I read some of the Shastri's papers in the Vidyodaya with interest and delight.

But the Shastri's literary activities did not end with the Vidyodaya. He prepared the descriptive catalogue of the Sanskrit Mss. of the Sanskrit College Library, Calcutta. The Catalogue has [been useful to all Sanskrit students and we are all thankful to him for what he had done in this line of work. He has also translated into Bengali 7 of the 28 tattvas of Raghunandaoa, and this has added immensely to the popularity of Raghunandana's works. The Supadma School of Sanskrit grammar is a compromise between the Panini's school of scientific grammar and the practical school of grammars of later age. It was composed in the 14th century at Mithila by a Maithil Pandit Padmanabha. But it is curious irony of fate that Mithila has rejected it and it has found a home in the Prosidency Division of Bengal and it is a standard work used by the Pandits of Bhatpara. The Shastri edited it with a commentary and erudite notes of his own. So his literary activities were not confined to the 'Vidyodaya.' They were many sided and vigorous.

Apart from his literary activites, the Shastri was a very good man,—absolutely free from vanity and pride. Everyone liked him and loved him for his meekness and humility. He was the rising star of the University at Lahore and he had a brilliant prospect before him. But when after several bereavements in the family his father felt himself very lonely, he gave up all that prospect and accepted a small appointment in the Sanskrit college, Calcutta, with the view of consoling his father. For reasons that I need not explain here his

position in the Sanskrit College was not at all bright. But he accepted it for the sake of his father.

I had the good fortune of being associated with him in the Sanskrit College for some years. I felt for him and did what was in my power to help him; but that was not much. But one thing I can confidently assert is that he was a rare character among the Pandits. I admired his meekness and always thought him to be a valuable friend.

I am very glad to see that Pandit Padmasinha Sharma Vidyavinoda of Bijnor, U. P. has written an account of the life of the Shastri and an apprecia-tion of his literary works. He has published some selections from his Vidyodaya. He is an admirer of the Shastri and has selected many fine pieces from the Vidyodaya which in the absence of the volumes of the magazine will afford instruction and entertain-ment to all lovers of Sanskrit.

---



"प्रतिमूर्तिरियं तस्य श्रीहृषीकेशशास्त्रिणः
यल्लेखनी-लतोद्भूता मञ्जरीयं विजृम्भते"

श्रीरामः शरणम्

## प्रबन्ध-रचयितुः

# संक्षिप्त-जीवनम्

( कस्माच्चित्तदात्मीयतः संगृहीतम् )

अस्ति खलु वंगेषु पूर्वसागराभिमुखं प्रस्थितताया भगवत्या भागीरथ्याः पूतप्रवाहविधौतपश्चिमप्रान्तो भट्टपल्लीतिसुप्रसिद्धो जनपदः। स हि कालीकाता-नगरीत उत्तरस्यां दिशि योजनत्रयमात्र-व्यवहितः।

इतः प्रायो द्विशतवत्सरपूर्व्वं नारायणेतिसुगृहीतनामधेयः कश्चिद्वशिष्ठान्वयसम्भूतः सिद्धपुरुषः स्वकीयालौकिकसिद्धजनोचितकर्म्म-परम्परावलोकनोदितभक्तिविस्मयातिशयाकृष्टचित्ततया स्वयं स्वीकृत-शिष्यभावेन हावलदारोपनामकेन तज्जनपदस्वामिना केनचिद् ब्राह्मणेन सानुनयमभ्यर्थितो यशोहरान्तर्गताया धूलियापुरेतिप्रसिद्धायाः स्ववास-भूमेः सदारापत्यः समेत्य तत्र वसतिं कृतवानिति श्रूयते। नारायणः खलु वंगेषु राढ़ीय-वारेन्द्र-पाश्चात्य-वैदिकादिबहुश्रेणीविभक्तेषु ब्राह्मणेषु पाश्चात्यवैदिकश्रेण्यन्तर्गतत्वेनात्मानमङ्गीकृतवान्; परं तदादिपुरुषः

किमुत्कलदेशीय उत महाराष्ट्रदेशोद्भवः किं वा कान्यकुब्जीय इति तु विशेषतो न ज्ञायते। प्रचरन्ति पुनरुपर्युक्तदेशत्रयान्यतमप्रसूतत्व-प्रख्यापका भिन्नरूपाः किंवदन्त्यः *। अत्यल्पीयसैवानेहसाऽत्रागतस्य तस्य वंशो विस्तृतिं लेभे, येन जनपदोऽयं समन्तात् तद्वंशीयैरेवा-धिकृतो बभूव। न केवलं वंशस्य तथाभूता विस्तृतिः, तद्वंशीयाश्च सदाचारवत्तया, समुज्ज्वलब्रह्मवर्च्चसेन, न्यायस्मृतिपुराणतन्त्राद्यशेष-पारदर्शित्वेन, समधिकधर्म्मनिष्ठया, अन्यैरपि च ब्राह्मणोचितसद्गुणै-र्वङ्गेष्वचिरेणैव महतीं प्रतिष्ठां लब्धवन्तः। प्रायः सर्व्व एव सत्कु-लजा वङ्गीयब्राह्मणाः परमाग्रहेण तान् दीक्षागुरुपदे प्रतिष्ठाप्य स्वयं शिष्यत्वमुपगम्य च कृतार्थम्मन्या बभूवुः। ततश्च गुरुतैव तेषां जीविका सञ्जाता। तेषां सदाचारवत्तायाः किमन्यद् बहु ब्रवीमि, यत्तेषु बहवः समयप्रभावाद् विपर्य्यस्तपूर्व्वभावा अपि पुनरिदानी-मप्यशूद्रप्रतिग्राहिणो निरामिषभोजिनो धर्म्मानुरागिणश्च वर्तन्ते, काम-यन्ते न च मनसाऽपि श्ववृत्तिम्। इत्थं विस्तृतिमुपगतस्य नाना-शाखासम्पन्नस्य नारायणवंशस्य कस्याञ्चित् पण्डितपरम्परालंकृतायां शाखायां ग्रन्थप्रणेतुरस्य जन्माभवत्। न केवलमस्य पितृकुलं माता-महकुलमपि सुप्रसिद्धगौतमगोत्र-'जाह्नम्'-भट्टवंशीयनामन्यतमं विद्वत्-परम्परालंकृतञ्च। जन्मसमयश्चास्य शकाब्दाः १७७२, वङ्गाब्दाः

* इदानीन्तु नानाप्रमाणैर्निर्णीतं यत् तदादिपुरुषस्तत्रभवान् श्रीगदा-धरः कान्यकुब्जदेशादेवागत्य वङ्गेषु वसतिञ्चक्रे। अधुनापि कान्यकुब्जे तद्वंशस्य शाखा विद्यते, इत्यपि श्रूयते'—इति प्रबन्धप्रणेतुरात्मजः श्रीभव-विभूति-विद्याभूषण एम० ए० भट्टाचार्यो मह्यमुक्तवान्। सम्पादकः।

१२५७ गौणज्यैष्ठस्य मुख्यवैशाखस्य वा कृष्णदशमी तिथिः। तदानीन्तनस्य पितृकुलं, मातृकुलञ्च सम्यगक्षुण्णमासीत्। तथाहि जन्मसमये पितृकुले पितामहचरणा मातापितृचरणावकृतदारपितृव्यचरणश्च वर्तमाना आसन्। पितृव्यचरणस्य परिणयस्तस्य शैशवावस्थायामेव बभूव। पितामहचरणास्त्वस्य नवीने वयसि दारकद्वयमात्रं प्रसूय परलोकप्रस्थितायां स्वपत्न्यां पुनर्दारपरिग्रहपराङ्मुखाः स्वयं माता च पिता च भूत्वा शिशुपुत्र-द्वयं सर्वप्रयत्नैः संवर्द्धयामासुः। निजविमातरञ्च समुचितभक्तिश्रद्धाभ्यां सम्पूज्य स्वगृहस्य सर्वाध्यक्षकर्म्मणि स्थापितवन्तः। मातृकुले च सदारा मातामहपादाः सपत्नीका मातुलाश्च त्रय आसन्। उभयत्र तु स एवैकमात्रं बालापत्यं जातः। ततश्चोभयपक्षीयाणां निरतिशयस्नेहभाजनमासीत्। अथ समतीते पञ्चमे वर्षेऽस्य यथाविधि विद्यारम्भः सञ्जातः। वर्षेणैकेनैव वङ्गाक्षराणां लेखने पठने चास्य नैपुण्यं सञ्जातम्, ततोऽसौ "सुपद्मारव्यं" पद्मनाभविरचितं संस्कृतव्याकरणं पठितुमारब्धवान्। त्रयोदशवर्षे वयसि तेन व्याकरणशास्त्रे समीचीना व्युत्पत्तिर्लब्धा, संस्कृतवाक्यरचनाशक्तिश्च प्रदर्शिता, विरचितानि चानुष्टुभा छन्दसा बहूनि सुगमगीर्व्वाणगिरा पद्यानि, व्याकरणमधीत्यैव तस्य हितोपदेशप्रमुखाणां बालपाठ्यसंस्कृतनिबन्धानां विनैव गुरूपदेशमर्थावबोधे शक्तिः सञ्जाता। अत्रावसर एव तत्पितामहचरणैस्तस्य तथाविधां शक्तिमवलोक्यानन्दपरम्परामनुभवद्भिः कयापि सर्वतोऽनुरूपया सत्कुलजया कन्यया सहास्य पाणिग्रहणकर्म महोत्सोत्तरं सम्पादितम्। पितामहचरणास्तस्य शिरोमण्युपाधिकानन्दचन्द्रनामानो वाग्मिनः सुकवयः सर्व्वशास्त्ररहस्यविदो वङ्गेषु तदानीं लब्ध-

प्रतिष्ठेषु विद्वत्स्वन्यतमा आसन्। न केवलमेते सुधीजनसहचरणां सर्व्वसद्गुणानामाश्रयभूता वपुरप्येषामखिलमहापुरुषलक्षणाङ्कितमाभ्यन्तरतेजोगाम्भीर्याभिव्यञ्जकमनन्यसाधारणं सकृद्दर्शनमात्रत एव दर्शकहृदयाकर्षकमासीत्।

अथ प्रकृतमनुस्रियते—ततो वर्षचतुष्टयं यावत् काव्यालङ्कारछन्दोग्रन्थानामनुशीलनं कृतमनेन। अथ सप्तदशवर्षे वयसि नव्यन्यायमध्येतुं प्रवृत्तोऽभवदसौ। प्रथमं वर्षमेकं महामहोपाध्यायश्रीयुतराखालदासन्यायरत्नसकाशादधीत्य, निजपितृव्यपादानां तर्करत्नोपाधिकयादवचन्द्रशर्मणां शिष्यत्वं प्रतिपेदे। न्यायशास्त्राध्ययनसमय एवान्तरान्तरा वङ्गेषु लब्धप्रतिष्ठस्मृतिशास्त्राध्यापकश्रेणीमारूढानां स्मृतिरत्नोपाधिकमधुसूदनशर्म्मणां स्वपितृचरणानां चरणमूलमुपेत्यायं नव्यस्मृतिनिबन्धानामपि पाठनं शुश्राव। इत्थं समतीतानि त्रिचतुराणि वर्षाणि।

अथादृष्टस्य प्राबल्याद्वावश्यम्भाविभावानामवश्यम्भव्यतया वा नियतिनिदेशस्यालङ्घ्यतया वा तस्मिन्नवसरे तस्याङ्गलभाषाशिक्षायां गरीयसी प्रवृत्तिः समजनि। तदानीं तद्वंशीयाः सर्व्वे एव तद्भाषाशिक्षाया न केवलं प्रतिकूला आसन्, अपि तु तच्छिक्षणं हि पापमिव महापातकविशेष-पातित्यकारणं मन्यन्ते स्म, येन तत्स्वजनास्तदिच्छोपरोधमनुचितं मन्यमाना अपि तस्य तत्कर्म्मद्वारा पातित्यस्पर्शशङ्कयेव प्रबललोकापवादभिया च न तं तत्कर्म्मानुष्ठातुमनुमेनिरे, प्रत्युत बहुविधसान्त्वनवचोभिस्तं तथाविधोद्यमात् तत्कालं निवर्तयामासुः। किन्तु—

"क ईप्सितार्थस्थिरनिश्चयं मनः
पयश्च निम्नाभिमुखं प्रतीपयेत्।"

गुरुजनाज्ञया कियत्कालं तादृशीं बलवतीमिच्छामवरुद्धय पूर्व्व-वदनन्यमनसा संस्कृताध्ययने वर्तमानोऽप्यसौ न तामेकान्ततः परिहातुं शशाक; अल्पीयसैव समयेन तथानिरुद्धप्रसरा सेच्छा बाष्पसन्ततिरिव पुनः पूर्व्वावस्थातः प्राबल्यमाप; अनन्योपायश्च हुगलीकालेजाख्यविद्यालये ह्यधीयानं स्वग्रामे निवसन्तं जयगोपालवन्द्योपाध्यायनामानं कमपि तीक्ष्णधियं छात्रमनुनीय तस्मै तत्पाठ्यसंस्कृतपुस्तकाध्यापन-मङ्गीकृत्य च तत्सकाशात् "अथवा विद्यया विद्या" इतिप्राचीनन्याय-मनुसृत्यातिगोपनेनाङ्गलभाषामध्येतुं प्रवृत्तोभवत्। वर्षत्रयं तथैवाधीत्य प्रवेशिका—( Entrance )—परीक्षोपयोगिपुस्तकानामनायासार्थबोध-शक्तिस्तथाङ्गलभाषायामावश्यकवाक्यरचनानैपुण्यञ्चास्याभवन्, तथा ह्यपरे विद्यार्थिनो विद्यालयेषु यथाविध्यध्ययनतो द्वादशवत्सरैर्यत्फलं लभन्ते, वर्षत्रयमात्रमनियताध्ययनेन तेन तत्फलं लब्धम्। अथ क्रमेण तदपि रहस्यं सामाजिकेषु प्रकाशमियाय, येनास्य ग्रामे सुमहदपयशः कलङ्कश्च महान् सञ्जातः। तदाकर्णनेन स्वजनाः स्वल्पस्य मनसि नितरां व्यथां प्रपेदिरे, तिरस्कर्तुमारेभिरे च तं सर्वदा रहसि। इत्थं भग्नोद्यमोऽसौ संस्कृताध्ययनेऽपि पराङ्मुखः किंकर्तव्यविमूढः स्थितः। यावदसौ जयगोपालवन्द्योपाध्यायोऽपि बी० ए०-परीक्षायां विफलमनोरथो लज्जया स्वजनमुखदर्शनमपि नापहेतुं मन्यमानो वङ्ग-देशं विहाय सुदूरपञ्चनदाभिमुखं प्रतस्थे। ततश्च वर्षद्वयं तस्य दिवसानि दुःखदुःखेनैवातीतान्यभवन्। एकत आङ्गलभाषाशिक्षाया व्याघातेन महान्मनस्तापोऽन्यतश्च संस्कृतशिक्षादरशैथिल्येन स्वजनकृतगुरु-तिरस्करणजनितसन्तापः, इत्थं द्वौ सन्तापौ मिलित्वा मनसोऽस्य

महान्तं विक्षेपं जनयामासतुः । नाहाराभिरुचिर्न निद्रा नापि समानवयोबन्धुजनसम्भाषणप्रीतिरभवत् । एतस्यामवस्थायां गृहावस्थितिरसह्यदुःखप्रदैवाभवद् । तेन सोऽपि द्विसप्तत्युत्तराष्टादशखृष्टाब्दस्य ( १८७२ ई० ) प्रारम्भे गुरुजनाननामन्त्र्यैव केनापि बालमित्रेण सह निभृतं पञ्चनददेशाभिमुखमेव प्रस्थितः। तदानीं जयगोपालवन्द्योपाध्यायः पञ्चनदान्तर्गत-"गुजरान्वाला"नामधेये जनपदे कस्मिंश्चित् मिशनरिविद्यालये द्वितीयशिक्षकपदमधिष्ठित आसीत् । स तत्रैव तत्समीपे जगाम । बहुदिवसानन्तरं परस्परसम्मिलनसुखमनुभवन्तौ तावुभावेव परमानन्दसन्दोहाप्लुतचित्तावभूताम् । मासमेकं वन्द्योपाध्यायः सादरं तं स्वसमीपे संरक्ष्य तदानीन्तनपञ्चनदमहाविद्यालयाशेषकार्य्यसम्पादकसभयाचिरप्राह्वतयोद्घोषितासु परीक्षासु "प्राज्ञे" तिनामधेयामादिमसंस्कृतपरीक्षां प्रदातुमेनं लवपुरे—( "लाहौर"-नगरे ) परीक्षाया दिवसत्रयपूर्व्वं स्वव्ययेनैव प्रेरयामास ।

अथायं लवपुरं समेत्यैव तदानीन्तनपञ्चनदमहाविद्यालयकार्य्यसम्पादनसमितेः प्रधानसदस्याभ्यां श्रीयुक्त-बाबूनवीनचन्द्ररायचीफ़पण्डितश्रीयुक्तराधाकृष्णगोस्वामिभ्यां मिलितः ताभ्यां सम्यक् परीक्षितश्च । तौ च तं परीक्ष्य युगपदुक्तवन्तौ-"का नाम प्राज्ञपरीक्षा, तुच्छैव सा श्रीमतो विद्यावत्तायाः । नास्मिन् वर्षे "शास्त्रि"-परीक्षाया आयोजनमस्ति, ततश्च वर्षेऽस्मिन् संस्कृतोच्चपरीक्षार्थिदातव्यतया निर्द्धारितां विशारदाख्यपरीक्षां ददातु भवान्, भाविनि वर्षे "शास्त्रि"-परीक्षां दास्यतीति ।" तेन सविनयमुक्तम्,—"न मया विशारदपरीक्षानियमावली विदितभूयिष्ठा, नापि तत्पाठ्यानि संस्कृतपुस्तकानि सन्ति

मत्समीपे, दिनञ्चैकमात्रमन्तरालवर्त्ति वर्त्तते, किञ्च तत्र दातव्यं शुल्कं न वर्त्तते मत्पार्श्वे, तत् कथं तत्परीक्षां दातुमुत्साहं कुर्य्याम्।" एतदाकर्ण्य तौ सस्मितमुक्तवन्तौ "न कापि चिन्ता कार्य्या, पुस्तकान्यस्मत्तो गृहाण, अन्यत् सर्व्वमावां पूरयिष्वावः। भवता केवलं परीक्षादिवसे यथाकालं परीक्षागृहे समुपस्थातव्यमिति"—एवमुक्तोऽसौ प्रहृष्टात्मा ताभ्यां प्रदत्तानि पुस्तकान्यादाय स्ववासस्थानमाजगाम। आगत्य च त्यक्तनिद्र एकाग्रमनसा पाठ्यपुस्तकान्यवलोकयन्नेव तां निशामनैषीत्। परेद्युः केवलं प्रथमदिनपरीक्षणीयपुस्तकानि पपाठ; तत्परेद्युश्च परीक्षारम्भः समभवत्। प्रथमदिवसीयप्रश्नानामुत्तराणि लिखित्वा मेलयित्वा चापरपरीक्षार्थिप्रदत्तैरुत्तरैः सह समुदिताऽस्य हृदये बलवत्याशा। इत्थमुत्तरोत्तरसंवर्धितया चाशया दिवसत्रयं लेखनपरीक्षां दत्वा चतुर्थदिवसे च मौखिकपरीक्षायामुच्चसङ्ख्यां लब्ध्वा सञ्जातस्तस्य मनसि परीक्षासाफल्ये बलवानाश्वासः। एवं समाप्तिमुपगते परीक्षाकर्मणि, तस्य संस्कृतरचनानैपुण्यं कवित्वशक्तिमपि परीक्ष्योपन्यस्तं विद्वत्प्रवराभ्यां ताभ्यां—"सुचिरमुपकल्पितमस्माभिः संस्कृतभाषायां मासिकपत्रस्यैकस्य प्रकाशनं, परं तत्सम्पादनक्षमपुरुषाभावेन नाद्यापि कार्य्यारम्भः कृतः। साम्प्रतं श्रीमन्तं योग्यपुरुषमुपलभ्याविलम्बेनैव तत्प्रकाशनेच्छा कृता तद्भवानिहैव स्थित्वा पत्रिकाया अस्याः सम्पादनं करोतु। तदर्थं प्रतिमासं पञ्चविंशतिमुद्राः प्राप्स्यति"—इति। तेनापि सविनयं कृतज्ञतां प्रकाश्याङ्गीकृतस्तत्प्रस्तावः। तदवध्येव विद्योदयस्याविर्भावः। अथातीते मासैकमिते समये परीक्षायाः सुफलमपि विज्ञातमभूत्। परीक्षोत्तीर्णताहेतोः प्रतिमासं

दशमुद्रावृत्तिश्चास्य परिकल्पिताऽभवत्। नासौ गुजरानवाला-प्रदेशे पुनः प्रत्याजगाम। लवपुरे निवसन्नेव वर्षमेकं निरन्तरपरिश्रमेण शास्त्रिपरीक्षापाठ्यपुस्तकान्यधीतवान्। सममेवाङ्गलभाषाप्रवेशिकापरीक्षापाठ्यपुस्तकानामपि पाठं चकार। अथ वर्षान्ते परीक्षाद्वयी प्रदत्ताऽनेन (१)—शास्त्रिपरीक्षा, (२)—आङ्गल-भाषायाः प्रवेशिकापरीक्षा च। तत्र "शास्त्रि"-परीक्षायामेक एवासौ समुत्तीर्णो बभूव, प्रवेशिकापरीक्षायाञ्च प्रथमश्रेण्यामुत्तीर्णो बभूव। अयं हि वाल्मीकिरिव कवीनां, ओंकार इव छन्दसां राजकीयशास्त्र्युपाधिभूषितानां तथा बृटिशराजप्रतिष्ठितापरसंस्कृतोपाधिमतामाद्यः। यतो हि १८७३ खृष्टाब्दे, शास्त्र्युपाधिपरीक्षा पञ्चनदेषु प्रथममेव प्रवर्त्तिता बभूव, असावेव तत्र सकलपरीक्षार्थिनामादिम आसीत्; १८७३ खृष्टाब्दीयपञ्चनदविश्वविद्यालयस्य कलेण्डराख्यविवरणीपुस्तक-मत्र प्रमाणम्। कलिकातासंस्कृतविद्यालयस्य समुत्कृष्टछात्राय शास्त्र्युपाधिवितरणप्रस्तावो हि पञ्चनदविश्वविद्यालयस्यानुकार्य्येव वङ्गेषु संस्कृतोपाधिपरीक्षाकल्पश्च सुभृशमर्व्वाचीनः। एवं स्थिते कोनामास्य भारते-ष्वाधुनिकविद्वद्वृन्दानामग्रणीत्वं प्रतिभायाश्चास्य निरङ्कुशत्वं नाङ्गीकुर्य्यात्! भवतु। शास्त्रिपरीक्षोत्तीर्णताहेतोः पुरस्कृतिं मुद्राशतं तथा प्रतिमासं त्रयस्त्रिंशन्मुद्रावृत्तिश्चास्य कलिपताऽभवत् ततो वर्षद्वयम् इन्टरमिडियेद् ( Intermediate )—परीक्षापाठ्यपुस्तकानि यथा-विधि पपाठ। किन्तु दैवनिर्बन्धान्न तत्र परीक्षायां साफल्यं लेभे। एतावतैवास्य छात्रावस्था विरतिमाप। ततः परं लवपुरस्थे "ओरियेन्टल-कालेजाख्य (Oriental college)—राजकीयविद्यालयेऽन्यतमसंस्कृ-

ताध्यापकपदं प्राप्य दश वर्षाणि यावत् तत्र स्वनियोगमनुतिष्ठन् परां प्रतिष्ठां लेभे। एतावान् समयस्तेन परमानन्देनातिवाहितः। स्वगृहे पितृपितामहमातृभ्रातृप्रमुखप्रियपरिजनानां सद्भावात्तत्र निरन्तरं सुखमासीत्, कर्मस्थाने च स्वोपरितनविद्यालयाध्यक्षपुरुषाणामसीमानुग्रहलाभेन छात्रेषु च सदध्यापकतानिमित्तकप्रतिष्ठालाभेन प्रतिवर्षं समीप्सितवेतनवर्द्धननिमित्तेन च निर्बाधं सुखमनुबभूव।

अवसरेऽस्मिन्नेतदपि वक्तव्यपक्षे प्रतिभाति, प्रथमं तस्याङ्गलभाषाशिक्षाप्रावण्यमवलोक्य प्रायः सर्व्व एव स्वग्रामीणा महत्तराः क्षुद्रतरा अपि तं विविधव्यङ्ग्योक्तिपरम्पराभिरुपहसितवन्तो निनिन्दुश्चा यथा दोषानारोप्य तदुपरीति पूर्व्वमुक्तम्; तेन तु तदानीन्तान् प्रति न किमपि प्रातिकूल्यमाचरितम्, सोढाश्च तेषां तथाविधाः कटुव्यवहारास्तूष्णीम्। परं मनसि प्रतिज्ञातं 'यदि कदाचित् प्रयत्नस्यास्य मे साफल्यं भवेत्, तदा यथैतेऽकारणमदिच्छाव्याघातका मूढाः स्वयं प्रवृत्ता एव स्वपुत्रादीनाङ्गलभाषां शिक्षयेरंस्तथैव प्रयत्नः कार्य्यो मया'। अथ प्रतिज्ञैषा तस्य समयेनैव सम्पूरिता। नामुष्य प्रयत्नोऽपेक्षितः। लवपुरे तस्य क्रमशः परिवर्द्धमानामुन्नतिमाकर्ण्याकर्ण्य ते हि प्रतिपक्षा ईर्ष्यया मात्सर्येण कारणान्तरेण वा परिवर्त्तितमनोभावा एकैकशः स्वपुत्रादीनाङ्गलविद्यां शिक्षयितुं प्रवृत्ता बभूवुः। येनेदानीं भट्टपल्ल्यामाङ्गलविद्याविदुषामेव सर्व्वथा प्राबल्यं सञ्जातम्। परं—

"चक्रवत्परिवर्त्तन्ते दुःखानि च सुखानि च।"

अत्रावसरे तस्यादृष्टचक्रस्य विपरीतभागः समुत्थितो बभूव प्रथमं स्नेहमयी जननी तस्य सहसा सान्निपातिकज्वरेणाक्रान्ता दिव-

सत्रयाभ्यन्तर एव परलोकमियाय ।तदानीं स लवपुरे स्थितः। वैद्यु-तिकवार्त्तावहयन्त्रद्वारा प्रेरितं वृत्तमिदं विज्ञाय स्वगृहं प्रति प्रचलितः। आगत्य च निरन्तरसुखहास्यपूर्णं गृहं विषमशोकच्छायामलिनं हाहा-रवमुखरीकृतं विलोक्य हृदयमस्य विदीर्णमभवत्, मूर्च्छितश्च क्षितितले निपपात। अथ तत्पितामहचरणाः पितृचरणाः कनीयान् भ्राता चान्ये च स्वजनाः सर्व्वे स्वयं शोकविह्वलचित्ता अपि ससम्भ्रमं समेत्य तथाविधं तं जलसेकादिशीतलोपचारेण लब्धसंज्ञं कृत्वा विविधप्रबोध-वचनैः सान्त्वयित्वा च कथमपि सुस्थं चक्रुः। अथ यथाविधि स्वर्ग-गताया जनन्याः श्राद्धादिकृत्यं सम्पाद्य मासद्वयं स्वगृह उषित्वा पुनः स्वजनैर्लवपुरे प्रेरितोऽसौ भग्नहृदयो दुःख-दुःखेनैव स्वकार्य्यमनुष्ठा-तुमारेभे। ततो मासचतुष्टयान्ते सहधर्म्मिणी चास्य शैशवावस्था-स्थितं कन्याद्वयं स्वजनांश्च परित्यज्य परलोके प्रस्थिता बन्धुवर्गाणां पूर्व्वोत्पन्नं शोकोच्छ्वासं द्विगुणं वर्द्धयामास। एतद्वृत्तमपि तस्मै यथाकालं स्वजनैः प्रेरितम्, किन्त्वसौ गृहमनागत्यैव तत्रत्यैर्बन्धुवर्गैः सममहर्निशं शोकोपशमोपायभूतानि बहुविधानि क्रीडाकौतुकानि कुर्व्वन्नगाधं शोकसागरमुत्तर्त्तुमियेष। कालेन लघूभूतश्च प्रथममति-दुःसहत्वेन प्रतीयमानः स शोकावेगः। सार्द्धैकवर्षान्ते गृहमागत्य पितृपितामहचरणैः सनिर्बन्धमाज्ञप्तः पुनर्दारपरिग्रहं चकार। सा इदानीं तद्गृहस्वामिनी संवृत्ता। तस्यामसौ षट् पुत्रान् कन्याञ्चैकामुत्पादया-मास। पुत्रेषु चत्वार एव साम्प्रतं वर्त्तन्ते। तेषु ज्येष्ठः श्रीभवभूति-नामधेय आङ्गलभाषायां गीर्व्वाणवाण्यामपि सुशिक्षितः साम्प्रतं कलि-काता-संस्कृतकालेजाख्यविद्यालये संस्कृतमध्यापयति। द्वितीयः श्री-

भवविभूतिनामा संस्कृतभाषायां एम० ए०। तृतीयः श्रीअनुभूतिनामकः हुग्लीकालेजाख्यविद्यालये प्रथमश्रेण्यां पठति। चतुर्थस्तु श्रीध्रुवज्योतिर्नामाष्टवर्षदेशीयो ग्राम्यपाठशालायां प्राथमिकशिक्षां लभते *। सर्व्वं एवैते विनयार्ज्जवादिगुणालंकृताः सुशीलाश्च वर्त्तन्ते।

अथ द्वितीयदारान् परिणीय स पुनरेव लवपुरं प्रत्यागतः पूर्व्वतः सुस्थतरहृदयेन स्वकार्य्यङ्कर्त्तुमारेभे। अहो दुर्दैवविपाकः!

"एकस्य दुःखस्य न यावदन्तं, गच्छाम्यहं पारमिवार्णवस्य।
तावद्द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति॥"

* चरितमेतत्प्रबन्धप्रणेतुर्जीवद्दशायामेव (१९१३ खृष्टाब्दे) समुपनिबद्धमासीत्, तदा तदात्मजाः सर्व्वेपि (ज्येष्ठं विहाय) छात्रावस्थायामेव वर्त्तन्तेस्म, अद्यत्वे तु ते सन्तोषप्रदं दशान्तरमापन्नाः। तथाहि तेषु विद्याभूषण-एम० ए० इत्युपाधिमान् श्रीमान् भवविभूतिभट्टाचार्यः कलकत्ता-नगरस्थे 'वंगबासीकालेज'-नाम्नि विद्यालयेऽन्यतमप्रधानसंस्कृताध्यापकपदमलङ्करोति, स्वोपार्जितेन वित्तेन स्वकीयमभिनवं सुन्दरं सद्म निर्माय चात्रैव—भवानीपुरे निवसति।

श्रीमननुभूतिभट्टाचार्यस्तु विश्वविद्यालयस्य संस्कृत—आई-ग्रुपेति-विभाग-परीक्षायां प्रथमो भूत्वा साम्प्रतं राजकीयं 'सब-डिपुटी-कलक्टर' पदमधिकरोति।

अन्तिमः श्रीध्रुवज्योतिर्महाशयोपि वी० एस्—सी० परीक्षामुत्तीर्य कस्मिंश्चिद्विद्यालयेऽध्यापयन्नास्ते।

इत्थं सर्वेप्येते विद्यावृत्तिसम्पन्नाः स्वावलम्बिनः सुखिनश्च सन्तः पुत्रिणां धुरि स्थितस्य स्वर्गिणश्चरितनायकस्योच्चैः पुण्यवत्तां प्रकटयन्तीति मैत्री-मुदिता-वृत्तिमतां सहृदयानां महानयं प्रमोदावसरः। सम्पादकः।

इत्येष श्लोकस्तस्मिन्नक्षरशो यथार्थो बभूव। यतो वर्षान्ते पुनरेकमात्रस्य प्राणेभ्योऽपि प्रियतमस्य भ्रातुः परलोकप्रस्थानवार्ता तदन्तिकमुपगता तं पूर्व्वतोऽप्यधिकतरं शोकविधुरं कृतवती। इत्थमुपर्य्युपरि दुःसहशोकशल्योपहतं तदीयहृदयं नितरां भग्नमभवत्। स सर्वथा निरुत्साहः स्वजीवितेऽपि सम्यक् श्लथादरो बन्धुभिर्मधुरवचनैरहर्निशं प्रबोध्यमानः कथं कथमपि निजकर्त्तव्यकर्म्माणि निर्व्वाहयामास। समागते तु ग्रीष्मकालीनानध्यायावसरे नितान्तभग्नहृदयः स्वगृहमाजगाम। अहो ! यदितः पूर्व्वं नन्दनकाननमिव सर्व्वतः सुखकरमासीत्, तदद्य श्मशानमिव महादुःखप्रदं हाहारवपूर्णमवलोकयामास स्वगृहम्। अशीतिपराणां वर्षीयसां पितामहचरणानां तथा वार्द्धक्यमुपेयुषां पितृपादानाञ्च दुःसहशोकोच्छ्वासविधुरां शोचनीयामवस्थामवलोक्यायं सुदुःसहमपि स्वशोकं कथञ्चिल्लघूकृत्य तान् परिसान्त्वयितुमारेभे। क्रमेणैतान् कथञ्चित् प्रकृतिस्थान् विधाय पुनर्लवपुरमागतः पूर्व्ववत् स्वकार्यमनुतस्थौ। लवपुरे पुनरागमनात् परं वर्षमेकमतीतम्। तदुपरि दुर्ग्रहकोपस्य तथापि न शान्तिरभवत्, प्रत्युत पूर्वतो भृशं ववृधेऽसौ। ये खल्वेतावत्कालपर्य्यन्तं वर्षीयांसोऽपि दुःसहशोकावेगविधुराणां शेषपरिजनानां प्रधानावलम्बनभूता आसन्, येषां महार्घोपदेशवचनपरम्परया निगृहीतोपर्युपरिसङ्घट्टमानसुदारुणशोकावेगाः परिजनवर्गाः स्वकर्मानरता आसन्, ते परमविद्वांसो ज्ञानवतामग्रेसरा पितामहपादा अस्य द्व्यशीतितमवर्षे वयसि नश्वरमानवदेहं विहाय निर्व्वाणमगमन्। अथ तथा प्रधानावलम्बनभूतानामेकान्तपुत्रवत्सलानां पितृदेवानामन्तर्धानेन प्रथमत एव निरन्तरातिविषमशोकाघातभग्नहृदया

वीतधैर्य्याः पितृपादा अस्य अनाथा इव असहाया इव अवसन्नहृदया निश्चेष्टा निरुत्साहा दुःखदुःखेन समयमतिवाहयितुमारेभिरे। एतस्मिन्नवसरेऽप्यसौ लवपुरे स्थितो वार्त्तामेतामधिगत्य नितरां शोकाकुलो बभूव। तत्र स्थितश्च मनसि स्वपितृचरणानां तथाविधं शोचनीयदशाभिभवं संस्मरन् निरतिशयक्लेशमनुबभूव, अथ तथाभूतान् तान् विहाय तद्दशातिदूरदेशेऽवस्थानमात्मनो भविष्यदुन्नतिपरम्पराकारणमपि नास्मै रोचतेस्म। तत स्वगृहमागत्य प्रथमं पितृचरणान् स्वकर्मस्थाने नेतुकामस्तान् सनिर्बन्धमनुरुरोध। न तु तेभ्यः प्रस्तावोऽयं रुरुचे। अत्रावसरे कलिकाताराजकीयसंस्कृतपाठशालायां संस्कृताध्यापकपदमेकं शून्यमभवत्। तदानीन्तनतद्विद्यालयाध्यक्षेण महामहोपाध्यायेन महेशचन्द्रन्यायरत्नेन सममस्य पूर्व्वत एव प्रगाढः परिचयः स्थितः। सोऽपि तस्मिन्विशेषतः स्नेहवानासीत्। तेन चास्य समीपे तत्पदग्रहणं प्रस्तुतम्। सोऽपि तथाभूतपदग्रहणं स्वोन्नतिप्रतिबन्धकीभूतं जानन्नपि तदानीन्तनावस्थोचितं मन्यमानो बन्धुवर्गैर्भूयोभूयो निषिध्यमानोऽपिप्र बोध्यमानोऽपि स्वोन्नतेः पितृशुश्रूषां श्रेयसीं विचिन्वानः पदमेतदङ्गीचकार। एतावानेवास्योन्नतिसमयः। अथाधःपतनसमयसमारम्भः।

अलमेतदाख्यानद्वारा पाठकानामस्योपर्य्यनादरोत्पादनेन। स्वदेशागमनाद् द्वादशवर्षान्ते पितृचरणा अस्य स्वर्लोकमारूढाः! ततो विपुलसंसारभार एकाकिनस्तस्योपरि पतितः। किन्तु स स्वभावसिद्धासीमसहिष्णुतया सुदक्षकर्णधार इव बहुविघ्नादिपरिपूर्तं संसारार्णवं सुखमतरत्। अविचलितधर्म्मबुद्ध्या कर्त्तव्यमार्गात् कदापि न भ्रष्टः,

सुदृढशास्त्रप्रत्ययेन प्रभूतार्थलालसामप्यगणयित्वा अशास्त्रीयविषयेषु पदं न चकार। कालक्रमेण वृद्धत्वमापन्नः चिरराजसेवालब्धां पेन्शनाख्यवृत्तिं लब्ध्वा वर्षचतुष्टयमात्रं तामुपाभुंक्त। तदार्थस्याल्पत्वेऽपि स्वकीयकर्त्तव्यपथात् लेशमात्रमपि न स्खलितः, चिरलालितस्य विद्योदयाख्यस्य संस्कृतमासिकपत्रस्य प्रकाशनञ्चावरोद्धुं न शशाक। प्रकाशतेऽसौ 'विद्योदयः" पूर्ववदिदानीमपि भट्टपल्लीतो अस्य प्राक्तनसंख्यातः प्रबन्धा एते संगृह्य प्रकाश्यन्ते।*

पण्डितहृषीकेशशास्त्रिगश्चरितप्रसङ्गे तदानीन्तनप्राच्यप्रतीच्यविद्यालयाध्यक्षस्य 'पन्जाब'-विश्वविद्यालय-रेजिस्ट्रारपदमलंकुर्वतः डाक्टर जि॰ डब्ल्यू॰ "लिटनर"—महोदयस्य विद्वज्जनादराश्रितवत्सलत्वगुणग्राहित्वादिधर्म्माणामनुल्लेखेन न केवलं चरितमिदमसम्पूर्णं तिष्ठेदपि त्ववश्यकर्त्तव्याऽपालनजनितो महानधर्म्मोऽपि भवेदिति विविच्य चात्र महात्मनस्तस्यापि किञ्चित्कथ्यते।

स हि महात्मा न केवलमाङ्गलभाषाभिज्ञानामग्रणीरासीत्, परं ग्रीक-लैटिन-फ्रेंच प्रमुखासु प्रतीच्यभाषासु विशेषाभिज्ञतासम्पन्नस्तथाऽऽरव्य-पारसीक-पश्तो-उर्दू-हिन्दी-प्रमुखासु भाषास्वपि तत्तद्देशजात इव सम्यग्व्युत्पत्तिं लेभे। स भारतवासिनां सर्व्वविधसमुन्नतिकामः प्रकृतबन्धुरभवत्। तस्यैव महात्मनोऽविश्रान्तप्रयत्नेन समुचिताभिश्चेष्टाभिश्च 'पन्जाब-

* हन्त चिराय तिरोहितोऽसौ विद्योदयः। स्वर्गते संपादकमहाभागे कियन्तं कालं तदात्मजेन श्रीभवविभूतिविद्याभूषणेन यथाकथञ्चित् प्रकाशितोऽपि परं पश्चादर्थाभावादपुनरुदयायास्तमुपेतः। दुर्भाग्यमेवैतत्संस्कृतभाषायास्तदनुरागिणां च। सम्पादकः।

विश्वविद्यालयस्य' प्रथममाविर्भावः सञ्जातः। 'पन्जाब'विश्वविद्यालय-सूत्रपातादनन्तरमेवासौ कस्मिंश्चिद्रहस्यभूते कर्मणि दौत्यकर्मकरणाय सर्व्वप्रधानराजपुरुषेण भारतभूमेः पाश्चात्यसीमान्तेषु प्रहितोऽभवत्। ततश्च शास्त्रिणः प्रथमलवपुरगमनावसरे नासौ महात्मा तत्र स्थितः। 'पियरसन' नामधेयकः कश्चिदपरः श्वेताङ्गस्तदानीं तत्कर्म्माण्यनुतिष्ठतिस्म। विद्वत्कुलधुरन्धरोऽसावपि प्रथमक्षणादेव शास्त्रिणि विशेषतः प्रीतिमान् सानुग्रहदृष्टिश्चाभवत, चकार च शास्त्रिणं प्राच्यविद्यालयसंस्कृताध्यापकपदे स्थापयितुं महान्तं प्रयत्नम्, तदीयानुग्रहेणैवास्य तत्पदलाभे कृतकृत्यता सञ्जाता। अथ डाक्टरलिटनर-महोदयो यदा तानि दौत्य-कर्माणि साधयित्वा लवपुरं प्रत्यावृत्य स्वपदं पुनरधिचकार, तदा पण्डितोऽसौ प्राच्यविद्यालयसंस्कृताध्यापकपदे स्थितः। डाक्टरलिटनर महोदयस्य तु स्थितेऽपि भारतवासिनामुपरि निरतिशयप्रेमणि पाश्चात्यशिक्षाविकृतमस्तिष्केषु वङ्गदेशीयेषु काप्यप्रीतिः स्वभावत एव स्थिता। ततश्चासौ निजाधिकारान्तर्गते विद्यालये वङ्गदेशीयं तमध्यापयन्तमवलोक्य तदुपरि दर्शनक्षण एव सावज्ञदृष्टिं निक्षिप्य तेन सहानादरव्यवहारं कृतवान्। किन्तु तथाविधानादरभावो न चिरस्थायी बभूव। स्वल्पीयसैव कालेनेतरपण्डितासुलभानां तदीयासाधारणगुणगणानां परिचयं प्राप्य न केवलं तिरोहितस्तस्य तदुपरि सावज्ञभावः, प्रत्युत परस्परमसमं बन्धुत्वं प्रादुर्भूतम्। ततःप्रभृति निरन्तरमेव पण्डितस्यास्य समुन्नतये स्वयं चेष्टतेस्मासावपि। सर्व्वेष्वेव स्वकर्मसु तमन्तरङ्गं कृतवान्। तेन सहामन्त्रणमन्तरेणासौ विद्यालयसम्बन्धि किमपि कर्म्म न चकार। शास्त्रिणो लवपुरसम्बन्धत्या-

गान्मासषट्कपूर्व्वं निरन्तराविश्रान्तपरिश्रमेण डाक्टरमहोदयस्य स्वास्थ्यभङ्गः संवृत्तः। येनासौ वर्षद्वयं यावत् स्वकर्मतो विश्रामं लब्ध्वाङ्गलभूमौ गतवान्। स चेत्तदानीं लवपुरेऽस्थास्यत् तदा शास्त्रिणं कथमपि स्वदेशमागन्तुं नान्वमंस्यत। यतोऽसौ स्वदेशयात्रायाः प्राक् राजकीयप्रतीच्यविद्यालये तदानीं वर्त्तमानस्य संस्कृताध्यापकस्य पेन्शनाख्यवृत्तिप्राप्तिसमयमदूरभाविनमवलोक्य तत्पदे शास्त्रिणं स्थापयितुं तदानीन्तनप्रधानराजपुरुषान् सनिर्बन्धमनुरुध्य स्वदेशं गतवान्। तैश्च तत्तथैवाङ्गीकृतम्। किन्तु—

"प्रतिकूलतामुपगते हि विधौ, विफलत्वमेति बहुसाधनता।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि।"

विदितैतत्सर्ववृत्तान्तोऽपि दुर्ग्रहकुटिलकटाक्षविषयीभूतः शास्त्री त्वरितत्वरितं स्वदेशमागत्य तदर्थं दुर्ग्रहैः प्रस्तुतं पदं जग्राह। नात्मप्रतिष्ठां, न भविष्यदुन्नतिपथानर्गलतां, न डाक्टरमहोदयस्य तदुपरि निरतिशयस्नेहान्, नापि पञ्चनदे निजप्रतिष्ठामुख्यसहायभूतस्य रायश्रीनवीनचन्द्रस्य सनिर्बन्धमनुरोधं चिन्तयामास, तानि सर्व्वाण्यविगणय्यैकपद एवासौ स्वदेशमागतः।

अथ वर्षद्वयान्ते लिटनर महोदयः शास्त्रिणमनवलोक्य निरतिशयं चित्तक्षोभमवाप। स स्वयमविलम्ब्य कस्यचिदावश्यककर्मणो व्यपदेशेन तं प्रत्यावर्त्तयितुं कलिकातानगरं समेतः। तस्मै प्रस्तुतराजकीयप्रतीच्यविद्यालयसंस्कृताध्यापकपदेन समं 'पन्जाब'-विश्वविद्यालयसहकारि-रजिस्ट्रारपदमपि दातुमङ्गीचकार। शास्त्री च स्वजनहस्तेषु वृद्धानामसहायानां शोकविधुराणाञ्च पितृचरणानां रक्षणा-

-ऽवेक्षणभारं सानुनयं विन्यस्य पञ्चनदाभिमुखं पुनश्चलितः । किन्तु मासाधिककालं तत्र स्थातुं न शशाक, विरुद्धमहा हि! तदुन्नतिप्रतिबन्धस्य नोपायान्तरमवेक्षमाणास्तस्य शरीरे दारुणजीर्णज्वररोगस्य सञ्चारं कृतवन्तः । येनासौ प्रत्यहं प्रतिक्षणं परिक्षीणशरीरश्चातुरात्मनो मृत्युं प्रतीक्षमाणस्तस्थौ । लाइटनर-महोदयस्तु तस्य तादृशीं शरीरावस्थां विलोक्य तमधन्यानामग्रेसरं स्पष्टभाषया निर्दिश्य तस्मै गमनागमनव्ययव्यपदेशेन द्विशतीं मुद्राः प्रदाय स्वयमेव स्वदेशं प्रस्थापितवान्, किन्तु न तं विसस्मार, कालेन स पेन्शनाख्यवृत्तिं लब्ध्वा स्वदेशं गतोऽपि यावज्जीवं प्रतिमासं विद्योदयप्रकाशसाहाय्यार्थं तस्मै पञ्चविंशति मुद्राः प्रददौ । तस्य स्वर्गारोहणाद् वर्षैकानन्तरं तत्पुत्रेण तद्दानस्यावरोधः कृतः । एतावन्मात्रमस्य चरितम् ।

अथेदानीं तत्कृतानां निबन्धानां नाममात्रेण परिचयं दत्त्वा प्रबन्धोऽयमुपसंह्रियते, किंच ततः पूर्वं तद्गतमवश्यज्ञातव्यं किमप्यन्यदपि प्रस्तूयते ।

विद्यते किल वङ्गेषु च वङ्गसाहित्यस्य कृतेऽशेषतः कृतप्रयत्नस्य तस्य लोकोत्तरा ख्यातिः । कति नाम स्वनामख्यातानि सामयिकपत्राणि तस्यालौकिकप्रतिभासुषमाकलितप्रबन्धप्रसूनैः संमण्डितान्यासन्, कति चाङ्गलसंस्कृतग्रन्थास्तदनुवादालोकं लभमाना वङ्गीयपाठकेषु नलिन्य इव सौरकरस्पर्शात्, कुमुदिन्य इव चन्द्रकिरणावलेपात् विशदा विकसिताश्चैव देदीप्यन्ते, तेषु च वङ्गेषु धर्म्माशाचारेषु प्रमाणत्वेन गृहीतानां स्मार्त्तभट्टाचार्य्यापरनामश्रीमद्रघुनन्दनविरचितानां "स्मृतितत्त्वनिबन्धानां" वङ्गानुवादोऽस्याक्षयकीर्त्तिमुद्बोधयति, यावदेव वङ्गेषु

हिन्दुसमाजः स्थास्यति तावदेवास्य सा कीर्त्तिरक्षुण्णा वर्त्तिष्यते। समीचीनमेवोक्तं वङ्गीयविद्वत्कुलवरेण्यैर्महामहोपाध्यायचन्द्रकान्त-तर्कालङ्कारमहोदयैः शास्त्रिणमुद्दिश्य......"परं हर्षपरम्परापरतन्त्र-चित्तोऽद्याहं संवृत्तो भवत्कृतमनुवादं दृष्ट्वा कतिपयानां तत्त्वनिबन्धानां, कृत्याऽनया हि भवतोऽस्मत्समाजः स्वयं रघुनन्दनादपि भवत्सविधे चिरं कृतज्ञताकलितः स्थास्यति, यतोह्येतावत्कालं दुर्गमसंस्कृतेन निबद्धतया ते ते प्रबन्धाः साधारणजनहृदयेष्वनारूढपदाः, मुष्टिमेयवि-द्वन्मात्रालोचनविषया एवासन्, अधुना तु ते भवतः सरल-प्राञ्जल-भाषानुवादेन सम्यगुन्मीलिता इव विकसिता इव प्रस्फुटिता इव नि-खिलवङ्गवास्तव्यानां मनःसमाकर्षणसमर्था भवेयुः, भवेदमीभिश्च का नाम परोपकृतिः समाजस्याधुना प्रबलधर्मविप्लवसंक्षोभकरेऽस्मिन् दुर्दिने।" इति

एवं हि बहुधा वङ्गभाषा तदुपचारात् परं सम्भाविता लोकलोचने-ष्वभूतपूर्वां श्रियं धत्ते। वङ्गेषु नस कोप्यस्ति साक्षरो यो न जानाति तस्य सुप्रथितं नाम। सुविरला एव जना जायन्ते ये नामैवं ख्यातिं लभन्ते। अस्य च बहवोऽन्तेवासिनो देशेषु प्रख्याताः, केचिच्च तेषां महामहोपा-ध्यायपदसमलङ्कृताश्च संजाताः, येषां खलु कलिकातासंस्कृतविद्या-लयप्रधानाध्यापक-महामहोपाध्याय-श्रीप्रमथनाथतर्कभूषण - पण्डितप्रवर-श्रीपञ्चाननतर्करत्न -पण्डितप्रवरश्रीदुर्गाचरणवेदान्ततीर्थ - पण्डितप्रवर-श्रीवीरेशनाथकाव्यतीर्थप्रमुखाः अध्यापनकर्मणि वङ्गेषु परां प्रतिष्ठामापन्नाः।

प्रचरतितरां विमलशशधरकरोज्ज्वलं श्रीमद्धृषीकेशशास्त्रिणां यशो

निखिलभारतेषु, मन्ये बाणभट्टाद्युपमुक्तयशसो न कथमपि तल्लघीयः। बाणभट्टरचनारीत्या तल्लेखनपद्धतिं तुलयद्भिर्गुणग्रहणैकव्रतधरैः सुदूर-हरिद्वारान्तर्गतज्वालापुरस्थ-महाविद्यालयाध्यापकान्यतमैः 'भारतोदय'-सम्पादकैर्विद्वद्वरैः श्रीमद्भिः पद्मसिंहशर्म-विद्याविनोदमहोदयैः सुष्ठु खलु विचारितम्—

....."निबन्धानेतानवलोक्य न केवलं जीवति खलु सं-स्कृतभाषेति प्रत्ययः सुदृढो भवति, सन्तीदानीमपि बाणसरणि-मनुसर्तुं शक्ता लेखकधौरेयाः, ये हि स्वप्रतिभाबलेन नवनवा-न्प्रकारानुद्भाव्य गद्यकाव्यानां, ह्रेपयन्ति 'निर्जीवा संस्कृतभाषेति'-वादिनः, समुल्लासयन्ति साहित्यचन्द्रचकोरचेतांसि, प्रीणयन्ति विबु-धजनमनांसि, प्रकाशयन्ति चात्मनोऽसाधारणं वैदग्ध्यम्, संस्कृतानुराग-श्चेत्यादिविचारपरम्परा विचक्षणसहृदयहृदयमधिकुर्वन्ति। आ बा-ल्यादधीयाना वयं 'विद्योदयं' नितरां निर्वृतिमाप्नुमो निर्व्याजं कथयामश्च कादम्बरीप्रणेतुर्वर्णनशैली यदि केनाप्यंशेन क्वाप्युपलभ्यते तर्हि विद्योदयसम्पादकनिबन्धेष्वेवेति। अतएव सन्तोष्याः खलु विद्योदयतादृक्लोकोत्तरप्रबन्धपिपठिषवो जनाः; प्रकाशनीया च जन्मान्तरापन्न-बाणश्रीहृषीकेशमहाविदुषां यशश्चन्द्रिका, यदालोके संचरन्निदानींतनसंस्कृताध्येतृवर्गो न प्रस्खलेत् रचनाभ्यसनमार्गे, इति विचारयद्भिरस्माभिर्निबन्धानामेषां प्रकाशनं सर्वात्मनाभिनन्द्यमेव।"

अथेदानीं तत्कृतानां निबन्धानां नाममात्रेण परिचयं दत्त्वा प्रबन्धोऽयमुपसंह्रियते :—

संस्कृतपुस्तकानि—

(१) सुपद्मव्याकरणव्याख्यानम् ।

(२) कवितावली ।

(३) राजपुत्रागमनम् (अधुना दुर्लभत्वमाप्तम्)

(४) प्राकृतव्याकरणम् ( इङ्गरेजी-अनुवादसहितम् )

(५) संस्कृतश्रुतबोधः ।

(६) प्रबोधचन्द्रोदयनाटक-व्याख्या ।

हिन्दीपुस्तकानि—

(१) छन्दोबोधः ।

(२) अर्थसंग्रहानुवादः ।

(३) दत्तक-चन्द्रिकानुवादः ।

(४) तर्कामृतानुवादः ।

(एतानि लवपुरे लाला-मिहिरचद्रेण प्रकाशितानि, इदानीं लभ्यानि न वेति न ज्ञायते )

वंगभाषा-पुस्तकानि—

(१) हिन्दी-व्याकरणम् ।

(२) बंगला-व्याकरणम् ।

(३) मेघदूतपद्यानुवादः ।

(४) उद्वाहतत्त्वानुवादः ।

(५) तिथितत्त्वानुवादः ।

(६) प्रायश्चित्त-तत्त्वानुवादः ।

(७) आह्निकतत्त्वानुवादः। (८) शुद्धितत्त्वानुवादः।
(९) मलमासतत्त्वानुवादः। (१०) शाण्डिल्यसूत्रानुवादः।



## उपसंहृतिः

१९१३ खृष्टाब्दे दिसम्बर-मासस्य नवमे दिवसेऽस्माकं समधिकाधन्यतया वा भारतभूमेर्दुरन्त-दुर्ग्रहावमाहितविग्रहतया वा संस्कृतसाहित्यस्य चावसानसमयसमासादनाद्वा सोऽयं महात्मा प्रबलसान्निपातिकहतकाक्रान्तः सहसैव पुण्यकर्मणामन्तरायभूतं भूतसम्भूतं नश्वरं देहं परित्यज्य विहाय चैकपदे सर्व्वं मायाप्रपञ्चं निक्षिप्य हि चतुरः पुत्रान् विषमसंसारार्णवस्रोतसि, सर्व्वांश्च देशवासिनोऽकूलशोकसागरे प्रक्षिप्य स्वस्थानं स्वर्गं प्रति प्रचलितः। तदन्तर्धानान् न केवलं तदात्मीया अधन्याः संवृत्ताः, अपित्वद्य गीर्व्वाणवाणी तरणीव कर्णधारहीना, रमणीव प्रनष्टभर्त्तृका, रजनीवास्तमिततारका विलुप्तचन्द्रिका वा सर्व्वथा भ्रष्टश्रीकाऽनाथा संजाता। अनाथश्च जातोऽद्य "विद्योदय"स्तदीयाप्रतिमप्रतिभासुषमासंवर्द्धितः, आजीवनं सबहुमानं लालितस्तस्य स्वलेखनीप्रसूत-सुतः। अकस्माकञ्च तदीयजीवद्दशायां "प्रबन्धमञ्जर्य्या" अस्याः प्रकाशनरूपमनोरथपरम्पराया अतटप्रपातो विघटितः। अहो! कुतोऽद्य स गतो योहि संस्कृतसाहित्यक्षेत्रेषु एकच्छत्रः सम्राडासीत्, यस्य हि लेखनीसम्पर्कात् सविशेषं महीय्यमाना संस्कृतभाषा मृतत्वेन ख्यांताऽपि सर्व्वथा जीवितवत् सहृदयजनमनांस्यधिकुर्व्वाणासीत्, यस्य च विचित्ररचनानिपुणकरकृतसंस्काराद् बहुलार्थालङ्कारविलसिता अनुपमकान्त्यौ-

दार्ढ्यसौष्ठवादिसम्भाविताववयवा सम्मोहनपदन्यासा कामिनीव समुत्कलितभावा काव्यरसिकानां हृदयं हरतिस्म। हन्त उपरतोऽद्य विद्यानां निलयो गुणानामाश्रयस्तेजसां निधिर्ज्ञानस्याम्बुधिः। किन्तु किं करवाम वयं सर्व्वथा दैवहतकप्रतिरुद्धभाग्यप्रसराः, तदीयामितशक्तिश्रृङ्खलितकरचरणाः, निरन्तमेव जने जने कृतान्तहतकस्यानन्तप्रभुतां विचिन्वानाः,—तत्प्रभावाच्च सत्यपि दर्शनेन्द्रियेऽन्धाः, अविकले च वागिन्द्रिये मूकाः,-यथावस्थिते च श्रवणसाधने वधिराः, स्फुरति च जीविते संज्ञाहीनाः, जडवत् प्रतीयमानाः, स्वाच्छन्दशून्याः, अविरलनयनाम्बुमोचनमन्तरेण नोपायान्तरमवलोकयामः। अथवा किं मुधा मन्युना, किं वा फलं पितृलोकं प्रति प्रस्थितस्य कृते तदीयस्वर्गसुखस्यान्तरायभूतेन वृथाश्रुपातनेन !

अतः सर्वथा धैर्य्यमवलम्ब्य तमेवोद्दिश्य गायामः—

"संगच्छस्व पितृभिः संयमेनेष्टापूर्तेन परमे व्योमन्।
हित्वाऽवद्यं पुनरस्तमेहि संगच्छस्व तन्वा सुवर्च्चाः॥"



# प्रबन्ध-मञ्जरी



## मंगलाचरणम्

मातः ! प्रबोधमनुयाहि विकासय स्वं
नेत्रत्रयं विकच-तामरसाभमाशु ।
त्वद्बोधनं जननि ! सोत्सुकमीक्षमाणं
पश्याद्य भारतमिदं चरणाश्रितं ते ॥ १ ॥
दृष्ट्वा शरत्समयमस्तघनान्धकारं
निद्रां जहाति नलिनीवनराजिलक्ष्मीः ।
चन्द्रो विभाति विमले गगनेऽस्ततन्द्र-
स्तन्द्रापहारसमयश्च तवायमम्ब ! ॥ २ ॥
निद्रासि चेद्भगवती भवदुःखहन्त्री
चैतन्यरूपिणि ! शिवे ! जडवच्चिराय ।

हा हन्त हन्त शरणं वद कां व्रजामः
का वाऽस्ति नः शुभकरी जननि ! त्वदन्या ॥ ३ ॥

वागीश्वरी त्वमपि भूपतिराज्यलक्ष्मीः
शक्तिस्तथा विजयिनी युधि विघ्नहन्त्री ।
श्रद्धा सतां कुलजनप्रभवस्य लज्जा
सर्व्वं विनिद्रितमहो त्वयि निद्रितायाम् ॥ ४ ॥

त्वं देवि ! भारतभुवां परमार्त्तिहन्त्री
दुर्गा च दुर्ग-भव-सागरनौस्त्वमेव ।
तन्निद्रितां भगवतीं प्रसमीक्ष्य चित्ते
शान्तिर्न नो नहि पुनर्वपुषोऽपि पुष्टिः ॥ ५ ॥

तद्बोधयामि शुभदेऽम्ब सबान्धवस्त्वां
दुर्भिक्ष-दुःसह-शरीरज-रोगतप्तः ।
उद्बोधनेन तव बोधमुपैतु भूयो
वागीश्वरी च कमला विजयोऽर्थसिद्धिः ॥ ६ ॥

( १ )

यन्नामाक्षरवैपरीत्यजपतोऽप्याद्यः कवीनामभू-
द्दस्यूनां प्रवरो वरो जडधियां रत्नाकरो दुर्मतिः ।
कालाम्भोधर-कान्तिकान्तमनिशं तं देवमिष्टं स्मरन्
मन्दोऽहं रचयामि संस्कृतगिरा गद्यैर्निबन्धावलीम् ॥

( २ )

वितरतु रघुदेवः सेव्यमानोऽतिभक्त्या
शुभमविरतमेतत्-पाठकेभ्यः सदैव ।
विरसमपि कटाक्षप्रेक्षितं तेन सर्व्वं
भजतु सरसभावं वाक्यजातं ममात्र ॥

( ३ )

कालाद्दैन्यमुपेतवेदविहिताचारस्य संरक्षणं
मिथ्यागर्व्वपरीतमानवकृतेर्निःसारतादर्शनम् ।
सर्व्वस्यैव जनस्य चेतसि सदा सद्भावसंवर्द्धनं
लक्ष्यीकृत्य विनिर्म्मिता ननु मया गद्यैर्निबन्धावली ॥*

---

* एतन्मंगलाचरणस्यादिमाः षट् श्लोका एतन्निबन्धकृतश्रीदुर्गाप्रबोधनामिधपद्यावलीतः संगृहीताः । अन्तिमास्त्रयस्तु प्रबन्धकृद्भिः प्रकाशयितुरनुरोधात्प्रबन्धमञ्जरीमंगलाचरणार्थमेव विरचिता आसन् । ( सम्पादकः )

# विबुधामन्त्रणम्

—००:०:००—

अहो ! सम्प्रति हि भारतेऽस्मिन् व्यसनसम्पर्कात् सद्विद्येव, अनीति-संसर्गाद्राज्यलक्ष्मीरिव, शाठ्ययोगाच्चिरमैत्रीव, महामारुतसम्बन्धाद् दीपशिखेव, प्रबलकलिकालप्रवृद्धानां बहुविध-विरुद्धधर्माणां पुनःपुनःसङ्घर्षात् सुभृशं क्षीणत्वमुपागता वेदविद्या, सम्यक्क्षीणश्चाभवत्तन्मूलकः सनातनो वर्णाश्रमधर्म्मः। येनेदानीं सर्व्व एव धनिनो दरिद्रा विद्वांसो मूर्खा युवानो वृद्धाः, स्त्रियः पुमांसश्चानादृत्यैकपद एव शास्त्रानुशासनानि, अवधीर्य्य कुलक्रमादृतशिष्टाचरणानि, अविगणय्य महाजनचरितानि, समुन्मूल्य च समाजबन्धनानि यथेच्छमाचरन्ति, यथेच्छं व्यवहरन्ति, प्रवर्त्तन्ते नित्यं समुद्धतश्चोच्छृङ्खलश्च। शिष्या गुरून् वञ्चयन्ते—गुरुकृतन्यासान् हरन्ति, समाजेषु तेषामलीकदोषानाख्यापयन्ति च, तथैव गुरवोऽपि शिष्यधनान्यपहरन्ति मोहयन्ति चताननेकविधकपटाचरणैः, इत्थं सर्व्वत्रैव सुमहान् विपर्य्यासो वरीवर्त्ति। तथाहि—साम्प्रतं न पितरौ सम्मानयन्ति, न गुरूनाद्रियन्ते, न हित-वचनान्याकर्णयन्ति, नापि कुलगौरवमपेक्षन्ते, न बिभ्यति परलोकात्, न त्रस्यन्ति कौलीन्यात्, न लज्जन्ते गर्हिताचरणात्, न विरमन्त्यधर्म्मात ; नार्थ-

यन्ति महर्षीन्, न तर्पयन्ति पितॄन्, नाप्यनुवर्त्तन्ते शिष्टान्, न पूजयन्त्यतिथीन्, न वा श्रद्दधत्याप्तवचनेषु, नैव जिज्ञासन्ते धर्म्मेषु, किन्तु सर्व्वे एव समीहन्ते नित्यमेव केवलैहिकसुखसंवर्द्धनाय, प्रयतन्ते तेन तेनासदुपायेनार्जयितुमर्थान्, चेष्टन्ते निरन्तरं यथायथमपि संग्रहीतुं विषयान्, समाश्रयन्ति कूटकापट्यान्यालम्बन्ते वकव्रतं, चिकीर्षन्ति निभृतं परापकारं, द्विषन्ति परगुणानसूयन्ते परोत्कर्षाय, निन्दन्ति साधुचरितानि, प्रदर्शयन्ति सर्वत्रात्मोत्कर्षं, स्तुवन्ति निरुपमात्मानं, स्वयमाचक्षते च सप्रगल्भमात्मयशः। अर्थलोभादेते शुश्रूषन्ते नीचानपि, प्रतिगृह्णन्त्यसज्जातीयेभ्योऽपि। श्वान इव मुहुस्ताडिता अपि, मुहुरपमानिता अपि, मुहुर्दूरीकृता अपि सेवन्त ईश्वराणां द्वाराणि, तोषयन्ति चाटुवचनैर्धनिनां मनांसि, भवन्ति रजःकणा इव च प्रभावशालिनां चरणतल-लग्नाः, व्यवहरन्ति परमधार्म्मिका इव धार्म्मिकसमाजेषु, नास्तिकगोष्ठीषु च महानास्तिका इव।

किञ्चैषां स्नेहो वा, दया वा, प्रेम वा, वात्सल्यं वा, सौहार्दं वा, कुटुम्बिता वा, न्यायपरता वा, धर्म्मानुसृतिर्वा सर्वाण्येतानि स्वार्थमपेक्ष्यैव प्रवर्त्तन्ते। स्वार्थसाधनायैते वज्रादपि कठोरा भवन्ति, राक्षसेभ्योऽपि नृशंसमाचरन्ति, विकाराक्रान्ता इव न स्वजनमपि विजानन्ति, न्यायपरतामप्रीतिमिव परिवर्ज्जयन्ति, धर्म्ममपि तृणाय मन्यन्ते। अन्यच्च—नैते स्वार्थस्य कृते जातिं विचारयन्ति, न शौचमाद्रियन्ते, न नियमान् प्रतिपालयन्ति, न यमाननुतिष्ठन्ति न वा सदाचारानवलोकयन्ति, नाप्यात्मावमानमाकलयन्ति, न च महापातकान्यपि समीक्षन्ते। पिबन्ति मद्यं, भुञ्जते म्लेच्छान्नमभिदधते सहस्रशश्चानृतानि,

अभिसन्दधते शतशो विश्वस्तान्, जिहीर्षन्ति सर्व्वस्वं पश्यतामेव स- दक्तानां वृथार्द्रहृदयानां प्रभूणाम्। स्वार्थलिप्सान्वितधियामेषां योजनसहस्राण्यपि न दूरत्वेन विभाव्यन्ते, चिरसुहृदामप्युपरि वै- रिव्यवहारो भवति, स्थिरपरिचयोऽपि न स्मृतिमुपैति, अपवित्राण्यपि पवित्राकारं दधते, अधर्म्मा अपि धर्म्मरूपेण प्रतिभान्ति। ततश्च य- द्यत् शास्त्रविगर्हितं वा, धर्म्मविगर्हितं वा, लोकविद्विष्टं वा, स्वभाव- कलुषं कर्म्मैतेभ्यो रोचते, तत् सर्व्वं निःशङ्कं, निर्बाधं, सोल्लासं च सुकृतमिवानुतिष्ठन्ति।

इत्थं प्रबलकलिकालप्रभावाद्वा, पुनःपुनर्वैदेशिकविरुद्धधर्म्मसङ्घ- र्षाद्वा, ऊनविंशशताब्दयवसानोन्नतसभ्यताप्रादुर्भावाद्वा स्वस्ववंशस्थिति- मुल्लङ्घ्य, शास्त्रविहितस्व-स्व-जातीयकर्माण्यपि परिहृत्य विमा- र्गप्रस्थितेषु वर्णाश्रमाचारिमानवकुलेषु कर्म्मक्षेत्रस्य भारतवर्षस्यापि महान् दशाविपर्य्ययः सञ्जातः। यद्धि भरतक्षेत्रं पुरा पुण्यकर्म्मणां, पवित्रधर्म्माणां, सदाचाराणां साधुविद्यानां मधुरकलानां, साधुभावस्य, समुन्नतेः सभ्यतायाश्च शिक्षाभवनमादर्शस्थानञ्चासीत्, यत्र हि देशा- न्तरेभ्यो राज्यान्तरेभ्यो द्वीपान्तरेभ्यः सागरपारेभ्यो दिगन्तेभ्यश्च तथाहि— सर्वदोद्यदूग्रहतारानिकराभिनवपाटलप्रभापटलोपरञ्जितैः सद्य उपजायमानकिसलयजालैरिव तरुगहनैरुपशोभितशिखरदेशादा उदया- चलात्, समन्तात् सञ्चरद्वरुणराजहंसदेहद्युतिधवलितावयवान्निरन्तर- भगणास्तदर्शनत्रासपाण्डरादिव आ चरमाचलात्, घनीभूततुषारराशि- कृतजडिम्नः सद्य वसप्तर्षिमण्डलपादस्पर्शजनितानन्दजडादिवाऽऽधनद- दिङ्मुखभागादा च कौशिकतपःप्रभावरचिताभिनवसुरलोकाधिष्ठित-

त्रिशंकुतिलकाद्दक्षिणाशामुखात्,* प्रत्यहं नवा नवा मानवा विनयावनता बद्धाञ्जल्य आगत्यागत्य आन्वीक्षिकीषु, दण्डनीतिषु, वार्त्तास्वर्थ-शास्त्रेषु, पुराणेतिहासेषु, काव्यालङ्कारेषु, षड्दर्शनीषु, शिल्पकलासु, सङ्गीतशास्त्रेषु, गीतरचनासु, काव्यनिर्माणेषु, योगरचनावाक्यप्रयोगेषु, नाटकाभिनयेषु, नयेषु, विनयेषु, सदाचारेषु, सभ्यव्यवहारेष्वपरेषु च मनुष्यतासम्पादकगुणग्रामेषु शिष्यत्वमापद्य शिक्षामलभन्त। असेवन्त चाहमहमिकया यत्र सम्राडधिष्ठितमहानगरगोपुरं प्रतिदिवसं स्वदेशस-म्भूतप्रभूतमहार्हरत्नोपायनपाणयो द्वीपान्तरागताः प्रणताः करदीकृता भूमिपतयः। यत्रोषस्सु प्रत्यधिष्ठानं, प्रत्यायतनं प्रतिग्रामं प्रतिनगरं प्रत्याश्रममथितीर्थस्थाननिवहं च मठेषु वटुभिरुदात्तादिस्वरभक्त्या पठ्यमानवेदपाठध्वनिभिर्मध्याह्ने मधुरस्वाध्यायाभ्यासशब्दैर्यजमा-नैर्यथाविधिविधीयमान-यज्ञकर्मोच्चार्यमाणमन्त्रशब्दैश्च सायं द्विज-गणोपह्रियमाणसूर्यार्घ्यमन्त्रध्वनिभिस्त्रिसन्ध्यं द्विजातिगणजप्यमा-नाघमर्षणसूक्तनिर्घोषैश्च संपूरितं, क्षालिताशेषकल्मषं नितरामनिर्वचनो-यमानन्दमन्वभवच्छ्रोत्रयुगलम्। यत्र निरन्तरं दिगन्तप्रतिध्वनितै-र्वीराणां सिंहनादैः, सेनानां जयघोषैर्धनुष्मतां कोदण्डटङ्कारैः, सूत-मागधादिस्तुतिपाठकानां विजयसङ्कीर्त्तनैर्जयिनामानन्दकोलाहलैः स-र्वथा सुस्थचेतसां जानपदानां सोल्लासकलकलैश्च समन्तान्महोत्सव-

विभाव्यन्तामत्र—"यं च जलनिधितरंगधौतमेखलात्······आशैलादुदय-नाम्न इत्यत आरभ्य '······वृकोदरोद्दलितसौगन्धिकखण्ड-सुगन्धित-मण्डलादा-गन्धमादनात्, इत्येतदन्तानि कादम्बर्यां तारापीडवर्णने पठितानि बाण-वाक्यानि।

( सम्पादकः )

मयमिव, नित्यानन्दमयमिव चालक्ष्यत, यत्र च सद्योहुतानेकविध-पूतहव्यानां मधुरस्निग्धगन्धानादायादाय मन्दमन्दसञ्चारी मलयमरुन्निपुणो भिषगिव त्रिसन्ध्यं ग्रामनगरायतनेषु परिभ्रमन् जनानां बाह्या-न्तरमान्द्यमपनिनाय। उत्तस्थौ च यत्र सर्व्वेष्वेव प्रदेशेषु प्रतिदिवसा-घमर्षण-मन्त्रोच्चारणभस्मीभूताशेष-पापभार-भस्मराशिरिव, सनातनधर्मायतनपताकावलीव पवनान्दोलिता पारावतधूसरा सद्योहुत-हुताशनोत्थिता प्रगाढधूमलेखा त्रिसन्ध्यमग्निहोत्रिणां गृहेभ्यः। यत्र च चातुर्वर्ण्यविभागाद् ब्राह्मणाः शास्त्ररहस्यालोचने, क्षत्रिया राज्य-शासनक्रियायां, वैश्याः क्रयविक्रयादिवाणिज्यव्यापारेष, शूद्राश्च गृहनिर्माण-वस्त्रवयन-चित्रकर्म्मादिशिल्पानुशीलने नियुक्ताः स्वस्ववृत्तेरुत्कर्षं साधितवन्तः, कृतवन्तश्च ब्राह्मणा ज्ञानचक्षुरुन्मीलनेन, क्षत्रियाः सततं शान्तिस्थापनेन, वैश्या धनसंवर्धनेन, शूद्राश्च तत्तदभीप्सितद्रव्योत्पादनेन परस्परं परस्परस्य साहायकम्। तेन युगपदेव भारते बाह्याभ्यन्तरीणोन्नतिर्लब्धाधिकाराऽचिरेणैव परां काष्ठां प्राप। तदानीं भूमिश्चेयं सर्वविषय एव निष्प्रतिद्वन्द्वा बभूव। परमिदानीं सैव भूमिः, स्वधर्मपराङ्मुखतया स्वकर्म्मविरतेषु वर्णाश्रमचारिषु, सम्य-गुन्मूलितायाञ्च चातुर्व्वर्ण्यव्यवस्थायां, विलुप्तप्रायेषु चैकैकशो वर्णाश्रमाचारेषु, हीनवीर्य्या, निर्मर्य्यादा, निष्प्राणा, निरुत्साहा, निष्प्रभा, निरुत्सवा, निहतगौरवा, हृतसर्वस्वा, दीना क्षीणा, मलिना, म्लेच्छभूमिरिव भ्रष्टाचारा सञ्जाता ; कर्मक्षेत्रमप्यकर्मक्षेत्रं संवृत्तम्।

अहो! न श्रूयतेऽत्र ब्राह्मणानां वेदध्वनिर्नापि वीराणां दिगन्त-प्रतिध्वानि-सिंहनादो नवारातिकुलहृन्मर्मभेदी धनुष्मतां धनुषां टङ्कारः,

नैव वैश्यानां वाणिज्यवादः। न वहति मरुद्द्रव्यगन्धान्, नोद्गच्छन्त्यग्निहोत्रधूमलेखाः। अस्मादिव कारणाद् दुःखित इव न वर्षास्वपि पर्य्याप्तं वर्षति पर्जन्यो, न प्रसूते पर्याप्तानि शस्यानि भूतधात्री। दृश्यते ऋतूनामपि वैपरीत्यम्। येन सर्वत्रैव प्रसरत्यप्रतिविधेयं दारुणं दुर्भिक्ष-रक्षो विकरालं वदनं वितत्य, मिलिता च तेन सह क्रूररूपा महामारी, म्रियन्ते प्रतिदिवसमसंख्या दुर्भिक्षविकला महामारीकवलिताः प्रजाः, ततः श्रूयते केवलं हृदयभेदी कर्णोपतापी मर्म्मस्पृग् दारुणो हाहारवः समन्तात, प्रवहति तीव्रपूतिगन्धवाही सुदुःसहो नभस्वान्, उद्गच्छन्ति च निरन्तरं श्मशानभूमिभ्यो मृत्योर्जयपताकावलीव भीषणरूपाश्चिताधूमलेखाः।

नात्र क्वचिदपि निखिलशास्त्रपारदर्शिनः सकलकलाकुशलाः पुण्यदर्शनाः, पुण्यकर्माणः, पवित्रात्मानः, पवित्रदेहप्रभोज्ज्वलाः समुज्ज्वलब्रह्मवर्च्चसाः, समुन्नतघोणाः प्रशस्तललाटपट्टा धौतपट्टवस्त्रभृतः, समुन्नतकक्ष्याः, समुदारहृदयाः, अवतारा इव धर्म्मस्य, आश्रया इव प्रशमस्य, विलासभूमय इव दयायाः, उत्पत्तिक्षेत्राणीव सत्यस्य, कुलभवनानीव तपसां, निर्म्मला निरहङ्कारा निर्मत्सरा विनयार्ज्जवसम्पन्नाः स्वस्वधर्मनिरताः स्वाधीनचेतसः, श्रोत्रियाः, स्नातकाः, अग्निहोत्रिणश्च, सर्वथा सुस्थशरीरा ब्रह्मकल्पा ब्राह्मणाः। सरहस्यास्त्रविद्यानिपुणा रणाङ्गनसञ्चरणदक्षा विपक्षपक्षोन्मूलनदीक्षिताः प्रज्वलितप्रतापोपहसितप्रभाकरा, महाप्रभावा महासत्त्वा महोत्साहा महारम्भा आजानुलम्बितभुजा अपि लघुहस्ताः, क्षपिताशेषविग्रहा अपि सुरुचिरविग्रहाः, कृतविपक्षलक्ष्मीसंग्रहा अपि

वर्द्धितसपत्नलक्ष्मीकाः, अनुज्झितनया अपि विनयानुगता मूर्त्ति-
मत्क्षत्रधर्म्मा इव दुष्प्रधर्षाः स्वतन्त्रा राजन्यवीराः। नानादिग्देश-
परिभ्रमणचतुराः सुविज्ञाताशेषदेशतदुत्पन्नपण्यजातस्वभावा आशै-
शवाभ्याससञ्जातवाणिज्यपाटवा अकपटव्यवहारिण उदाराशया उदात्त-
समृद्धिसम्पन्ना वैश्यतनयाः। तथा हृष्टपुष्टावयवाः सदासन्तुष्टहृदया
अत्युत्कृष्टशिल्पसंवर्धनपरा धर्म्मानुरागिणः स्वकर्म्मनिरताः शूद्रजातीया
वा स्वच्छन्दश्चङ्क्रूर्य्यमाणा दृश्यन्ते। दृश्यन्ते तु केवलं भ्रष्टाचारा
निकृष्टव्यवहाराः स्वधर्म्मपरिभ्रष्टाः, पापक्लिष्टाः, धृष्टस्वभावाः, शोक-
तापाविष्टहृदया अवतारा इवाधर्मस्य, सहचरा इव कलियुगस्य,
निवासा इव यथेष्टाचारस्य, आश्रया इव गर्हितकर्म्मणां, उत्पत्ति-
क्षेत्राणीव छलानृतप्रतारणानां, कुलभवनानीव रोगदुर्भाग्यदारिद्र्याणां
विश्रामस्थानानीव महापातकानां विलासभवनानीव क्षुद्रतायाः,
कृशकाया अकालोत्पन्नजराशिथिलितदेहबन्धना दुर्भिक्षजर्ज्जरीकृता
जीर्णाः शीर्णा मलिनाश्छिन्नवाससो हताशाः कङ्कालशेषाः पिशाच-
परिवारा इव समन्ताच्चङ्क्रम्यमाणा जीवन्मृता मानवाः। सङ्घटन्ते चेतो-
प्यधिकक्लेशप्रदानि वर्णयितुमशक्यान्यनिष्टसहस्राणि, चिन्तापरिक-
ल्पितेषु च येषु द्रवति हृदयं, विकलीभवत्यन्तरात्मा, व्याकुलीभवति
चित्तम्। उत्क्रामतीव प्राणवायुर्न धैर्य्यमेति जीवात्मा, न निःसरति
वाणी, न प्रसरति लेखनी, भवन्ति च निश्चेष्टानीन्द्रियाणि। सम्प्रत्ये-
कैवावस्था चतुर्वर्णानाम्। सर्व्वे एव श्ववृत्त्या वर्त्तयन्ति, श्ववृत्ति-
व बहु मन्यन्ते, ततश्च विस्मृतस्वगौरवा विस्मृताभिमानाः श्वान
इव लिहन्ति नीचवर्णीयानामपि स्वप्रभूणां चरणतलरजांसि, भुञ्जते

तेषामुच्छिष्टानि, सहन्ते चानिर्वेदं तेषां चरणप्रहारान्। अन्त्यजा अप्युच्चासनं भजमाना ब्राह्मणान् वाहयन्ति, ब्राह्मणाश्चानिर्वेदं बद्धा-ञ्जलयस्तेषां पुरतः प्रणमन्ति। न ज्ञायते ऽपरं वा किं भविष्यतीति !

अथेदानीं साभिनिवेशं विविच्यमानेषु भारतीयपूर्वापरावस्था-भेदेषु शास्त्रविहितसनातनवर्णाश्रमधर्मपरित्याग एवैतस्य शोचनी-यस्य दशात्ययस्य निदानतया प्रतिभात्यस्माकम्। यतो यावच्चातु-र्वर्ण्यविभागो वर्णाश्रमधर्म्मानुरागश्च प्रजानामवर्त्तत, तावदेव भारतस्य स-मुन्नतिरासीत्। तदपगमे च यादृग्दुर्दशा भारतस्यापतिता सा हि सर्वेषां प्रत्यक्षगोचरैव। अतो भारतभूमेः समुन्नतिसम्पादनं, पूर्व-गौरवस्यापलब्धि प्रति वर्णाश्रमाचारस्य पुनः पूर्ववत् प्रचारणमपहाय नास्त्यन्यः कोऽप्युपायः। अतएव भारतस्य प्रकृतं हितं कामयमानैः सर्व्वैः सर्वात्मना सर्वदैव तथा यत्नः करणीयो यथा पुनरेव चातुर्व्व-र्ण्यव्यवस्थाया वर्णाश्रमाचारस्य च पूर्ववत् प्रचारो भवेत्, भवेयुर्ब्रा-ह्मणाश्च पुनरेव ब्राह्मणा इव क्षत्रियाश्च क्षत्रिया इव, एवमन्येऽपि वर्णा यथा पूर्व्वरूपतामापद्येरन् तथैव यत्नः करणीय इति। कर्म्मभूमिरियं यथावदनुष्ठितैस्तैस्तैः शास्त्रविहितकर्मभिरेवोन्नतिमर्हति। न च भोगभूमीनामिवैहिकभोगमात्रसाधनान्यशास्त्रीयाणि कर्म्माण्यस्याः कि-मप्युपकर्त्तुं क्षमन्ते।

अथापेक्षिते वर्णाश्रमाचारप्रचारे प्रथममपेक्षणीयं भवति वेदवेदा-ङ्गप्रभृतीनां प्राचीनशास्त्राणां सम्यगालोचनम्। शास्त्राणां सम्यगनु-शीलनमन्तरेण हि न कदापि वर्णाश्रमाचाराणां प्रचारः सम्भवति। अपेक्षते च शास्त्रानुशीलनं प्रगाढव्युत्पत्तिं च संस्कृतभाषायाम्।

सर्वाणि खलु शास्त्राणि संस्कृतभाषायां लिखितानि, विना संस्कृत-ज्ञानं दुर्लभमेव शास्त्ररहस्यविज्ञानम्। संस्कृतव्युत्पत्तिः पुनरपेक्षते-ऽद्यापि शास्त्रालोचनमात्रनिरतानां ब्राह्मणकुलधुरन्धराणां विदुषां साहाय्यकम्। ततश्च भारतस्य पूर्व्वगौरवमवस्थापयितुमिच्छुभिः प्रथममेव प्राचीनशास्त्रव्यवसायिनां विदुषां ब्राह्मणानामाश्रयो ग्रहणीयो यथा-शक्ति तेषां पुष्टिश्च साधनीया। इत्येवालोच्य मनसि वयं तान् भारतीय-विलुप्तपूर्वगौरवावशेषचिह्नभूतान् शास्त्रमात्रकृतश्रमान् विदुषो ब्राह्मणान् शरणं प्रपन्नाः स्मः।

अयि भो विद्वद्वरा भूमिदेवाः! तत्रभवन्तो यदस्मिन्नैहिक-सुखमात्रसम्पादनप्रबललालसोद्दीपनेऽपि कलिसमये तदुद्देश्यसाधक-प्रभूतार्थाज्जर्न-साधन-राजविद्याभ्यासपराङ्मुखास्तत्प्रत्यर्थिभूतां दारिद्र्यमात्रफलकां भारतीयप्राचीनविद्यां प्रत्यनुरक्ता अनन्यव्यापारास्ता-मभ्यस्यन्ति तदाश्रयेण च जीवितमतिवाहयन्ति, एतदेवाख्यापयति श्रीमतां भवतां विमलार्षवंशजन्मोचितं हृदयस्य सुमहदौदार्य्यमन्तःक-रणस्यानुपममाहात्म्यं तथाद्यापि भवतां धमनीषु तदतिपूतार्षरक्ताවि-च्छेदप्रवहणञ्च।

लक्ष्मीसरस्वत्योः स्थिरविवादाच्चिरमेव प्रचरति दारिद्र्यं पण्डि-तेषु, सर्वत्रैव समाजेषु, सर्वेषु च देशेषु पण्डिता दरिद्रा भवन्तीति प्रसिद्धमेव। दारिद्र्यं खलु भूषणमेव भवतां न दूषणमिति भवद्भि-रेवार्थसाधनविद्यापराङ्मुखतया दारिद्र्याङ्गीकरणेन सुव्यक्तं संसूच्यत एव। अत एव प्रबलदारिद्र्योपहतेष्वपि युष्मासु निर्बाधं प्रवर्त्तते-ऽभ्यर्थनमस्माकम्। भवन्तो यथा भारतस्य विलुप्तपूर्वगौरवावशे-

षचिह्नभूतास्तथापुनरारोपिष्यमाणमहत्त्वस्यापि मूलभित्तिस्वरूपा एव। ये खल्विह तत्रभवतो भवतः परित्यज्य भारतस्य पूर्वगौरवं प्रतिष्ठापयितुमीहन्ते, ते भृशमविवेका महामूर्खा मूलमाहत्य शाखास्वेवाभिषिञ्चन्ति। यथा हिमालयाद्याः कुलपर्व्वता मुहुःप्रबलवैदेशिकविपक्षसगर्वपदाघातजर्ज्जरितं शीर्णप्रायं भारतस्य भौतिकशरीरं सन्धारयन्ति भवन्तोऽपि निरन्तरविविधविरुद्धधर्म्मसंघर्षक्षयितसत्त्वमासन्नतरावसानं वर्णाश्रमकर्मोपदेशपरं कर्मभूमेर्जीवितभूतं धर्मशास्त्रनिचयम् । यदि भवन्तो नाभविष्यन् , न जानीमहे, का गतिरभविष्यत् प्राचीनशास्त्राणाम्, मुहुर्मुहुः सङ्घटितेषु हि प्राचीनधर्म्मपुस्तकविलोपहेतुभूतेषु राष्ट्रोपप्लवेषु, धर्म्मविपर्ययेषु, प्रत्यहं सहस्रशो भस्मावशेषीकृतेषु दुर्दान्तयवनभूपाज्ञया नानाविधसंस्कृतनिबन्धेषु, समुचितयत्नाभावात् कीटमूषककवलितेषु च निरन्वयपण्डितगृहस्थितानेकशास्त्रग्रन्थेषु, ग्रामदाहभूमिकम्पाद्युत्पातपरम्पराविनष्टेषु चासंख्यप्रबन्धेषु यदद्यापि वेदवेदाङ्गप्रभृतीनि वर्णाश्रमाचारमूलानि शास्त्राण्यसंख्यानि च दर्शनेतिहासपुराणानि लभ्यन्ते, तत्र भवतामनन्यसाधारणस्वधर्म्मानुरागस्यैव हेतुता । अत एव भवन्तो धन्याः, धन्यश्चायं देशो यत्रैवंविधाः स्वधर्म्मानुरागिणोऽद्यापि निवसन्ति भवद्विधाः । युष्माकममुमेवाविचलितं स्वधर्म्मानुरागमवलोक्य समागता वयमस्यैव स्वधर्म्मानुरागस्य दार्ढ्यमुत्पादयितुं युष्मच्चरणमूलम् । सविनयं प्रार्थामहे च न युष्माभिः कदाचिदपि विचलितव्यमस्मात् स्वदेशोद्धरणफलकात् स्वधर्म्मपालनमहाव्रतात् । सुष्ठु विजानन्त्येव भवन्तः सर्वत्र स्वधर्म्मनिरता एव सम्यक् सुखेनासते, स्वच्छन्दं

सगौरवं ससम्मानश्च विचरन्ति, लभन्ते च स्वाभिमतां समृद्धिम्। तत्रश्चोक्तं लोकानुग्रहकारिणा श्रीमता भगवता कंसारिणा—

"स्वधर्मे निधनं श्रेयः" इति—

स्वधर्म्महीनास्तु नरा नैहिकं नापि पारत्रिकं शुभं प्राप्तुमीशते। ते खलु मयूरपिच्छाच्छन्नाः काका इव परैः परिभूयन्तो, स्वजातीयेभ्योऽपि परमनादरं प्राप्नुवन्ति, भवन्ति च ते इतो भ्रष्टास्ततो नष्टाः। अत एवोक्तं तेनैव—

"परधर्म्मो भयावहः" इति च।

विशेषतश्चिरध्वस्तजातीयगौरवाणां सुचिरमधःपतितानां हि जनानां स्वधर्म्मानुसरणं विना नास्ति कोपि पुनः समुद्धरणोपायः। ततश्चेदानीं स्वधर्म्मे पूर्वतोऽधिकं दृढीभवद्भिः श्रीमद्भिर्भवद्भिरेव भारतस्य पूर्व्वगौरवप्रतिष्ठापने पूर्व्वं प्रदर्शनीयः पन्थाः। स्वधर्म्मपरिभ्रष्टैः सहस्रैरपि समाजं संस्कुर्व्वाणैस्तथाविधैरसंख्यैरपि राजनीतिमालोचयद्भिर्न स्तोकोऽप्युपकारः सम्भाव्यते। तैः केवलमुत्पाद्यते महाजनोपहास्यता, राजपुरुषाणां विरागश्च। किञ्चानुकूलदैवानुग्रहेण राजा स्वयमेव प्रजानां पैतृकधर्म्मरक्षणे कृतसङ्कल्पः सर्व्वमेव स्वधर्म्मानुसरणाय प्रोत्साहयति जनम्। न कस्याप्यभीष्टधर्म्माचरणे स्तोकमपि प्रतिबध्नाति, न वा चिराचरितानि धर्म्मकार्य्याणि व्याहन्ति, एवं स्वस्वधर्म्मप्रतिपालनानुकूले नरपतौ वर्त्तमाने यदि यूयं स्वदेशगौरवप्रतिष्ठामूलं स्वधर्म्माचरणानुकूलं पन्थानं न प्रदर्शयेत तदा युष्माकं सर्व्वमेवेयत्कालावधि स्वधर्म्मपालनव्रतमेकपदमेव निष्फलं भवेत्। किञ्च विदितं भवद्भिः स्वदेशगौरवप्रतिष्ठापकैर्हि जनैः कति कति च

दुष्कराण्यसाध्यानि कर्माणि सम्पाद्य, सहित्वा च निरन्तरमविच्छिन्न-सुदुःसहक्लेशराशीन्, तृणवत्परित्यज्य प्राणेभ्योऽपि प्रियतराणि पुत्रकलत्राणि, विसृज्यावलीलया ज्ञातिस्वजनबान्धवान्, निगृह्य च यावज्जीवं विषयेभ्य इन्द्रियाणि, पणीकृत्यात्मप्राणान् स्वदेशस्य पूर्व्व-गौरवमवस्थापितमिति। भवद्भिस्तु न किमपि तथाविधं दुष्करमसाध्यं वा कर्मानुष्ठेयं, न किञ्चिदपि परित्याज्यं, न कश्चिद्विद्रोहः कार्य्यः, नाप्यालोच्या दुरवगाहा राजनीतिः, केवलं स्वधर्म्मपालनस्वीकार-कृदभ्र नटनश्रमेणैवाकल्पस्थायि देशोद्धरणसम्भवं निर्मलं यशो यदि लभ्येत, तदा किं न लब्धं स्यात्? अत एव भवन्तो विसृज्याकिञ्चित्-करधनार्ज्जनतृष्णामविगणय्य च विघ्नसहस्राणि पितृपितामहा इव यथाविधि वर्णाश्रमाचारमनुवर्त्तध्वम्। प्रचारयन्तु संस्कृतविद्यां, प्रकाशयन्तु शास्त्ररहस्यानि, त्यजन्तु विषयपिपासां, सञ्चिन्वन्तु ब्रह्मवर्च्चसम्, परिहरन्तु शाठ्यकापट्यानृतानि, स्वीकुर्वन्तु सत्यं, प्रतिपालयन्तु यमनियमादीन्। इत्थं भवत्सु पूर्व्वप्रकृतिमापन्नेषु पुनरेव सर्व्वं यथायथं भविष्यतीत्यस्माकं ध्रुवो विश्वासः।

> "पातु पृथ्वीं नृपः स्वर्णमवत्विन्द्रस्तपस्विनः।
> वयं स्वधर्म्मं रक्षामः सर्वः स्वार्थं समीहते॥"



# उद्भिज्ज-परिषत्

—००:०:००—

अस्ति ह्यस्माकं किमपि बलीयः प्राकृतसौन्दर्य्यसन्दर्शनव्यसनमाबाल्यादेव। ततश्चानन्ताविच्छिन्नस्वजनपोषणावश्यकबहुविधव्यापारप्रवाहेभ्यः कथञ्चिद्विरामं लब्ध्वैव कदाचिद्विजनहिमालयपादमूलं, कदाचिद्वा सर्वथा जनसम्पर्करहितं महारण्यमभिधावामः। साम्प्रतं तथाविधमवसरं सम्प्राप्य कतिपयाप्तबन्धुसमेताः कलिकातासन्निहित-'सुन्दरबन'-शोभासन्दिदृक्षवः, कस्मिंश्चिच्छुभेऽहनि प्रस्थिता वयं, नानाजनपदानतीत्य कस्मिंश्चिद्दिवसे दूरमधिरूढे भगवति सहस्ररश्मौ, मकरसंक्रमजनितेषत्प्रखरभावभावितप्रभाकरकरनिकरैर्मन्दतामुपगते शिशिरशैत्ये, समन्तात् सानन्दं सक्रीडं मन्दं मन्दञ्च विचरत्सु मृगकुलेषु, समासन्नमधुमासप्रत्युद्गमनार्थमिव नवपल्लवरागरञ्जितकलेवरेषु वनलतातरुनिकरेषु, तत्तद्वनान्तशोभाकृष्टचेतसोऽविज्ञाताध्वश्रमा एव तथाविधकान्तारसुलभदिग्भ्रमवारणक्षमकतिपयवनेचरसहाया नानावनस्पतिलतागुल्मघनच्छायान्धकारितं महारण्यमध्यभागं प्रविष्टवन्तः।

अथ तत्र प्रविशतामेवास्माकं कर्णकुहरे सहसा कश्चित्सुमहानभ्रभेदी "सायँ सायँ" इत्यव्यक्तशब्दस्तादृशगभीरवनप्रदेशस्य स्तिमितभावमपाकुर्व्वन् प्रविष्टः, क्षणाद्विलीनश्च। ततः कथमेष, कुत एष,

इति तत्कारणानुसन्धित्सया समन्ताद्विक्षिप्तदृष्टयस्तस्य महारण्यस्य सुदूरमध्यभागे सर्वथाप्राणिसम्बन्धरहिते कस्मिंश्चिदेकान्तकान्तारे समवेतसभ्यनिवहानिव श्रेणीबन्धावस्थितान्, एकतानचेतसा किमिवाकर्णयत इव निश्चलनिष्पन्दान्, सञ्जातपुलकानिव निश्चलोदूर्ध्वीकृतपत्रान्, क्वचित्क्वचिदनुमोदयत इवेषत्सञ्चालितशिरोभागानवसरेषु प्रमोदमानानिव संघर्षितपल्लवकराग्रान् सर्वविधविटपिनोऽपश्याम । तेषामपि मध्यभागे व्याख्यानकृदिवेतस्ततः सञ्चालितपल्लवकराग्रः सुमहानश्वत्थः स्थित इति ।

अथ सविस्मयं तदृष्टपूर्वं दृश्यं पश्यतामेवास्माकं सहसा सर्वविटपिपल्लवान्दोलनपुरःसरं समुत्थितः पूर्वोक्तरूपो महान् ध्वनिस्तत्क्षणं विलीनश्च । तथाविधादद्भुतव्यापारमवलोक्य समुद्रिक्तविस्मयोपहतविवेकप्रसराः कर्त्तव्यावधारणविमूढा जीवन्मृता इव, ग्रहग्रस्ता इव, भूताविष्टा इव, निश्चला निर्व्यापाराः शून्यहृदयास्तूष्णीमेवास्मत्सहचरवनेचराणां मुखेषु दृष्टिं व्यापारयन्तः स्थिताः ।

तेत्वेतावतैवोन्नीतास्मदभिप्रायाः किञ्चिद्विहस्याब्रुवन् । वृक्षाणां परिषदियमत्राश्वत्थो वक्ताऽपरे श्रोतारः । निरन्तरसहवासाद्वयमेतेषां भाषासु सम्यगभिज्ञा एव । तद् यदि भवद्भ्यो रोचेत वयमेतेषां प्रजल्पनमनुवदामः । ततोऽस्माभिः सानुनयमभ्यर्थितेषु तेष्वन्यतमः प्रवया वक्तुमारेभे ।

अश्वत्थो वदति,—भो भो नानादिग्देशसमागताः सुभद्रा वनस्पतयः, परमप्रियतमा लतावध्वश्च, सावहिताः शृण्वन्तु भवन्तः, अद्य मानववार्त्तैवास्मत्समालोच्यविषयः । अत्र खल्वस्माभिर्बहु

वक्तव्यमस्ति, भवद्भिश्च बहु श्रोतव्यं, मन्तव्यं, ज्ञातव्यं, शिक्षितव्यं, निदिध्यासितव्यञ्चास्ति, तदत्र श्रीमद्भिः श्रीमतीभिश्च दत्तावधानैर्भवितव्यमिति ।

मानवा नाम सर्वासु सृष्टिधारासु निकृष्टतमा सृष्टिः । समन्तादभिनवोत्तरविलक्षणसृष्टिमुत्पादयता भगवता जगत्सवित्रा यादृग् बुद्धिप्रकर्षः सृष्टिनैपुण्यञ्च प्रदर्शितम्, मानवसर्गं विदधता पुनरनेन तत् सर्वमेकपद एवापहारितम् । एतावदुच्चावचसृष्टिपरम्परामवलोक्य स्रष्टुरगाधबुद्धिमत्त्वं 'सृष्टिश्चेयं बुद्धिपूर्विकेति' यदस्माभिरनुमितमासीत् पूर्वम्, साम्प्रतं मानवसर्गसन्दर्शनेन तु निःशेषतोऽपागतोऽसौ संस्कारः, सञ्जातश्च तद्विपरीतः 'स्रष्टुर्न स्वल्पापि बुद्धिर्विद्यत' इत्येवंरूपः कोऽपि निश्चयः ।

तथाहि मनुष्यास्तावत् स्वसृष्टित आरभ्यैव सर्वविधया चेष्टयात्मनां सम्यक् स्रष्टृप्रतिद्वन्द्वितां प्रख्यापयितुमारब्धवन्तः, प्रवृत्ताश्च सर्वविधेषु व्यापारेषु स्वेषां परमेश्वरस्य समकक्षतां प्रख्यापयितुम् । किञ्च साक्षात् प्रकारान्तरेण वा परमेशसत्तोच्छेद एव तेषां चरमलक्ष्यः । तथाहि दृश्यते तेषु प्रधानतस्तावन्नास्तिकास्तिकेतिसम्प्रदायद्वयम् । तत्र नास्तिका नाम "ईश्वरासिद्धे" रिति तारस्वरेणोद्घोषयन्तः सर्वथा युक्तिप्रमाणाभ्यां जगत्कर्तुः परमेश्वरस्यास्तित्वं विलोप्य बाह्वास्फोटपुरःसरं जगदिदं निरीश्वरं प्रतिपादयन्ति । मनुष्येषु येषां बुद्धेः प्राखर्य्यं, तीक्ष्णता चास्ति, विद्यावत्तायाश्चाधिक्यं वर्तते, ते सर्व एव मतमिदमाद्रियन्ते, सम्यगनुसरन्ति च, विशेषतस्त्वैश्वर्य्यमदमत्ताना धनवतां किल मतिऽस्मिन्

महत्यास्था दृश्यते। तेह्यात्मानमप्रतिहतैश्वर्य्यसम्पन्नं मत्वा न बिभ्यति किञ्चिदपि यथेच्छाचरणात्। प्रबलकलिकालविलसितमेतदिति तु श्रीमद्भिर्नावगन्तव्यम्, सम्पूर्णचतुष्पादधर्म्मसम्पन्ने सत्ययुग एव मतमिदं सनकसनन्दाभ्यामुद्भावितम्, ततश्च सनातनकपिलाभ्यां महर्षिभ्यामुद्घोषितं जगति, अथ क्रमेणासुरि-पञ्चशिखाचार्य्याभ्यां सर्वतः प्रचारितमभूत्। दृश्यते चैतन्मतप्रवर्त्तकानामुपरि सर्वेषामेव भारतवासिमानवानां कोऽप्यान्तरीणः श्रद्धातिशयो यतस्ते प्रत्यहं स्वपितृतर्पणादपि प्राक् तान् तर्पयन्ति। तर्पणमन्त्रस्तु-

"सनकश्च सनन्दश्च तृतीयश्च सनातनः।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा।
सर्वे ते तृप्तिमायान्तु मद्दतेनाम्बुना सदेति।"

अथवा न केवलं भारतभुवां मानवानां, मतेऽस्मिन् निखिलभूमितलसम्भूतमर्त्यानामेव सम्यक् समादरो दरीदृश्यते। किंवा, दूरेऽस्तु तावन्मनुष्याणां कथा, सकलसुरलोकाचार्य्यपदमधिकुर्वतो भगवतो वाचस्पतेरपि मतेऽस्मिन् सुमहान् पक्षपातः सञ्जातस्तेनासौ मतस्यास्य "चार्वाकदर्शन"-रूपेण परिणतिं विधाय भुवनेषु प्रचारितवान्। बुद्धदर्शनमप्येतन्मूलकमिति निःसंशयं कथयितुं शक्यते। स्पेन्सर-मिल-प्रमुखाः पाश्चात्यदेशोज्ज्वलमणिमयशेखररूपाः खलु विद्वांसो मतमेतदुपजीव्य विविधान् सारगर्भान् निबन्धान् विरचितवन्तो यानधीत्य मानवा अचिरेणैव सङ्घशस्तेषां शिष्यत्वमापन्ना इति श्रूयते। वस्तुतः परमेश्वरसत्ताङ्गीकारो नाम समुन्नतपदारूढानां मानवानां विद्याबुद्धिविवेकशक्तीनामस्वातन्त्र्यस्वच्छन्दताव्यञ्जकतया समाजाश्रितः शिरोवनमनकलङ्का-

करो भवति। तेषान्नये परमेश्वरसत्ताङ्गीकारस्तदुपासनार्थकधर्म्माचरणानि च विद्यापौरुषहीनानां जीविकानिर्वाहकाण्येव। "नास्तीश्वरो नास्ति परलोकः।" ततश्च—"यावज्जीवेत् सुखं जीवेद् ऋणं कृत्वा घृतं पिबेत्।" इत्येव तेषां चरमः सिद्धांतः। ईश्वरप्रेम परित्यज्य मनुजेष्वकपटप्रेम विधातुमेव तेषां सर्वात्मना प्रवृत्ति; परमेशोपासनास्थाने मानवसमाजोपसनैव तेषां शास्त्रविहितं पवित्रव्रतम्। ततश्चाहिंसास्तेयसत्याद्यनुसरणं तेषां सहजाचारो येन ते नास्तिका अपि बह्वास्तिकेभ्य सम्मानमर्हन्ति; समाकर्षयन्ति च सामाजिकानां हृदयम्।

अथ ये आस्तिकास्तो वाक्यतः परमेश्वरस्य सत्त्वाङ्गीकारेण तद्विरुद्धवादिनो नास्तिकान् भृशं विगर्हयन्तोऽपि वस्तुगत्या भङ्ग्यन्तरेण नास्तिकमतमेव परिपोषयन्ति। पर्य्यालोचनया तेषामास्तिक्यवादिनां मतं बुद्धिमद्भिर्नास्तिक्यवादतो निःसारतया प्रतीयते। तेषां खलु वचनानि बहिरीश्वरसत्ताप्रतिपादकान्यपि मत्स्यादिनिकृष्टजीवविशेषवामनादिमानवविशेषाणामीश्वरावतारत्व-तदभेदप्रख्यापकतया हि वस्तुतः परमेश्वरस्यानन्यसाधारणालौकिकैश्वर्य्यापहारकाण्येव।

आस्तिकानान्तावत् प्रधानतो द्वौ भेदौ वर्त्तेते। एके द्वैतवादिनोऽन्ये ऽद्वैतवादिन इति। तत्र द्वैतवादिनां मते परमेश्वरवत् सन्त्यन्यान्यपि कानिचिज्जगन्निर्म्माणकारणभूतानि नित्यवस्तूनि ततश्च तैः परमेशस्याद्वितीयत्वादिविशेषधर्माणां लोपः कृतः। अद्वैतवादिनस्तु 'एकमेवाऽद्वितीय'मिति श्रुतिवचनमाश्रित्य परब्रह्मणोऽन्यस्य कस्यचिदपि परमार्थसतो वस्तुनः सत्तां नाङ्गीकुर्व्वन्ति। अद्वैतवादिनामपि शुद्धाद्वैतवादिप्रमुखावान्तरभेदो वर्त्तते। तेषामप्रासङ्गिकत्वादलमत्र तद्-

प्रस्तुतचिन्तया। द्वैताद्वैतवादिन उभये च यथा परमेश्वरस्य सत्त्वमङ्गीकुर्वाणा अपि तस्यैश्वर्य्यं विलोपयितुं प्रवृत्तास्तदेवात्र भवतां प्रदर्श्यते। तत्र द्वैतवादिनो नैयायिकप्रमुखाः केचनानुमानेन जगत्कार्यं प्रति कर्तृतया परमेश्वरस्य सत्तां निश्चित्य तस्य च नित्यज्ञानेच्छादिमत्त्वं स्वीकुर्व्वाणा, अप्यदृष्टदोषतस्तदैश्वर्य्योपघातकाः सञ्जाताः। तेषां नये अस्ति खलु कश्चिदीश्वरः, स च नित्यज्ञानेच्छादिधर्म्मवानपि जगत्कार्य्यवैचित्र्यं प्रति तस्य सर्वमैश्वर्य्यं सदप्यसदिव न किञ्चिदुपयोगि भवति। जगत्यस्मिन्यावन्ति विचित्राणि कार्य्याणि दृश्यन्ते तानि सर्वाणि प्राक्तनकर्मसञ्चिताऽदृष्टप्रभवाण्येव। न ह्यदृष्टस्य सहायकमन्तरेण परमेश्वरेण स्वेच्छया तृणांकुरमपि समुत्पादयितुं शक्यते, नोत्पादयति वासौ ब्रह्माण्डेऽस्मिन् क्षुद्रात् क्षुद्रतरमपि वस्तु विना अदृष्टसाहाय्यम्। यदि नाम स्थावरास्थावरात्मकं यावत्कार्य्यं प्रत्यदृष्टस्यैव साक्षात् कारणत्वं स्वीक्रियते, यन्नदृष्टवशादेव सुखं, दुःखं, जन्म, जरा, मरणञ्च प्राणिषु संघटते यद्यदृष्टवशादेव बीजादंकुरस्यांकुरात्तरुलतादिनानाविधौषधीनां, तेषु च पुष्पाणां, पुष्पेभ्यश्च फलानान्तेभ्यः पुनर्बीजानामुत्पत्तिर्भवति, किम्बहुना यदि नामादृष्टमन्तरेण विश्वेऽस्मिन् किमप्यभिनवं वस्तूत्पादयितुं, समुत्पन्नस्य स्तोकमपि वाऽन्यथाकर्त्तुं परमेश्वरस्य किमपि सामर्थ्यं न विद्यत इति, तदा का नामापेक्षा तथाविधस्य स्वतोऽनीश्वरस्य परमेश्वरस्य सत्तायाम्? तस्य सत्ताऽप्यसत्तया तुल्यैव। ततश्च सत्यमभिहितम्—

'नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति।'

तेषां नये प्राक्तनशुभाशुभकर्मजनिताऽदृष्टप्रभावादेव जगति नानारूपाणि शुभान्यशुभानि च घटन्ते, अदृष्टप्रभावादेव कण्टकानां तीक्ष्णाग्रता, पर्वतानामुत्तुङ्गशिलोच्चयरूपता, समुद्राणामगाधजलराशिता, ऋतूनां पर्य्यायेणानुवृत्तिस्तत्तत्फलकुसुमादिर्वोभिस्वश्च । अदृष्टप्रभावादेव चन्द्रमसि स्वाभाविकं शैत्यं, भास्वति सन्तापः, ग्रहतारकाणां राशिचक्रपरिभ्रमणं जायते । किंवा बहुनोक्तेन जगत्यस्मिन् यावन्तोऽर्थाः स्थावरजङ्गमात्मका द्रव्यगुणकर्मजातिरूपा वा सम्भवन्ति, सम्पाद्यन्ते, दृश्यन्ते श्रूयन्तेऽनुभूयन्ते, प्रलीयन्ते च, तेषां सर्वेषां सत्तामसत्तां प्रत्यदृष्टस्यैव साक्षात् कारणत्वमीश्वरस्तु 'साक्षिगोपाल' इव सर्वत्र साक्षिरूपेण तिष्ठति । ततश्चास्याप्रतिहतैश्वर्य्यमत्तादिगुणग्रामस्याजामलस्तनस्येव निरर्थकत्वमायातम् । तस्य रोषेण तोषेण वा संसारेस्मिन् न कापि हानिर्लाभो वा संजायते, इदानीं विचार्य्यतान्तावत्तथाविधेश्वरसत्तामङ्गीकुर्वद्भ्यो नास्तिकानां को नाम विशेष इति । )

अदृष्टस्यैवमप्रतिहतमैश्वर्य्यमवलोक्य मीमांसकास्तावन् मन्त्रशक्तितः पृथग्भूतां ईश्वरसत्तां नाङ्गीचक्रुः । ततश्चेश्वरः खलु वाङ्मात्रत्वे पर्य्यवसितः । कथयध्वमिदानीं किन्नामास्मादप्यधिकं नास्तिक्यं भवितुमर्हतीति । यैः किल सर्वशक्तिमतः सर्वज्ञस्य परमेशितुर्नामशेषता प्रतिपादिता तेऽपि किमास्तिकपदवीमधिकर्तुमर्हेयुः ? ( समन्तात् करतालिकादानानन्तरं सोच्चैर्हासम्, नहि, नहि, नहि, कदापि नहीति सभ्यानां युगपदुच्चारितप्रतिवचनकलकलः प्रादुरभूत् , अश्वत्थश्च कश्चित कालं तूष्णीं

स्थित्वा पुनरपि वक्तुमुपचक्रमे । पादपत्वाद् व्याख्यानावसरेऽन्तरान्तरा तस्य जलपानव्यापारस्तु नास्माभिः प्रत्यक्षीकृतः, न वा शुभ्रवस्त्रखण्डेन मुखमार्जनव्यापारः, किन्तु व्याख्यानावसाने कस्यचिदतिसन्निहितसम्पूर्णस्य सरसः सद्योऽर्द्धजलशोषणसन्दर्शनादत्रावसरे तेनासकृत् प्रकामं जलमापीतमिति निर्बाधमनुमितमस्माभिस्तदानीम् )—

अश्वत्थ वदति—अथ ये नामाद्वैतवादिनः, ( अहमत्राद्वैतवादिनामवान्तरभेदान् नीरसतया परिहाय सामान्यत ब्रवीमि )—ये नामाद्वैतवादिनस्तेऽपि परमार्थतो नास्तिका एव । तेषामीश्वरस्तु कश्चिद्विलक्षण एव जगत्कर्त्तापि स्वयं न किमपि करोति, सर्वनियन्तापि सम्यगुदासीनस्तिष्ठति, स "सर्वतः पाणिपादोऽपि" न किञ्चिद् गृह्णाति, न च पादमेकमपि गच्छति, "सर्वतोऽक्षिशिरोमुखोऽपि" न किञ्चित्पश्यति, न किञ्चिद्वदति, न कस्यापि करुणार्त्तप्रलापमाकर्णयति, न कस्मिंश्चिद्दयते, न कञ्चिदुद्धरति, त्रायते वा, न कस्मिन्नपि स्निह्यति, नवा कस्योपरि प्रीयते, न स्तुत्या सन्तुष्यति, न निन्दया क्रुध्यति, न पूजां गृह्णाति, न नतिमाद्रियते, न गुणिनं पुरस्करोति, न निर्गुणं परिजहाति, किं बहुना स परिणामरहितोऽपि प्रकृतिमापन्नः, सर्वज्ञोऽपि विमूढस्वभावः, नित्यमुक्तस्वरूपोऽपि मायापाशबद्धः, स्वतन्त्रोऽपि प्रकृतिव्यापाराधीनः, स्रष्टापि सृष्टवस्तुष्वन्तर्भवति, कर्तापि कार्य्यभावं भजते, अविनश्वरोऽपि न क्षयमतिक्रामति । एवमद्भुतमीश्वरमालोक्यालङ्कारिकैः खलु 'विरोधाभासस्या'विर्भावः कृतः । एवंविधेश्वरस्वरूपावगतये तन्मतस्य

क्वापि विवृतिरपेक्ष्यते। ततश्चात्र यथावश्यकमद्वैतवादिनां मतं विवृणोमि।

अद्वैतवादिनः खलु "एकमेवाद्वितीयम्" इत्यादि-श्रुतिवचनजातमवलम्ब्य "एकमेव परब्रह्म विहाय नान्यत् किमपि सद्वस्तु विद्यते" इति वदन्ति। तेषां प्रमाणन्तु—

"इदं सर्वं पुरा सृष्टेरेकमेवाद्वितीयकम्।
सदेवासीन्नामरूपे नास्तामित्यारुणेर्वचः॥"

अन्यत्सर्वं जगदसत्, मिथ्याभूतं मायाविजृम्भितमात्रम्। तद्धि ब्रह्म वस्तु स्वप्रकाशं चैतन्यस्वरूपं जगदिदं समन्ताद्व्याप्य स्थितम्, अखण्डमपि मायावशेनांशतोविकृतमंशतश्चाविकृतं, विशुद्धस्वरूपावस्थितम्। तस्य विकृतांश एव विचित्रानन्तजगद्रूपेण परिणतोऽविकृतांशस्तु विशुद्धचैतन्यरूपः। चैतन्यस्वरूपस्यांशस्यापि न ज्ञानवत्तादिधर्मा विद्यन्ते। तस्याकृतिः प्रकृतिरपि न स्तः। तत इदं चिद्रूपमपि स्वयमज्ञं सदसज्ज्ञानरहितं ततश्चोपलखण्डवज्जडभूतमेव, स्वप्रकाशमपि निर्गुणं निराकारञ्च, तथा सदप्यसता तुल्यमेव, यतोऽस्य सत्तया न किमपि प्रयोजनं सिध्यति। वस्तुतस्तथाविधस्य ब्रह्मणः सत्त्वेऽप्यसत्त्वे वा नास्माकं कापि वृद्धिः क्षतिर्वा शङ्कनीया।

अथ मायाकृतविकृतस्यानन्ताद्भुतरूपेण विजृम्भितस्य ब्रह्मांशस्य विचारः क्रियते। परं तद्विचारात् प्राक् माया विचार्य्यते। अद्वैतवादिनां मते सा हि—

"निस्तत्त्वा कार्य्यगम्यास्य शक्तिर्मायाग्निशक्तिवत्।
नहि शक्तिः क्वचित्केश्चिद् बुध्यते कार्यतः पुरा॥"

अस्यार्थः—'निस्तत्त्वा'—जगत्कारणभूतात् सद्वस्तुनः पृथक्सत्त्व-रहिता, 'कार्य्यगम्या'—वियदादिकार्य्यलिङ्गगम्या, 'अस्य'—सद्वस्तुनः 'शक्तिः'-वियदादिकार्य्यजननसामर्थ्यं मायेत्युच्यते। वस्तुस्वरूपाति-रिक्तसद्भावे दृष्टान्तमाह-'अग्निशक्तिवत्'—अग्नेर्दाहजननी शक्तिरिव। अथैवंविधा शक्तिः कथं न ब्रह्मणि सृष्टेः प्रागुपलक्षितेत्याशङ्कयाह—'क्वचित्'—कुत्रापि शक्तिमति, 'कार्य्यतःपुरा'—कार्य्योत्पत्तेः प्राक् शक्ति 'नैहि बुध्यते'—न ज्ञायते। नहि दाहात् पूर्वमग्नौ दाहकारिणी शक्तिरस्तीति केनापि अवगम्यते। अन्यथा बालमूर्खादीनामज्ञानां हस्तेनाग्निग्रहणे प्रवृत्तिर्न स्यात्।

परमिदमत्र वैचित्र्यम्, अग्न्यादेर्दाहकादिशक्त्यो हि यावद्वस्तु-व्यापिन्यो भवन्ति, मायारूपा ब्रह्मणः शक्तिर्हि न तथा; तथाह्युक्तम्—

"न कृत्स्नब्रह्मवृत्तिः सा शक्तिः किन्त्वेकदेशभाक्।
घटशक्तिर्यथा भूमौ स्निग्धमृद्येव वर्त्तते॥"

यथा घटोत्पादिका शक्तिर्न यावद्भूमिवृत्तिः, किन्तु जलक्लिन्ना-यां मृदि, तथेयं मायाशक्तिर्न सर्व्वस्मिन् ब्रह्मणि किन्तु तदेकदे-शव्यापिनीत्यवगन्तव्यम्। अत्र प्रमाणमप्युपदर्शितम्, तथाह्युक्तम्—"पादोऽस्य विश्वा भूतानि त्रिपादस्ति स्वयंप्रभः" इत्यादिश्रुतयः। तथा—"विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्।" इत्यादिस्मृतयोऽपि।

यथा भित्तिगता वर्णा रक्तपीतादयो भित्तौ नानाविधं चित्रं कल्पयन्ति, तथा ब्रह्मैकदेशमाश्रिता सा शक्तिर्मायारूपा ब्रह्मणि ब-हुविधा विक्रियाः कल्पयति। ततश्च मध्याह्नार्कमरीचिकासु पयःपूर-स्येव, रज्जौ सर्पस्येव, मायाविकृते ब्रह्मैकदेशे आकाशादिविचित्रज-गतो विभ्रम उपजायते।

उपन्यासोऽयं सुकल्पितोऽपि स्वभावतो जडधियामस्माकं न तावत् सम्यग्रुचिकरो भवति, न वास्माकं जडस्वाभाविकी बुद्धिस्तात्पर्य्यमस्य सम्यगवगन्तुं शक्नोति। प्रथमं तावत् कथं सा मायाशक्तिर्ब्रह्मण एकमंशमात्रं नतु सम्पूर्णं ब्रह्म व्याप्य स्थितेति न प्रबुद्धमस्माभिः। दृष्टान्तीकृतात्वग्नेर्दाहात्मिका शक्तिर्हि सम्पूर्णमेवाग्निं व्याप्य तिष्ठति, न ह्यग्निरंशेन तापं चांशेन शैत्यमुत्पादयति, इत्थं जलस्य शैत्यशक्तिरपि सर्व्वमेव जलं व्याप्य तिष्ठति, नहि जलमंशतः शीतलत्वमंशतश्च दाहमुपजनयति, इत्थं वस्तूनां स्वाभाविका हि शक्तयो यावद्वस्तुव्यापिन्यो भवन्ति, न तु तत्तद्वस्त्वंशव्यापिन्यः। नहि सूर्य्योंऽशतश्चालोकमंशतश्चान्धकारमातनोति। (सर्व्वे स्वशाखाघर्षणं कृत्वा आनन्दं सूचयन्ति)

किञ्च "घटोत्पादिनी शक्तिर्नामार्द्रायामेव मृदि, न तु कृत्स्नायान्तथैव न सर्वस्मिन्ब्रह्मणि मायाशक्तिः किन्त्वंशत एवेति" यदुक्तन्तदप्यस्माभिर्न सम्यगवगतम्। मृत्तिकाया आर्द्रता नाम न स्वाभाविकी, किन्तु रसोपाधिजन्यविकारविशेषरूपैव। निसर्गतो निर्विकारस्य कूटस्थस्य ब्रह्मणोंऽशतस्तादृशविकारं प्रति न कोपि हेतुरुपदर्शितस्तस्यांशतो विकृतिं प्रति मायाया एव हेतुत्वमुक्तं, किन्तु मायाया आंशिकत्वे न किमपि कारणतयोपन्यस्तम्। अन्यच्च स्वाभाविकी नाम वस्तुशक्तिरग्नेर्दाहिका शक्तिरिव, जलस्य शैत्योत्पादिका शक्तिरिव, यावद्वस्तुव्यापिन्येव भवति। कथमत्र तन्नियमस्य विपर्य्यय इति तु विशेषहेतुप्रदर्शनमन्तरेण नास्माकं सम्यग् बुद्धिविषयो भवति। या न सर्व्वांशव्यापिनी शक्तिः सौपाधिक्येव, यथा मृदो घटोत्पादिनी

शक्तिः, सा खलु रसोपाधिकादृतानिबन्धनैवेति दृष्टान्तदार्ष्टान्तिकयो-र्नैकरूपत्वं सङ्गच्छते, एतेनांशत उत्तुङ्गकल्लोलशालिनांशतश्च प्रशा-न्तसुस्थिरगम्भीरेण महासागरेण तथाविधस्यांशतो विकृतिं प्राप्तस्य ब्रह्मणोऽपि दृष्टान्तो निरस्तः, यतो महासागरस्य तथाविधविरुद्धध-र्म्मवत्ता तु न स्वभावजन्या प्रवलवात्यारूपोपाधिहेतुकैव ।

अन्यच्च स्वाभाविकी हि शक्तिर्न केवलं यावद्वस्तुव्यापिनी, प्रत्युत यावद्वस्तुभाविन्यपि भवति। ततश्च मायारूपाया अपि शक्तेस्तथा-त्वे, ततो ब्रह्मणो विमुक्तिलाभः सर्व्वथा सुदूरपराहत एव। उक्तञ्च श्रीभगवता स्वयमेव "मम माया दुरत्ययेति" ततश्च तेषां-मुख्यपुरुषार्थभूतविमुक्तिलाभवार्त्ता खलु गगनकुसुमसौरभाघ्राणकल्प-नावत् निर्भित्तिकैव भवेदित्यपि सुधीभिर्विभाव्यम्।

अथेदानीं मायाकृतविकारस्य ब्रह्मांशस्य जगद्रूपेण परिणति-र्विव्रियते—

"सत्त्वमाश्रिता शक्तिः कल्पयेत् सति विक्रियाः।
वर्णा भित्तिगता भित्तौ चित्रं नानाविधं यथा॥"

यथा भित्तिगता वर्णा रक्तपीतादयो धातुविशेषा भित्तौ नानाविधं चित्रं कल्पयन्ति, तथा ब्रह्मस्वरूपं सत्त्वमाश्रिता शक्तिः सति ब्रह्म-ण्येव—"विक्रियाः" विविधत्वेन क्रियन्ते इति विक्रियाः" – कार्य्य-विशेषान् कल्पयति। अथ कीदृशान् कार्य्यविशेषान् जनयतीत्याह—

"तमोरजःसत्त्वगुणा प्रकृतिर्द्विविधा च सा।
सत्त्वशुद्ध्यविशुद्धिभ्यां मायाऽविद्ये च ते मते॥"

सा हि जगत्कारिणी शक्तिः सत्त्वरजस्तमोगुणानां साम्यावस्था-

रूपा प्रकृतिरित्युच्यते। सा च द्विप्रकारा भवति। तथाहि :—सत्त्वस्य प्रकाशात्मकस्य गुणस्य शुद्धिर्गुणान्तरेणाकलुषीकृतता, अविशुद्धिर्गुणान्तरेण कलुषीकृतता, ताभ्यां सत्त्वशुद्धि-सत्त्वाशुद्धिभ्यां द्विविधा—"माया," "अविद्या" चेति। ततः, विशुद्धसत्त्वप्रधाना माया, मलिनसत्त्वप्रधाना अविद्या। अनयोर्मायायां प्रतिफलितश्चिच्छक्तिः ( परब्रह्मांशविशेषः ) तां मायां स्वाधीनीकृत्य वर्त्तमानः "सर्वज्ञ" "ईश्वर" इति कथ्यते। तथा अविद्यायां प्रतिफलितस्तत्परतन्त्रश्च ( तस्या अविद्यायाः परतन्त्रः अधीनश्च ) चिदात्मा ( परब्रह्मांशविशेषः ) अन्यो "जीवः" इति कथ्यते, स तु तस्या उपाधिभूताया अविद्याया वैचित्र्यादविशुद्धितारतम्यादनेकधा—अनेकप्रकारः, देवतिर्यगादिभेदेन बहुविधो भवतीत्यर्थः। तस्य परब्रह्मणो यावन्तमंशं परिव्याप्य विशुद्धसत्त्वप्रधाना मायाशक्तिरवतिष्ठते, स नामांशः "सर्वज्ञ ईश्वरः" इत्यभिधीयते, विशुद्धसत्त्वस्यैकरूपत्वात् सोऽप्येकरूप एव भवति, माया च तस्य वशीभूता तिष्ठति। अथ तस्य यावन्तमंशं परिव्याप्य मलिनसत्त्वप्रधानाऽविद्याशक्तिरवतिष्ठते स नामांशो "जीव" इत्युच्यते, स च सर्वथा अविद्यापरतन्त्रो मलिनसत्त्वो भवति, तथा तस्मिन्नविद्यायास्तारतम्यान्मलिनताया अपि तारतम्यं जायते। किञ्च अविद्याया बहुविधत्वं स्वत एव सम्पन्नम्। अविद्याप्रकारभेदाच्च तदधिष्ठितस्य जीवस्यापि प्रकारभेदोऽवश्यमङ्गीकार्यः अतएव जगति तिर्यङ्मनुष्यदेवप्रभृतीनां नानाविधानां जीवानामाविर्भावो जात इत्यद्वैतवादिनो वदन्ति। सा चाविद्या स्थूलसूक्ष्मशरीरादिकारणीभूतप्रकृत्यव-

स्थाविशेषतयोपचारात् "कारणशरीरमिति" चाख्यायते, तत्राभिमान-वान्—तेन कारणशरीरेण सहात्मानमभिन्नम्मन्यमानो जीवः पूर्वोक्तलपब्रह्मांशविशेषः 'प्राज्ञ' इति कथ्यते।

अथ स्वभावतो जडधियां युष्माकं स्मृतिदार्ढ्याय पूर्व्वप्रबन्ध एव संक्षिप्योच्यते—परब्रह्मणोंशविशेषं परिव्याप्य या जगत्कारिणी शक्तिरस्ति सा सत्त्वरजस्तमोगुणानां साम्यावस्थारूपा प्रकृतिरिति कथ्यते। सा पुनर्विशुद्धसत्त्वप्रधाना माया, मलिनसत्त्वप्रधाना अविद्येति प्रथमतस्तावद् द्विविधा। तत्र मायाधिष्ठितश्चिदंशः सर्वज्ञ ईश्वर इति, अविद्याधिष्ठितश्चिदंशो 'जीव' इति चाख्यायते। अविद्या च कारण-शरीरं नाम, तया सहात्मानमभिन्नं मन्यमानो जीवः प्राज्ञ इत्यभि-हितः। इति।

अथ प्रकृतिसृष्टिक्रमस्तदनुमतः कथ्यते; प्रकृतेस्तमोमयांशात् क्रमेण—

"वियत्पवनतेजोऽम्बुभुवो भूतानि जज्ञिरे।
सत्त्वांशैः पञ्चभिस्तेषां क्रमाद्धीन्द्रियपञ्चकम्॥
श्रोत्रत्वगक्षिरसनघ्राणाख्यमुपजायते।
तैरन्तःकरणं सर्वैर्वृत्तिभेदेन तद् द्विधा॥
मनो विमर्शरूपं स्याद् बुद्धिः स्यान्निश्चयात्मिका।
रजोंऽशैः पंचभिस्तेषां क्रमात् कर्मेन्द्रियाणि तु॥
वाक्पाणिपादपायूपस्थाभिधानानि जज्ञिरे।
तैः सर्वैः सहितैः प्राणो वृत्तिभेदात्स पंचधा॥
प्राणोऽपानः समानश्चोदानव्यानौ च ते पुनः।
बुद्धिकर्मेन्द्रियप्राणपंचकैर्मनसा धिया।
शरीरं सप्तदशभिः सूक्ष्मं तल्लिंगमुच्यते॥"

अश्वत्थः—( सर्वतः सदृष्टिक्षेपं ) भो भो वनस्पतिकुलप्रदीपा महापादपाः ! कुसुमकोमलदन्तरुचो लता-कुलललनाश्च, मानवस्वभावमभिवदता मया प्रसङ्गेनेश्वरतत्त्वमवतार्य्य, महीलतामुत्खनता कृष्णसर्पोद्घाटनमिव सुमहाननर्थपातः कृतः । वर्णनीयविषयस्यातिनीरसतया न केवलं श्रीमतामत्रभवतां भवतां, श्रीमतीनां स्वभावकोमलचेतसां लतावधूनाञ्च सुमहच्चित्तचाञ्चल्यमुत्पादितं ; यावद्विषयस्यास्य निसर्गागाधतामसीमतां स्वकीयवाक्शक्तेरल्पताञ्चावलोक्य ममापि मतिरतीवाकुला सञ्जाता । विषयमिमं वक्तुमुपक्रम्य यथा यथाऽग्रे सरामि, तथा तथैव महाम्बुराशेरिव किमपि सुदुस्तरत्वमपारत्वं, महामहीधरस्येवातितुङ्गत्वं दुर्लङ्घ्यत्वं, महाव्योमतलस्येवासीमता चास्याग्रतः परिस्फुरति । न तत्त्वतो विज्ञायते, कियदभिहितं कियद्वाभिधातव्यं, कुत उपक्रमः कृतः कुत्र वोपसंहारो भविष्यतीति ; कथितमकथितं सर्वं तुल्यरूपं विभाति, वर्णितं, वर्णनीयञ्च साम्यमावहति, पूर्वमुत्तरञ्चैकरूपं विवरीवर्त्ति, पुरः पश्चाच्च न वैशिष्ट्यमवगमयति । वक्ष्यमाणस्योक्तस्य च न विभेदोऽनुभूयते, उक्तं ह्यनुक्तमिव प्रतीयते, किं बहुना, तत्त्वमिदं, यथा यथा प्रस्फुटं प्रकटयितुं प्रयत्नं करोमि, तथा तथैव घोरे तमसि निमग्नमिवात्मानं विजानामि । स्वयं न किञ्चिदनुभवामि, किं युष्मान् बोधयामि ? यत्सत्यं, महतीमाकुलतामनुभवामि । ततो विषयमिमं परिहृत्य विषयान्तरानुसरणमेव श्रेयस्तया विभावयामि, परं यदर्थमेतस्य महतोऽर्थस्य प्रस्तावना कृता, तदनभिधाने समुन्मत्तस्य प्रलपनमिव मम वागाडम्बरोऽयं सर्वथैव हास्यास्पदं भविष्यतीति तन्मात्रमभिधीयते ।

अस्माभिरिह मनुष्यजातिमधिकृत्य यद् यदुच्यते तद्धि सर्व्वं प्रधानतो भारतीयमनुष्यपरमित्यवगन्तव्यं, यतो भारतीयमानवैरेवास्माकं कोऽपि सुचिरसम्बन्धो वर्व्वर्त्ति । किञ्चास्माभिर्यत्किञ्चिज्ज्ञानमुपार्जितं, तद्भारतीयदर्शनशास्त्रमूलकमेव । अस्मद्विद्याभ्याससमये देशान्तरशास्त्राणां वार्त्तापि न श्रुता, न जाने तदानीं तेषु तेषु देशविशेषेषु का कथा शास्त्रविशेषस्य, वर्णशिक्षाया अपि सत्ता सञ्जाता न वेति ! ( सर्व्वेषामुच्चहास्यम् ) अथवा वर्णमालासत्ता तावद् दूरेऽस्तु तदानीं भारतभूमेर्बहिर्यदि नाम कुत्रचित् प्रदेशे मनुष्यसत्ताऽप्यभवत् ते पुनर्मानवा आहारनिद्राभयमैथुनपराः स्वस्वप्रतिवेशि-पशुभिः समाना एवासन् । इदानीं ये नाम नव्याः सभ्या भव्या देवप्रभावा मानवाः कदाचित् मृगयाव्यपदेशेन वनान्तप्रदेशमलंकुर्व्वाणाः श्रीमतां भवतां दृग्गोचरीभूय, चक्षुषां सार्थक्यं महीरुहजन्मनश्च साफल्यमुत्पादयन्ति श्रीमतां, तेषां प्राक्तनाः पुरुषा नराकाराः पशवो गतिशीला उद्भिज्जा वा आसन्—( मुहुः करतालिकादानपूर्व्वकं सर्व्वेषामुच्चहास्यम् ) अलमेतेनाप्रस्तुतप्रसङ्गिना वागाडम्बरेण । भारतीयशास्त्राणि तावदरण्यभूमौ प्रादुर्भूतानि तेषामध्ययनाध्यापनालोचनविचारकर्माणि अरण्यभूमौ सम्पादितानि, शास्त्रकृतश्च सर्व्वे महारण्यवासिनोऽगाधज्ञानसम्पन्नाः सर्व्वज्ञा महर्षयो निरावरणारण्यभूमौ यथेच्छं जडाजडसाधारणेषु स्वस्वशास्त्रप्रचारव्यतिकरमकार्षुः ।

तेहि शिष्येभ्यो न किमपि वेतनं जगृहुः, प्रत्युत भोजनाच्छादनप्रदानपूर्व्वकं सहस्रशः शिष्यानध्यापयामासुः । तादृशप्रकारेण

षष्टिसहस्रशिष्याध्यापकानां "कुलपति-"संज्ञा कृता, सर्व्व एव ते महर्षयः कुलपतयो बभूवुः। ततश्च निरन्तरनिर्बाधितत्तत्कुलपतिशिष्याध्ययनश्रवणतोऽस्माकमपि भारतीयशास्त्रेषु कापि सुदृढा व्युत्पत्तिः संजाता। यद्यपि साम्प्रतं राजानुग्रहतः प्रतिनगरं नव्य-सभ्यपाश्चात्यदेशीय-दर्शनादिशास्त्रजातमध्यापितं भवति, किन्तु तद-ध्यापनस्यावरुद्धगृहान्तः कतिपयवेतनप्रदच्छात्रमध्ये सम्पादित्वात्, तत्तद्विद्यालयप्राङ्गणशोभासम्पादकानामप्यस्माकं श्रवणविवरे तदध्ययनोच्चारणशब्दोऽपि न प्रवेशं लभते दूरेऽस्तु तावत् तात्पर्य्यार्थसंग्रहवार्त्ता (करतालिकादानपूर्वकं सर्व्वेषामुच्चहास्यम्) पूर्व्वसमयाद्वर्त्तमान-समयस्यान्यस्वरूपं संवृत्तं, समयपरिवृत्त्या सह प्राक्तनरीतिप्रभृतीनामपि सम्यक्परिवृत्तिरभवत्। पूर्व्वं छात्रेभ्योऽध्यापनभृतिग्रहणं नाम वेदविक्रयरूपमहादोषावहमासीत्, अथवा का कथा भृतिसंग्रहस्य, अध्यापकाः स्वयं छात्रान् स्वपोषमपुषन्। साम्प्रतं तु भृतिमन्तरेण दूरेऽस्तु तावदध्य-यनवार्त्ता, विद्यालयान्तःप्रवेशाधिकारोऽपि न भवति। किं ब्रूमोऽपरेषां, यथोचितभृतिप्रदानमन्तरेणाध्यापकपुत्रा अपि स्वपित्रधिष्ठितविद्याल-ये प्रवेष्टुमपि न शक्नुवन्ति। सर्व्वदा सुशीतलच्छायादानेन विद्या-लयाङ्गनभूमिमलंकुर्व्वाणा वयमपि विद्यालय-प्रवेशहताशा यदि कदा-चिद्विद्यालयगृहबहिर्भागमपि स्प्रष्टुं शाखा-बाहुं प्रसारयामस्तदा तत्क्ष-णमेव तच्छेदनरूपगुरुदण्डमनुभवामः (उच्चैः 'अहोधिक् त्रपेति' वचनम्) अतो वर्त्तमाननव्यसभ्यदेशीयशास्त्रज्ञाने नितरां निराशा वयं यत् किमपि धर्म्मतत्त्वं कथयामस्तत् सर्व्वं भारतीयशास्त्रमूलकमेव। तत्र चाद्वैतवादिवेदान्तिनां मतं प्रस्तुतमप्यस्माकं प्रासङ्गिकाप्रासङ्गिकानेक-

विधवाग्जालेनावृतं, युष्मत्स्मृतिपथमतिक्रान्तमित्याशङ्क्यते ( सर्व्वे 'नहि, नहि' ) सुष्ठु, तावत्ते ह्यद्वैतवादिन "एकमेवाद्वितीयं ब्रह्म" "सर्व्वं खल्विदं ब्रह्मे"-ति वदन्त एकमेव परं ब्रह्म विहाय नान्यस्य कस्यचिद्वस्तुनः सत्तां स्वीकुर्व्वन्तीति पूर्वमुक्तं (स्मर्य्यते, स्मर्यते) तेषां नये, तस्य ब्रह्मणो यद्विशुद्धं स्वरूपं तत् स्वप्रकाशचिन्मयमपि निर्गुणं निष्क्रियमतो जडप्रायमेव; विशेषस्त्वेतावानन्यज्जडमप्रकाशं तत्तु स्वप्रकाशमिति, इदानीं विचार्य्यतान्तावद् यद्धि किञ्चित् कर्त्तुमकर्त्तुं वा स्वेच्छया न प्रभवति, अथवा यस्येच्छापि न विद्यते, तस्यानैश्वर्य्यं स्वतः सिद्धं नवेति, अत आस्तिकम्मन्या अपि ते परमार्थतो नास्तिका एव। तेषां मते यद्धि वस्तु परमार्थतो नित्यं जगत्कार्य्यं प्रति तस्य सम्यगौदासीन्यमेव, न केवलमौदासीन्यं शक्तिशून्यत्वादसामर्थ्यमपि, ततस्तत्कथमपीश्वरं न भवितुमर्हति, ततश्च तेषां मतेऽपि ईश्वराभिधं किमपि नित्यं वस्तु नास्तीति स्फुटमायाताम्। नास्तिकतापरिवादपराणां तेषां स्वेषामेवेत्थं निरीश्वरत्ववादो नाम लोकेऽतीवोपहासास्पदं स्यादिति विचार्य्य ते पुनर्निजकल्पनाप्रसूतया मायाभिधया कयापि शक्त्या तस्य परब्रह्मणोऽशविशेषं विकृत्य तद्विवर्त्तरूपं कमपि जडजीवजगत्साधारणमीश्वरं निर्मितवन्तः। नास्ति हि तथाविधस्येश्वरस्य जीवेष्वतिनिकृष्टतमानाञ्च किमपि प्रकृतिगतमन्तरं; यतस्तस्मिन् तथान्यत्रापि सर्व्वत्र तुल्यरूपैव परब्रह्मविवर्तिता, विद्यते च सर्वत्र समरूपैव मायायाः प्रभुता, सा हि जडजीवसाधारणं सेश्वरं जगत् शालभञ्जिकामिव स्वेच्छया प्रनर्त्तयति। मायामन्तरेण यथा जडानां जडत्वं, जीवानां जीवत्वं तथेश्वरस्यापीश्वरत्वमपि विरमति। पश्यन्तु

भवन्तः कीदृशेन कौशलेन मानवाः स्वयं स्वस्रष्टुरपि स्रष्टारो जगद्विधातुरपि विधातारः सञ्जाताः ! अथेत्थमवसरं संप्राप्य साम्प्रतं मनुष्येषु यस्य यत्किञ्चिदपरप्रमोहनचातुर्य्यं वर्त्तते, स एव स्वायत्तीकृतेषु स्वकीयेश्वरावतारत्वं प्रख्यापयति । ततश्च पश्यतामेवास्माकं कति नामाभिनवा अवतारा अवतीर्णा अभवत् । कृते, त्रेतायां, द्वापरे वा न तथा, यथास्मिन् सुघोरे, कलियुगे अवताराणां सुमहान् सम्मर्दो दृश्यते । ( सर्व्वेषामुच्चहास्यम् ) ज्ञायते चेतो दशवत्सरेभ्य ऊद्र्ध्वमवतारसंख्या नाम गणनानङ्कानतिवर्त्तिष्यन्ते ( सर्व्वेषामुच्चहास्यम् ) अहो ! न ज्ञायते कीदृशि कुक्षणे श्रीमद्भगवद्गीतासूपनिषत्सु "सम्भवामि युगे युगे" इति वचनमन्तर्भावितम् । एतद्वचनमेव तेषामवतार धूर्त्तानां प्रधानमवलम्बनं जातम् । अत एवास्माभिः प्रथमत एवोक्तं मनुष्यसृष्टिः खलु विधातुर्बुद्धिलाघवं प्रकटयतीति ।

प्राक्तनकर्मप्रभावाज्जडत्वमापन्नानामस्माकं वार्ता तावदस्तु दूरे, जीवसृष्टिप्रवाहेषु मानवा इव परप्रतारकाः स्वार्थसाधनपरा मायाविनः कपटव्यवहारकुशला नीचस्वभावाः हिंसानिरता जीवा न विद्यन्ते । भवन्तो नित्यमेवारण्यचारिणः सिंहव्याघ्रप्रमुखान् हिंस्रस्वभावतया प्रसिद्धान् श्वापदानवलोकयन्ति प्रत्यक्षं, तेषां नित्यनैमित्तिकक्रियाकलापांश्च पश्यन्ति, ततो भवन्त एव सानुनयं पृच्छ्यन्ते, कथयन्तु भवन्तो याथातथ्येन किमेते हिंसादिक्रियासु मनुष्येभ्यो भृशं गरिष्ठाः ? श्वापदास्तावद्धिंस्रस्वभावाः निरतिशयक्रूरकर्माणश्चेत्यहं मुक्तकण्ठं स्वीकरोमि, किन्तु हिंस्रतया क्रूरसत्वतया च प्रख्यातानामपि तेषामस्ति तावत् कश्चिदवधिर्हिंसाविधेः,

वर्त्तते च तेषां काचिदिह निर्दिष्टसीमा क्रूरचेष्टितानां, नहि मानवा इव ते निरवधिहिंसावृत्तयो निरन्तरक्रूरकर्मनिरताश्च। तथाहि, श्वापदानां हिंसाकर्म किल प्रकृतिनियमोद्दीप्तजठरानल-निर्वाणमात्रप्रयोजनकं, क्रूरचेष्टितानि च स्वोदरपूर्तिपर्य्यन्तावसानानि, प्रशान्ते तु जठरानले, सकृदुपजातायां स्वोदरपूर्त्तौ, नहि ते करतलगतानपि हरिणशशकादीनुपघ्नन्ति, न वा तथाविधदुर्बलजीव-घातार्थमटवीतोऽटवीं समुद्भतं परिभ्रमन्ति, प्रत्युत मुनिव्रता इव शान्तभावमापन्ना निश्चेष्टा विविक्तविजनप्रदेशमाश्रित्य विश्राम्यन्ति। मनुष्याणां हिंसावृत्तिस्तु निरवधिः, न वा तथाविधप्राकृत-कारणविशेषमपेक्ष्य प्रवर्तते, सर्वथा स्वोत्कर्षविधित्सैवामीषां हिंसाकारणम्, सा च निरवसाना, न कदाचिद्विरतिमुपैति, तज्जनितहिंसावृत्तिरपि तथैव तामनुवर्त्तते, यतो यत आत्मनोऽपकर्षः सम्भाव्यते, समाशंक्यते वा, तत्र तत्रैव मानवानां हिंसावृत्तिः प्रवर्त्तते, न समयं, स्नेहं, सौहार्दमुपकृतिं वाऽपेक्षते; स्वार्थसिद्धये खलु मानवाः पितरं, पुत्रं, दारान्, मित्रं, प्रभुं, भृत्यं, स्वजनं, स्वपक्षं चावलीलयोपघ्नन्ति, का नाम कथा सर्वतो निःसम्पर्काणामतिदूरस्थानामस्वजनानाम्। पशुहत्या तु तेषामाक्रीडनं, केवलं विश्रान्तचित्तविनोदनाय महारण्यमुपगम्य, ते यथेच्छं, निर्दयञ्च पशुघातं कुर्वन्ति। मनुष्या यथा मृगयामपदिश्य हिंसावृत्तेश्चरितार्थतां सम्पादयन्ति, हिंस्रस्वभावा अपि श्वापदाः किं कदाचित् मनुष्यालयमाविश्य तादृशमतिदारुणं कर्म समनुतिष्ठन्ति ? यथैहिकसुखलिप्सया मनुष्याः समुत्साहेन जीवहिंसां सम्पाद्यान्तःकरण-

स्यातिनिष्ठुरं क्रूरभावं प्रकटयन्ति, पारत्रिकविशुद्धनित्यसुखप्राप्त्याशयापि ते तथैव महोत्साहेन महोत्सवपूर्वकं स्वाभीष्टदेवताग्रतः सर्वथानिरपराधान् रोरुयमानानासन्नमृत्युशङ्काक्षेपमानकलेवरान् पशून् बलादुपहृत्य स्वहृदयस्यातिकर्कशनृशंसतायाः परिचयं ददति, वस्तुतस्तेषां पशूपहारव्यापारमालोक्य जडानामप्यस्माकं विदीर्य्यते खलु हृदयम्। स्वार्थसिद्धिमूला मानवानां हिंसावृत्तिः खलु सजातीयविजातीयसर्वविधजीवेषु समानरूपैव वरीवर्त्ति।

किंवात्र बहुभाषणेन, मानवेष्वनुकम्पा-प्रवणमानसा श्रोत्रिया अपि पशुमारणकर्मणो न कदाचित् पराङ्मुखा भवन्ति। अन्यच्च पशूनां भक्ष्यवस्तूनि प्रकृत्या नियमितान्येव, न हि पशवो भोजनव्यापारेऽणुमात्रमपि प्रकृतिनियममुल्लङ्घयन्ति, तेषु ये मांसभुजस्ते मांसमपहाय नान्यत्किमप्यभ्यवहरन्ति, नाकाङ्क्षन्ति वा, केवलेनाऽऽमेनैकमांसेन तृप्यन्ति, ये पुनः फलमूलाशिनस्ते तैरेव जीवन्ति, न स्पृहयन्ति कदाप्यन्यस्मै भक्ष्यवस्तुने। मानवानां पुनर्भक्ष्याभक्ष्यविषये न दृश्यते तादृशः कश्चिन्निर्दिष्टो नियमो, न विद्यतेऽथवा तेषामभक्ष्यं किमपि; यतस्तेष्वनेकेषामनेकशः स्वधर्म्मस्य सदाचारस्य च मस्तकभक्षणवार्त्तापि श्रूयते, भक्षयन्ति च प्रायः सर्व एव ते सर्वदा स्वचक्षुषोर्लज्जायाश्च मस्तकं, येन तेषु निरन्तरं मित्रद्रोहः, स्वजनप्रतारणादीनि च कलुषकर्म्माणि निर्बाधमवसरमाप्नुवन्ति, विश्वासघातनं तु बहूनां कुलाचारः संवृत्तः। बहवश्च लोके पशुक्लेशनिवारणबद्धपरिकरतया स्वेषां बौद्धावतारतां पटहैः प्रख्यापयन्तोऽपि भोजनवेलायां प्रचण्डपिशिताशनप्रकृतिं प्रकटयितुं न स्तोकमात्रमपि त्रपन्ते; तेषां भोजनपात्रान्तिकनि-

दृ यचर्वणकृष्टग्रैरस्थिरराशिभिस्तेषां निशाचरत्वमेव स्पष्टं प्रकटी क्रियते। पशूनां न केवलं भक्ष्यनियमस्तृप्तिश्च तेषामनायाससाध्या, ते स्वोदरपूर्तिमात्रपर्याप्तं भक्ष्यवस्तु समधिगत्यैव परमां परितृप्तिं लभन्ते, नाधिकमाकांक्षन्ति, भक्ष्यवस्तुनीवान्यत्र विषयेऽपि सुलभः खल्वमीषां तृप्तियोगो यस्तावन्मानवेषु सुदुर्लभ एव। तृप्तिलाभस्तु न विलिखितो विधात्रा मनुष्यभागधेयेषु। विषयाप्तित्तरोत्तराकांक्षावृद्धिरेव मनुष्याणां मनुष्यत्वाख्यापिका, महात्मता-परिचायिकेति तेषामर्थनीत्युपदेशस्तथाहि—

"तृप्तियोगः परेणापि महिम्ना न महात्मनां,
पूर्णश्चन्द्रोदयाकांक्षी दृष्टान्तोऽत्र महार्णवः॥"

नैतावतैव तेषां शास्त्रोपदेशो विरतः प्रत्युत सन्तोषं पुनः सर्वथा परिहर्त्तुमनुरुरोध। यथा—

"सम्पदा सुस्थिरम्मन्यो भवति स्वल्पयापि यः।
कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम्॥"

शैशवादारभ्यैवंविधान्यनेकरूपाणि गुरुमुखाच्छास्त्रोपदेशवचनान्याकर्ण्याकर्ण्य स्वावस्थायां सन्तोषमलभमाना निरन्तरमात्मोन्नतिमभिविधित्सवोऽव्याहतलोभविक्षोभितहृदया मनुजन्मानः किल प्रतिक्षणं स्वार्थसाधनाय सर्वात्मना प्रवर्त्तन्ते, न धर्ममनुधावन्ति, न सत्यमनुबध्नन्ति, परं तृणवदुपेक्षन्ते स्नेहं, लोष्टवत् परित्यजन्ति शौचं, अहितमिव परिहरन्त्यार्जवममङ्गलमिवोपघ्नन्ति विश्वासं, न स्वल्पमपि बिभ्यति पापाचारेभ्यो न किञ्चिदपि लज्जन्ते मुहुरनृतव्यवहारात्, नहि क्षणमपि विरमन्ति परपीडनात्, नवा कदापि विमु-

क्षीभवन्ति महतोऽप्यकृत्यात्, केवलं सिसाधयिषन्ति स्वार्थम्, न च सन्तोषं भजन्ते, लभन्ते वा स्वल्पीयसीं तृप्तिम्। यथायथैव स्वार्थसिद्धिर्घटते तथातथैव परिवर्धतेऽमीषां गरीयसी विषयपिपासा। तथाहि—निर्धनः शतं कामयते, धनी दशशतान्यभिलषति, सहस्राधिपस्तु लक्षमाकांक्षति, लक्षाधीशः पुनः कोटिमीप्सति, कोटीशश्च ससागरधरैकाधिपत्यं, समधिगततथाविधाधिपत्यश्चेन्द्रत्वं वाञ्छति; इत्थं क्रमश एव मनुष्याणामाशा विवर्धते, नैकोपि तेषामाशावधिं गच्छति। तत एवोक्तम्—

"न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥ इति,
"यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः।
एकस्यापि न पर्याप्त" मिति च—

साम्प्रतं विचार्य्यतान्तावत्, ये खलु स्वप्नेऽपि तृप्तिसुखं नाधिगच्छन्ति, सर्वदैव नवनवाशोपचितचित्तवृत्तयश्च भवन्ति, सम्भाव्यते तेषु किं कदाचिदपि स्वल्पमात्रशान्तिसुखम्? अथ येषु क्षणमपि शान्तिसुखं नाविर्भवति, ते खलु दुःखदुःखेनैव समयमतिवाहयन्तीत्यपि किं वक्तव्यम्? कथं वा यथाकथञ्चिदभीष्टलाभमात्रसन्तुष्टेभ्य आवश्यकातिरिक्तजिघृक्षारहितेभ्यो निजनिजावस्थायामेव परमपरितृप्तिमनुभवद्भ्यः पशुभ्यस्तेषां श्रेष्ठत्वम्? किञ्च पशव इव मनुष्या अपि क्षुत्पिपासाभ्यामापीड्यमानाः कार्य्याकार्य्यविचारविमूढाः समाचरन्त्यतिविगर्हितकर्माणि। तथाहि—विशिष्टशिष्टजनेष्वतिगरिष्ठपदवीमधितिष्ठता महर्षिवरिष्ठेन वशिष्ठेन क्षुद्बाधां विषमां विसोढुमशक्नुवताभ्यवहृतं किलातिविगर्हितमन्नम्, पिपासाकुलेन पुनः

पाण्डुकुलधुरन्धरेण राज्ञा परीक्षिता न समीक्षितो ब्रह्मध्यानैकतान-मानसस्य ब्रह्मकल्पस्य ब्रह्मर्षेरवमाननायां कश्चिदपि दोषलेशः स्वस्य। इत्थमन्या अपि कामादिवृत्तयः पशुभ्यः खलु मानुषेषु प्रबलतरा दृश्यन्ते, यैः परिभूयमाना अमी समनुतिष्ठन्त्यनिशमतिनिन्दित-तमान्यकृत्यशतानि। तेषां सर्वेषां सम्यक् समालोचनं न तावदत्र सम्भवतीति कामवृत्तिमात्रमत्रालोच्यते।

नास्तीह किमप्यतिघोररूपं महापापप्रभवं वा कर्म्म यद्धि कामोपहतचित्तवृत्तिभिर्म्मनुष्यैर्नानुष्ठितपूर्व्वम्, नानुष्ठीयते साम्प्रतं वा, न विद्यते वा किमपि दुष्करं, कामोपहतचित्तानां मानवानां नाम। ब्रह्महत्या-स्त्रीहत्या-पुत्रहत्या--पतिहत्या--भ्रूणहत्या-मित्रघात-बन्धुद्रोह-विश्वासघातनप्रमुखाणि यावत्प्रकाराणि, यावन्ति चातिपातकमहापा-तकमूलीभूतानि निन्द्यानि विगर्हितानि च कर्म्माणि विद्यन्ते, सम्भ-वन्ति च, तानि सर्व्वाण्यवलीलयैव काममोहितहृदयाः सम्पादयन्ति मानवाः। कामान्धितधियस्ते हि प्रियतमाभ्रुकुटिभङ्गीसञ्चोदिताः श्रीरामसदृशं निखिलप्रजाहृदयाभिरामं सर्वसद्गुणालंकृतं सर्वथा सर्वदो-षस्पर्शविरहितं सर्वदा सर्वहितमहाव्रतदीक्षितं प्रियतममप्यात्मजं महा-रण्ये निर्व्वासयितुं न विकल्पयन्ति। मानवानां कामचेष्टा विव-रीतुं खलु स्वभावप्रभावतोऽतिमात्रजडात्मनामप्यस्माकं चेतसि समुदेति गरीयसी लज्जा, लज्जते च रसना मे कथयितुं युष्मभ्यं, जराजीर्णकलेवरस्य निरन्तरतपश्चरणकृशीभूतस्य पलितशिरसो गलि-तवयसः स्खलितचरणन्यासस्य महर्षेः पराशरस्य सुरतरङ्गिणी-कलिन्दनन्दिनी-वक्षस्यनवसरेऽस्पृश्यधीवरकन्यया बलात् कृतसुरत-

वार्त्ता, या किल श्रोतृणामन्तर्युगपत् लज्जाविस्मयावाविर्भावयति। परन्तु मनुष्या न तथाविधं पापकर्म्म लज्जाकरं मन्यन्ते, यतो निखिलवेदविभागकृताशेषलोकहितो वेदान्तरहस्योपदेशोद्भासिततत्त्वज्ञानालोकः स्मृतिपुराणेतिहासाद्यनेकधर्म्मशास्त्र-प्रवक्ता तत्पुत्रो महर्षिर्वेदव्यासः पुनरात्मनो भ्रातृजायाद्यभिगमनं पुण्यकर्म्मवत् स्वमुखेनोदाहर्त्तुं न किञ्चिदपि ललज्जे। अथवा किमेकैकशः प्रत्येकमानव-कामान्धताप्रख्यापनेन। साम्प्रतं प्रतिदिनं राजाधिकरणेष्वर्प्यमाणोद्वाहबन्धन-विच्छेदप्रार्थनापत्राण्येव तेषामन्तःकरणस्य किमपि स्वाभाविकं यथेच्छ-रिरंसाचरितार्थकरणप्रावण्यं प्रख्यापयन्ति; मानवानां तथाविधासिदुर्दमरिरंसाप्राबल्यमेव पवित्रतमेऽस्मिन् भरतक्षेत्रेऽपि विविधविगर्हितवर्णसङ्करोत्पत्तिहेतुरभवत्। मनुष्याणां रिरंसा-वृत्तिस्तु न केवलं स्वजातीयासु चरितार्था भवति, तेषामतिविशुद्धसत्त्वतया ख्यातिमापन्नानां विभाण्डकप्रमुखाणां महर्षीणामपि तिर्यग्जातीयस्त्रीगमनं पुराणेषु प्रसिद्धमेव। ततश्च भोजनक्रियायामिव मैथुनव्यापारेऽपि न ते कमपि नियममनुसरन्ति, प्रत्युत पशून् पराभूय वर्त्तन्त एव। किमत्र बहुना जल्पनेन, यथेच्छकामवृत्तिचरितार्थीकरणस्य वैधत्वमदोषताञ्च प्रतिपादयितुकामैः खलु मानवैः स्वाराध्येष्वपि ब्रह्मविष्णुप्रमुखवृन्दारकवृन्दमुख्येषु निकृष्टेन्द्रियवृत्तिपरितुष्टिविधित्साशीलत्वमुपन्यस्तम्। संकल्पमात्रविनिर्मिताखिलब्रह्माण्डभाण्डस्याखण्डज्ञानमयस्य भगवतः कमलजस्य स्वदुहित्रनुधावनकल्पनमिषेण तैरसंशयमतिपातकस्य तथाविधस्यादोषत्वमुपदर्शितम्। मनुष्यपरिकल्पितं खलु पूर्णब्रह्मपूर्णावतारस्य भगवतः श्रीकृष्णस्य वृन्दावनचरितमालोचयितुं सञ्जायते तावदस्मा-

कमप्यन्तः कोऽप्यनिर्वचनीयापत्रपाप्रकारः, यद्धि समजायत वर्णाश्रम-धर्म्ममर्म्मभेदने विपक्षपक्षाणां सुमहदायुधम्। देवदेवस्य महायोगिनो महादेवस्य मुनिरमणीदूषणादिपरिकल्पनया लम्पटताया विशुद्धतैव विधित्सिता मनुष्यपोतैरित्यपि किमु वक्तव्यम्? किं वालोचयाम्यतः परमिन्द्र-चन्द्रादिवृन्दारकवृन्दस्यातिविनिन्दितानि कथानकानि कामुक-मानवसमुद्भावितानि? पर-तल्पगमने तेषां धर्म्मोऽविकृत एव वर्त्तत इति युधिष्ठिरोत्पत्तिकथया प्रख्यापितम्मन्ये।

वस्तुतः क्रमार्जितक्रमोन्नतसभ्यभावावरणेन सर्वतः प्रयत्नसमावृता अपि मानवानां नैसर्गिकपशुभावाः सुनिपुणं परीक्षमाणस्य चक्षुष्मतो विचक्षणस्येक्षणपथे स्वयमेव स्वरूपतो निपातिता भवन्त्येव, तथाकथितया समुन्नतसभ्यतया नामीषां पशुत्वं किञ्चिदपि निराकृतं, परं रूपान्तरमापाद्य पूर्वावस्थातः परिपोषमापादितमेव। यद्धि विगर्हितं कर्म्म सम्पादयितुं पशवोऽपि लज्जन्ते, नोत्सहन्ते, विमुखीभवन्ति च तत्तु मानवानामीषत्करमेवावलील्यामी तादृशं जुगुप्सितं कर्म्म समाचरन्ति; तत एवोक्तं मया निपुणतरमवलोकयन्नप्यहं नैषां पशुभ्यः कमप्युत्कर्षं, परमतिनिकृष्टत्वमेवावलोकयामीति।

न केवलमेते पशुभ्यो निकृष्टास्तृणेभ्योऽपि निस्सारा एव; तृणानि खलु प्रबलवात्योद्गमाव्यवहितपूर्व्वक्षणपर्य्यन्तं न किञ्चिन्मात्रं विचलन्ति, न वा स्वल्पमात्रमपि विकम्पन्ते, किन्तु निर्भीकानीवाविशङ्कित-चित्तानीव सर्वथा सुस्थिराण्यवतिष्ठन्ते, किञ्च वात्यया सह स्वशक्तितः सुचिरमभियुध्य सम्मुखसमरप्रवर्त्तमाना वीरपुरुषा इव शक्तिक्षये क्षिति-तले निपतन्ति, न तु कदाचित् कापुरुषा इव स्वस्थानमपहाय दुरं

प्रपलायन्ते। मनुष्याः पुनः स्वचेतसाग्रत एव सुदूरभविष्यत्कालसंघटिष्यमाणं कमपि विपत्पातमाकलय्य परिकम्पमानकलेवरा भीत-भीता निरन्तरगुरुचिन्ताक्रान्तहृदया दुःख-दुःखेन समयमतिवाहयन्ति, परिकल्पयन्ति च पर्य्याकुला बह्वायासैर्बहुविधान् प्रतीकारोपायान्। येन मनुष्यजीवने शान्तिसुखं मनोरथपथादतिक्रान्तमेव। अथ भवितव्यताया अवश्यम्भावितया, दुर्लङ्घ्यतया च नियतिनियमानां तेषां सर्वप्रतीकारप्रयत्नान् विफलीकृत्य, यदि कदाचित् समापतति तावत्, तथाकथिताऽऽपत् तदा तेषामेकपद एवान्तर्धत्ते विद्यावत्ताभिमानः, खर्व्वीभवति तीक्ष्णबुद्धिनैपुण्यप्रभवो गर्व्वः, प्रलीयते च परिकल्पितात्मसर्वज्ञता-समुदितः सुमहानहङ्कारः। ततश्च समुदेति सद्य एव कोऽपि किंकर्त्तव्यविमूढभावजनितो हृदयावसादः, भृशं परिक्षीयते चिरपोषिता नास्तिक्यबुद्धिः, सुदूरमपगच्छति च सा परमेश्वरप्रतिद्वन्द्विता, येन ते तदानीमात्मत्राणाय गललग्नीकृतवाससो बद्धाञ्जलयः साश्रुनयनाः प्रणमन्तः करुणं विलपन्तश्च शरणं समुपयन्ति जगच्छरण्यं जगदीश्वरम्, समुपासते च श्रद्धया निराकारस्याप्यस्य बहुविधाः परिकल्पिता मूर्तीः। परित्यजन्ति च सर्व्वविद्यामात्मनिर्भरताम्। भवन्ति च तथाविधावसरे अवश्यरक्षितव्यान् पुत्रकलत्रादिस्वजनान् विहाय "आत्मानं सततं रक्षेद्दारैरपि धनैरपि—" इति नीतिमनुसरन्त आत्ममात्रपरित्राणपरायणाः! किमतः परममीषामसारताप्रतिपादने प्रमाणान्तरापेक्षा वर्तते? अथ ये तावत्तृणेभ्योऽप्यसाराः पशुभ्योऽपि निकृष्टतरास्तृणादिसृष्टेरनन्तरं तथाविधजीवनिर्माणं विश्वविधातुः कीदृशं नाम बुद्धिमत्ताप्रकर्षं प्रकटयति?

अत्र यदुच्यते —'ननु विश्वसृजा खलु सर्वेषामस्माकं स्थावराणां, पशूनां मानवानां च सममेव सृष्टिः कृता । तत्र स्थावराः पशवश्च यथा सृष्टा अद्यापि तथैव वर्त्तन्ते, न पदमात्रमप्यग्रेसरा बभूवुः, मानवा एव केवलमसाधारणबुद्धिशक्तिप्रभावेणाखिलसृष्ट-वस्तूनामुपरि सर्व्वतोमुखीं प्रभुतामापन्नाः स्वकीययानासनोपवेशनशयनभोजनस्थानानां तत्तदुपकरणसामग्रीणाञ्च तादृशीं परमाद्भुतां परिपाटीं विदधुः, येन तेषां वासभवनानीन्द्रभवनभ्रान्तिमुद्यानानि नन्दनकाननविभ्रमं, निवासप्रदेशाश्च सुरलोकप्रतिद्वन्द्वितां विदधति, ते चातिमनोरमवेशविन्यासव्यापारेणान्याभिश्च लोकोत्तरनिसर्गविदग्धचेष्टाभिरमरलोकावतीर्णाः साक्षादमरा इव सम्भाव्यन्ते विमुग्धान्तःकरणैरस्माभिः । स्मरणातीतभूतकालादारभ्यारण्यचर-हस्त्यश्वोष्ट्रप्रमुखाः स्वापेक्षयाधिकतरबलशालिनः पशवो हि मानवैः सम्यगवशमानीय यानोपकरणवाहनादिकर्म्मसु नियोजितास्ते चात्ममर्य्यादां विस्मृत्य स्वोदरपूर्तिपर्य्याप्तमन्नमात्रमधिगत्य चिरक्रीता भृत्या इव यावज्जीवममीषामिष्टसाधनं कुर्वन्ति, गोमहिषादयश्च तैरेवं वशीकृता यथैते मन्त्रप्रमोहिता इव स्वकीयान् सद्योजातान् दुग्धपोष्यान् शावकानपि वञ्चयित्वा समर्पयन्ति पयांसि मनुष्यपोतेभ्यः । साम्प्रतं पुनः सिंहव्याघ्रादयो हिंस्रप्रकृतयः प्रकृत्यातिदुर्दमनीया अपि श्वापदा मनुष्यैस्तथा वशमानीता यथैते तुरङ्ग-कुरङ्गादिभिः परस्परं चिरवैरं शाश्वतिकं विरोधं, भक्ष्यभक्षकभावं च परिहाय रंगमञ्चेषु समुल्लासेन लास्यमनुतिष्ठन्ति, नैतावन्मात्रपर्य्यवसिता खलु मानवशक्तिः । मनुष्याणां प्रत्यग्रप्रकटीकृत-लोकोत्तर-विचेष्टितानि पुनरमीषामीश्वर-

प्रतिद्वन्द्विता सुसंगततया [illegible] यन्त्येव । तथाहि—क्षणमात्रकटाक्षपाते-नाखिलचराचर[illegible]व [illegible]र्योऽपि भगवानाशुशुक्षणिर्मानवकौशलाकलितो [illegible] [illegible]ऽस्वायत्तमनोवृत्तिर्भवन् सम्पादयति किल मानवानामिच्[illegible]न-[illegible]-बहुनाद्यनेकविधभृत्यकर्माणि; प्रखरतर—किरणनिकर[illegible]प्रतिभास्वरतेजोराशिरशेषग्रहेश्वरो भगवान् भास्करोऽपि वेत[illegible] [illegible] इवामीषामिच्छामात्रेणैव यथेच्छं बहुरूपं प्र[illegible] [illegible] । किञ्चैकमात्र वियत्तलसञ्चलनकुशलजलधरपट[illegible]लिता अतिचञ्चलप्रकृतितया 'चपले'त्यन्वर्थनामाकलिता इयं [illegible] याव[illegible]सुरासुरैरप्यनाकलितस्थैर्या विद्युतोऽपि साम्प्रतं मान[illegible]रेव दृढापादितस्थिरभावाश्चिरानुगतकर्मकर्त्र्य इवाकारमात्रतो [illegible] सुदूरवार्त्ताहरण-व्यजनसञ्चालनालोकदानाद्यनेकविधान्यसाध्यान्यतिदुःसाध्यानि च साध्यानि संसाधयन्त्यविरतम् । पवन[illegible]मेव मानवाभीष्टसाधनतत्परता दरीदृश्यते । [illegible]मण्डलमिवोत्तालतरङ्गमालासंकुलागाधजलाधारः पारावारोऽपि [illegible]पाठयति किल निखिलं मनुष्यशासनम्, यथेच्छं समाहरन्ति हि मनुजा धरोदरगतानीव रत्नाकरान्तर्वर्तीन्यप्यनन्तानि रत्नानि, तथा निर्भयं विचरन्ति च ते भूमितल इव महानिशायामपि सागरवक्षसि । उद्भिज्जेष्वपि मनुष्याणां परिलक्ष्यते खल्वव्याहता प्रभुता; साम्प्रतमस्माकं जीवनं मरणं वा सर्वथामीषामिच्छाधीनमेव । अथवा न केवलं जीवनमरणे फलकुसुमाद्युपजननमपि मनुष्येच्[illegible] "यद्भयाद्वाति पवनः" इत्यादिश्रुतिवचनं ना[illegible] तदा मनुष्याणामीदृग्वश-

तिद्वन्द्विता कथमसङ्गता विगर्हणीया वा ? इति,—तत्र मे प्रतिवचनमाकर्ण्यताम् ।

परमेशेन खलु विचित्रात्मलीलाप्रकटनकामेन विचित्रस्वभावा एव मानवाः सृष्टा अतश्च मनुष्या न पूर्व्वसृष्टवस्तुजातेन सर्वथा तुल्यरूपाः कृताः, किन्तु किञ्चिद्विशिष्टरूपा एव निर्म्मिताः, तथाहि यथा तेन पूर्वसृष्टेभ्यः स्थावरेभ्योऽस्मादृशेभ्यो जङ्गमानां पशूनामात्मार्थसम्पादनशक्तिमत्त्वादिकं वैशिष्ट्यं किमपि सम्पादितं, तथा पशुभ्योऽपि मनुष्येषु बुद्धिविवेकमत्ताद्यधिकगुणानां केषाञ्चित्सन्निवेशः कृतस्तत एव तेषां तत्तत्क्रियाविशेषपाटवं प्रादुर्भवति । परमेश एव स्वसृष्टेषु पृथक्प्रकारेषु स्थावरादिवस्तुषु परस्परं वैलक्षण्यापादकं किमपि वैशिष्ट्यं सन्निवेशितवान्, येन तेष्वेकस्य सुकरं कर्मापरेषां सुदुष्करमेव. यद्धि कर्म्मास्माभिरुद्भिज्जजातीयैः सुखं सम्पाद्यते. तद्धि पशुभिर्मानवैर्वा प्रयत्नशतैः कदाचिदपि न सम्पादयितुं शक्यते । इत्थं पशूनां विशेषकर्म्माण्यशक्यान्येव कथमपि सम्पादयितुमस्माभिर्मानवैर्वा । तथोदाहृतानि मानवसम्पादितशयनासनवासस्थानसौष्ठवादीनि मनुष्याणामत्यावश्यकविशेषकर्माण्येव तथाविधानि शय्यासनान्यन्तरेण कथमपि न ते प्राणधारणं कर्तुं क्षमन्ते, विधातृप्रेरणैव तेषां तादृशनिर्माणे नियन्त्री । यच्चामीषां दहन-पवन-तपनादि-दैवतैर्यथेच्छात्मानुकूल्यसम्पादनरूपालौकिकविचेष्टितान्युदाहृतानि, तानि पुनरापाततस्तथात्वेनानुभूयमानान्यपि साधारणान्येव, प्राकृतसाधारणनियमाननुबध्नन्ति, नैतेषु तत्तद्गर्भनिहिताचेतनरेतोबिन्दुभ्यः कार्चरणाद्यनेकावयवसम्पन्नसचेतनतत्तज्जीवाविर्भावेष्विव गोमयादिजडपिण्डेभ्यो

वृश्चिकाद्यनेकविधस्वेदजजीवसमुद्भवेष्विव किमप्यलौकिकत्वमसाधारण्यं वा वर्त्तते। मोहात् प्रमाद्वा सञ्जाते प्राकृतनियमानामत्यल्पमात्रे व्यतिक्रमे न केवलं सद्य एव व्यर्थीभवति तेषां सर्वविधो वाष्पयान-सञ्चालनादि-प्रयत्नः प्रत्युत सङ्घटते च युगपद् बहूनां तथाविधयानसंश्लिष्टानां जीवानां तत्तद्यन्त्रविशेषविस्फोटनादिनिबन्धनमकाले जीवनलीलावसानम्। यत्तु वनस्पतिलतास्वकालफलकुसुमाद्युद्भावनममीषामुपन्यस्तम्, तदपि विधातृविहित-कार्य्यकारणभावानुबिद्धमेव, नतु तथाविधकार्य्यकारणभावविरुद्धं किमप्यभिनवप्रकारमेवैतत्, किमु प्रत्यक्षीकृतं भवद्भिः कदाचित् मनुष्यकर्तृकं पनसतरावाम्रफलोद्भावनं, किं वा मुनिद्रुमे मालतीकलिकोद्गमनम्? अथ रङ्गमञ्चेष्वेभिः श्वापदनर्त्तनं यदभिहितं, तत्र हि तत्तत्पशुविशेषस्वभावसुलभतौर्य्यत्रिकनादप्रियत्वमेव प्रभवति न किमपि मानवानामलौकिककौशलम्, दृश्यते खलु बहुशस्तौर्य्यत्रिकताडनासम्यक्त्वे नर्त्यमानसकाशान्नर्त्तकस्य पञ्चत्वावगमः। एवमन्यान्यपि मानवचेष्टितानि परमेशस्यैव विचित्रनिर्माणशक्त्युपहितकार्य्यकारणभावमहिमप्रख्यापकान्येव, मूढाः किल मानवास्तत्र तत्रात्मकृतित्वं परिकल्प्यानल्पगर्वपरीताः सर्वेश्वरेण समं समकक्षतामाकांक्षन्ति। किन्न श्रुतिपथमायातं श्रीमतामचिरसंघटितं 'टैटनिक'-(Tatanic)-नामधेयस्यार्णवपोतस्य वृत्तं, मानवैर्महाप्रलयेऽप्यसम्भावितध्वंसस्यास्य कीदृशातितुच्छकारणेन निमेषमात्रत एव ध्वंसः समुपजात इति। सर्व्वेषामेव मानवकर्म्मणामेवंविधैव परिणतिरत्र नास्ति स्वल्पोऽपि सन्देहावसरः। परमेशानुग्रहमन्तरेण मानवा निजेच्छया स्वांगुलिमपि सञ्चालयितुं न समर्था भवन्ति, इति सुष्ठूक्तं श्रीमताऽऽदर्शपुरुषेण—

"यच्चिन्तितं तदतिदूरतरं प्रयाति, यच्चेतसा न गणितं तदिहाभ्युपैति ॥"

इति ; मनुष्यचेष्टितान्येवमेव वैफल्यभाञ्जीत्यलं पल्लवितेन ।"—

इत्येवं हेतुप्रमाण-पुरःसरं सुचिरं बहुविधं विशदञ्च व्याख्याय सभापतिरश्वत्थदेव उद्भिज्जपरिषदं विसर्जयामास। वयमपि तामश्वत्थ-व्याख्यातां मानवचरितस्यासारतां मुहुर्मुहुर्विभावयन्तो विस्मयमान-मानसाः स्वगृहं प्रति प्रस्थिताः। यथा दृष्टं श्रुतञ्च निवेदितं प्रियपाठकेभ्यः। एतत्सारासारविवेचने तु सहृदयधौरेया विवेचका एव प्रमाणम्।

इति 'उद्भिज्जपरिषत्' समाप्ता ।



# महारण्य-पर्य्यवेक्षणम्

आबाल्यं प्राचीनसंस्कृतकाव्यनाटकादिषु महारण्यस्थलीषु पूर्वपण्डितपरम्परावर्णितामपूर्वां शरत्समयसम्भूतनैसर्गिकसुषमासन्ततिमधीत्याधीत्य यावच्चिरं विवृद्धकौतूहलाः स्मः संवृत्ता वयं तद्दर्शनं प्रति, परं समुचितावसरालाभान्नैतावत्समयपर्य्यन्तं चरितार्थाऽभवत् सा मानसी वृत्तिः।

अथास्मिन् वर्षे श्रीश्रीशारदीयमहोत्सवोत्सवे कौतूहलस्यास्यादम्यतयाऽखिलकर्मानुरोधं परिहाय महारण्य-दर्शनेनात्मानं चरितार्थं कर्त्तुं कृतनिश्चया निर्गतवन्तो गृहाद्वनाय। अथ क्रमेण स्वग्रामप्रान्तारामोपवनोद्यानशस्यक्षेत्राभीरपल्ली-भिल्लपल्ली-शबरपल्ली-कुल्याह्रदनदनदीसरांसि तेषु च प्रातर्मध्याह्न-सायाह्न-नक्तन्तन-शरत्कालीननैसर्गिकसुषमाः पर्य्यवेक्षमाणा अविश्रान्तं गच्छन्तो गौरीगुरोर्महारण्यसंकुलं कमपि पावनं पाददेशं प्राप्ताः। ततस्तत्र कियत्कालं विश्रम्य परिश्रमं नाम विनीय च अदृष्टचरमनोहरारण्यशोभाकृष्टचेतसो वयं पुनरेवाटवीतोऽटवीमटाट्यमाना विस्मयरसस्फुरणविस्मृतात्मभावा अनिमेषविस्फारितनेत्राभ्यां तदेव प्राकृतरामणीयकमरण्यभूमेरवलोकयन्तो ऽज्ञाततत्तद्दिग्देशविभागा एव महारण्यमध्यभूमिमधिगताः। यत्र चोपर्य्यधःपार्श्वेषु च समन्तादरण्यानीं विहाय न किमप्यन्यद् दृग्गोचरं भवति वस्तुजातम्। यत्र मध्याह्नेऽपि समन्ताद्विराजमानतत्तदघनवनावलीघनच्छायनिवारिता इव नावकाशं लभन्ते गगनम-

ध्वाधिरूढस्यापि सहस्ररश्मेरंशवः । ततश्च यत्र सर्वमेव दिनमरुणोदयवेलेव प्रदोषसमय इव वा नः प्रतिभातिस्मतराम् ।
यद्धि स्थानं गभीराभोगं महायोगनिरतमिव सर्वतो निस्तब्धं शान्तञ्चाकास्त । यस्य चाविदूरे श्रूयमाणमनुगनिर्झरपतननादस्तत इतः स्वेच्छाचारप्रवृत्तश्वापदपदाहतशुष्कपत्रमर्मरध्वनयश्च न तन्निस्तब्धभावमपजह्रुः प्रत्युत कमपि माधुर्य्योत्कर्षं विदधुः । न जानीमहे किं स्थानमाहात्म्यादथवा सहसा तथाविधविजनस्थानावलोकनजनितान् मानवस्वभावसुलभाद् भयाद्वा तत्र गतानामस्माकं सद्य एव चित्तं सर्वथा निश्चलतां जगाहे, शरीरमपि निश्चेष्टं बभूव । न साम्प्रतं विभावयामः किं तत्र ध्यातं, कियत्कालो वा तथाविधेन ध्यानयोगेनातीत इति ।

अथ सहसास्मदीयध्यानयोगेन सह महारण्यस्य तथाविधनिस्तब्धभावमपहरन्नुदियाय युगपदेव समन्तान्महान् चटपटाद्यव्यक्तशब्दबहुलः शुष्कपत्रमर्मरसंवर्धितो दिगन्तव्यापी कलकलनिर्घोषः ।

ततः सुप्तोत्थिता इव कथमेतदिति तत्कारणं जिज्ञासवो वयं लोचने उन्मील्य यावदवलोकितवन्तस्तावद् ददृशिम समन्तात् सङ्घशो धावमानान् व्याघ्र-भल्लूकप्रमुखान् सर्वानेवारण्यचरान् पशुसङ्घान् । अथ तान् तथाविधोत्साहेनापततोऽवलोक्यास्माकं हृदये क एते, कुत आगताः कथमागताः कुत्र वा गच्छन्ति ? कथमेते परस्परं नित्यविरोधं परिहृत्य समेता व्रजन्ति ? न परस्परं विद्विषन्ति, नापि कवलपतितान् भक्ष्यान् भक्षयन्ति परं सर्व एव समुत्साहेन प्रधावन्ति! केन महताऽत्र कारणेन भवितव्यमित्यादिचिन्ताशतान्युदीयुः । ततो

यद्वाक्यं तद्वाक्यमिति निश्चित्य तदनुसरणमेव तत्कालोचितं कर्मेति मन्यमाना वयं तेषामनुसरणे प्रवृत्तिं कृतवन्तः। ते च सर्वे पशवः समन्तादागत्य कस्याश्चिन्महत्या गुहायाः समीपमासाद्य समेता यथायथं स्थानमधिचक्रुः।

तत्रोपविष्टाश्च ते करिणो बृंहणैरश्वाश्च ह्रेषाभिः पक्षिणः कूजनैर्गावो हम्बारवैरपरे च सानन्दमुच्चैः स्वजात्युचितैः शब्दैर्जयध्वनिमिवोदीरयामासुः। ततस्तूष्णीं भजमानेषु तेषु पशुराजः सिंहः स्वपदोचितगौरवेण शनैः शनैः पदन्यासं कुर्व्वन् गुहाभ्यन्तरान्निर्जगाम। तं निर्गच्छन्तं दृष्ट्वा ते सर्व एव युगपदुत्थाय पूर्ववज्जयध्वनिञ्चक्रुः प्रकाशयामासुश्च लाङ्गूलाद्यभिघातजन्यचटपटादिशब्दैरन्तर्गतमानन्दम्। सिंहोऽपि द्विस्त्रिः सिंहनादं विधाय तान् सर्वानभ्यनन्दयत्।

अनन्तरं पशुसाम्राज्यैकाधिपतिना श्रीमता केसरिणा वारद्वयं विततजृम्भणव्यक्तदंष्ट्रांशुभिस्तत् तमःप्रायः स्थानं शबलं विधाय प्रथममेव तथाविधतूष्णींभावस्य वैपरीत्यं सम्पादितम्। स जृम्भणानन्तरं सहसैव दैवीं वाचमाश्रित्य गदितुमारेभे। अथाकस्मादेव तन्मुखनिर्गतां समुचितस्वरोच्चारितविस्पष्टपदविभागां दैवीं वाचमुपश्रुत्य सहास्माभिः सर्वे समवेताः पशवो युगपत् तन्मुख एव विस्मयस्फारितदृष्टीं निचिक्षिपु विस्मयस्तिमितं सर्वमन्तःकरणञ्च तदीयानर्गलवचनप्रवाहेषूपाधाय केवलं शरीरमात्रेण स्वस्थानं भेजिरे।

सिंह उवाच—

भो भोः श्वापदाः समवेताः पशवश्च! अद्यास्मन्मुखनिर्गलितं देववचनोपन्यासमाकर्ण्य नात्र भवद्भिः स्वल्पोऽपि विस्मयः कार्य्यः

यतो मनुष्येभ्यः साक्षाद्देवसंसर्गतयाऽस्माकमेव देवभाषाव्यवहारे सम्यगधिकारो विद्यते। पश्यत यूयमहं साक्षादाद्यशक्तिं भगवतीं मूलप्रकृतिं वहामि, वृषभः साक्षाद्देवदेवं महादेवं शङ्करं वहति, गरुडो महाविष्णुं, हंसो ब्रह्माणं, मयूरः कार्तिकेयं, महिषो यमं, अजोऽग्निं, मूषिको गणेशं— इत्थं क्षुद्रतमादपि पशुराजपर्य्यन्तं यावन्तः पशवो देवानां प्रियवाहनानि भवन्ति, मनुष्यस्तु कुबेरस्य वाहनं, स तु धनाधिपो यक्षाणामधिपतिर्न तु साक्षाद्देवः—ततोऽहं ब्रवीमि देवभाषाव्यवहारेऽस्माकमेव मनुष्येभ्यो मुख्याधिकारो विद्यते ऽतोऽत्र भवद्भिर्न विस्मयः कार्य्य इति ।

एवञ्चेत् कथं भारतीयैर्म्मानुषैर्देवभाषायां व्युत्पत्तिर्लब्धा—इति तु नाशङ्कनीयं, यतस्तेऽपि स्वमस्तकैः काष्ठादिनिर्म्मिता नाना देवप्रतिमाः सम्पूज्य श्रद्धया संवहंतीति वर्तमानसभ्यसामाजिकैः पशुभिः समानतया निर्धार्य्यन्ते ! भवतु, इदानीं प्रस्तुतमधिक्रियते। अत्रभवतां श्रीमतामावेदनं यथाकालमधिगतमधीतञ्च मया प्रत्यक्षरं सम्यगभिनिवेशेनाद्योपान्तं, श्रीमतां स्मृतिमाकलयितुं प्रथमं तदेवात्र पुनः पठ्यते, इति पार्श्वस्थितस्य कस्यचिज्जराधवललोमराशेर्जीर्णऋक्षस्य मुखे दृष्टिं निक्षिप्य तूष्णीं स्थितः। समवेताः पशवश्च सर्वे करलाङ्गूलाद्यभिघातजन्यचटचटादिशब्देनानन्दं सूचयित्वा निश्शब्दं स्थिताः।

अथ स जीर्णाच्छभल्लः शनैः शनैर्जराविकलं कलेवरमुत्थाप्य प्रयत्नेन स्थिरीकृत्य च हस्तस्थितं पत्रमेकं वाचयामास। तद् यथाः—

"स्वस्ति श्रीविविधविरुदावलीविराजमानमानोन्नतमहाराजाधिराजपशुसाम्राज्यैकधुरन्धरचक्रवर्तिपदाधिरूढश्री-श्री-श्री-श्रीगिरिराजसुन्दरद-

रिशयहर्य्यक्षकुलप्रदीपमृगाधिपचरणसरोरुहद्दलेषु भूमिलुण्ठित-साष्टाङ्ग प्रणत शिरसामासमुद्रधरातलावस्थित-यावदरण्यचराशेषपशूनामसंख्यप्रणिपात-पुरःसर-सानुनय-विनयावेदनमेतत् विदितमस्तु देवपादानां। यदत्र सचराचर-सृष्टिप्रवाहे पशूनां सृष्टिर्नाम मनुष्यसृष्टितो बहुकालपूर्वमेव समभवत्। भगवता सृष्टिस्थिति-प्रलय-कारिणा हरिणापि प्रथमं मत्स्यादिपशुस्वरूपेणैवात्मावतारित इति पुराणशास्त्रेषु सुस्पष्टमुल्लिखितं, अधुनातन-नव-सभ्यकलाकुशलैः कृतिभिरपि युक्तिपरम्परोपन्यासै र्मानवसृष्टितः पशुसृष्टेरधिकप्राक्तनता प्रतिपादिता। ततश्च मानवाः पशुभ्यः पराचीना एव। किञ्च परमकरुणालयेन जगत्कर्त्रा परमेश्वरेण मानवाः पशवश्च प्रकृतितस्तुल्यरूपा एव कृताः। आहार-निद्रा-भय-मैथुनेषु सामान्यमेव पशुभिर्नराणाम्। श्रूयते चोभयेषामादितः समानैवासीदवस्था। उभये वनचारिणः सभ्यगरण्यका एवासन्, सन्त्यद्यापि अफ्रिकादिभूमिभागेषु केचिन्मानवा येषामवस्था नास्मदवस्थातः स्तोकमपि भिद्यते। ततो मानवेषु दैवपक्षपातविशेषोऽपि नानुमातुं शक्यते, यतो देवेन मानवा अस्मत्परतः सृष्टाः प्रकृतितस्तुल्यरूपाश्च कृताः। इत्थं स्थिते मनुष्या यत् प्रत्यहं प्रतिक्षणमभिनवोन्नमनमार्गमुद्भाव्यास्मत्तः सम्यगुन्नताः सर्वथा सुखं विचरन्ति। तथाहि—ग्रामनगर-पुर-पत्तन-कर्वटादीनि बहुविधानि निरापदस्थानानि विरचय्य तत्र च हर्म्यसौधप्रासादादिविचित्रगृहाणि निर्माय स्वजनज्ञातिकुटुम्बमित्रादिभिः परिवृता निवसन्ति, नहि तान् तेन शीतातपवातवर्षादीनि द्वन्द्वानि बाधन्ते। केवलं तथाविधगृहनिर्माणेन न तेषां द्वन्द्वबाधापरित्राणवृत्तिश्च-

-रितार्थमभूत्, तैरपराण्युपकरणानि साधु सम्पादितानि, यथा—शीतत्राणाय कार्पास-कम्बलादीन्यसंख्यानि धनिनिर्धनादि-सर्वावस्थजनोचितानि बहुप्रकाराणि वस्त्राणि प्रस्तुतानि सन्ति, यदावृतशरीरास्ते शीतरजन्यां निरावरणेष्वपि भूमिभागेषु विनैव क्लेशलेशं पर्य्यटितुं समर्था भवन्ति, वर्षातपत्राणाय सन्त्यनेकरूपाण्यातपत्राणि, यदाश्रयेण ते निदाघमध्याह्ने तथाऽनारतवर्षणघोरे जलधरसमयेऽपि गृहाभ्यन्तर इव राजमार्गेष्वपि सुखं विचरन्ति; तेषां कण्टकाद्युपघातजन्यदुःखेभ्यः पादत्राणायोपानहः, सुखोपवेशनाय विचित्राणि विविधानि चासनानि, स्वपनाय च दुग्धफेननिभाः शशाङ्ककोमलाः शय्याः प्रस्तुतास्सन्ति। सन्ति चाक्लेशदूरदेशगमनाय नानाविधानि स्थलजलनराणंव-धूम-व्योम-यानानि, किं बहुना मानवैर्वसुन्धरेयं महार्हाणि सारभूतानि रत्नानि महौषधीश्च दुग्धेति पुरातनी वार्ता। वस्तुतस्तैर्न केवलं धराया महोदधेरन्तस्तलादपि महान्ति रत्नान्याहृतानि। सम्प्रति मानवानां सर्वतोमुखी अप्रतिहता च प्रभुता दृश्यते, यतस्ते सूक्ष्मतमानपि बाष्पराशीनेकीकृत्य यथेच्छमायसगुरुयानानि दूराद् दूरतरं प्रापयन्ति, निसर्गचञ्चलामपि चपलां यन्त्रबद्धां विधाय सर्वत्र वार्ता वाहयन्ति। इत्थं ते प्रभावबलेन प्रत्यहं नवं नवमचिन्त्यमलौकिकमदृष्टचरमभूतपूर्वं वस्तुजातं प्रसुवन्ति। सचेतसोऽचेतसश्च यावन्तः सृष्टपदार्थाः सम्प्रति तेषां वश्यतामुपागताः क्रीडोपकरणायन्ते च। साम्प्रतमुपहसन्ति किल मर्त्यनगर्योऽमरावती मुद्यानानि च नन्दनवनम्। अस्मांस्तु ते न किञ्चिदपि विगणयन्ति, विगर्हयन्ति च पशव इति। पशवश्च सर्वे स्ववास-

स्थानाद् दूराद् दूरतरमहारण्यादिषु निष्कासिताः कतिपयान् केवलं गोमहिषप्रमुखानात्मकार्य्यसाधनायानुजगृहुः। तेषामुन्नतिर्न केवलमाधिभौतिकी यावदाध्यात्मिक्यपि, न च सा ईदृक्तया इयत्तया वा निर्णेतुं शक्या। ते विद्यावत्तया सुराचार्य्यं, कलाकौशलैश्च विश्वकर्माणमतीत्यैव वर्त्तन्ते। सर्वमेतद् देवपादानां सम्यग्विदितमेव। अत उच्यते मनुष्या अस्मत्तः पराचीनास्तुल्यप्रकृतयोऽपि यदेवं सर्वाङ्गीणोन्नमनं प्राप्तास्तत्र तेषां राजन्वत्ताया एव केवलं कारणतानुमीयते। नृपेष्वनुकूलेषु सत्स्वेव प्रजासु सर्वाः सम्पदो रतिमधिकुर्वते। यत्र यत्राधीश्वराः सर्वात्मना प्रजारञ्जन एवात्मानं नियोजयन्ति तत्र तत्रैव प्रजाः समुन्नताः सुखं तिष्ठन्ति। एतत्तु महत् कष्टतरं यत् सर्वथा समर्थेषु देवपादेषु शासितृषु सत्स्वपि वयमासृष्टेर्यथा जाताः स्थिता न स्तोकमप्युन्नतिं प्राप्ताः। किञ्च केषाञ्चिदस्माकं जात्युच्छेदो जात इति ततश्चानुमीयते एवं स्थिते कियत्कालानन्तरं सर्वेषामेव नः सम्यग्विलोपो भविष्यति, इति श्रुत्वा देवपादाः प्रमाणम्; इति।"

इति महारण्यपर्य्यवेक्षणे पाशवावेदनवाचनो नाम प्रथमः परिच्छेदः।

---

अथ द्वितीयः परिच्छेदः

तेषां तद्वचनशेषमाकर्ण्य स्वभावगम्भीरस्यापि केसरिणः कोऽपि प्रकृतिविपर्य्यासोऽदृश्यत। तथाह्यस्य सटाच्छटा लौहशलाका इवोत्कीर्णाश्चक्षुषी आलोहिते, कर्णौ संस्तब्धौ, जिह्वा विलोला वनस्पृष्टसृक्कगाग्रा चाभवत्। निर्जग्मुश्च मुहुर्दीर्घा समुत्तप्ताश्च प्रश्वासाः। अथासौ सहसोदतिष्ठत्, परिचक्राम च द्विस्त्रिरितस्ततः कतिचित् पदानि। ततो विवर्त्तितोग्रतरताराभ्यामुल्कामिवाभ्यन्तरीणक्रोधानलशिखामुद्गिरद्भ्यां चक्षुर्भ्यां युगपन्निर्दहन्निव तान् सर्वानवलोकयन्, उल्लाङ्गूलः स्वाङ्गमायच्छमानः पश्चादुच्चैर्भवन्, तीक्ष्णाग्रक्रकुरदंष्ट्रावलीकरालमास्यं व्यादायाखिलन्निवेकदा तेषां सर्वेषामायूंष्युच्चैर्जृम्भणश्चकार। ततश्च सर्वेषां पशूनामन्तरात्मना सह सर्वामेव तां महारण्यभुवं समुत्कम्पयन् सर्वाश्च कन्दरदरीः प्रतिध्वानयन्नापूरयंश्च द्यावापृथिव्योरन्तरालमुच्चालयंश्च ह्रदनिर्झरोदकानि, मुहुर्मुहुरशनिनिर्घोषदारुणं निननाद। तस्य तादृशीं चेष्टामालोक्य सर्वे ते पशवो जीवन्मृता इव, भयेन स्वस्वाङ्गेषु लीयमाना इव हृतसर्वस्वा इव, वज्रहता इव, पीतप्राणा इव, निश्चला निश्चेष्टाः, किंकर्त्तव्यविमूढाश्चित्रार्पिता इव निर्निमेषा निरुद्धश्वासाश्च बभूवुः। वयमपि तैर्निर्विशेषामवस्थामधिगतवन्तः।

अथ मृगाधिपस्तथाविधैस्तीव्रनिनादैरिव समं तादृशनिजागौरवश्रवणजां तीव्रां मानसीं व्यथां निर्धूय क्षणेनैव स्वपदोचितगौरवमनुस्मरन्निव पुनरेव पूर्ववद् धीरतामापेदे, मन्थरक्षोभसम्भ्रमानन्तरं महोदधि-

रिव पुनरेव प्रशान्तमूर्तिरभवत्। अभजञ्च तेनैव समं समन्तात् पूर्ववत प्रशान्तभावस्थिरतामरण्यानी, अभजन्त पशवोऽपि सर्वे सहास्माभिः पुनरेवोच्छ्वासम्। सहसोद्‌गतप्रबलवात्यापगमे यादृशी भवत्यवस्था जीवलोकस्य तदानीं तथैवाभूत्तस्य तत्रत्यानां तत्स्थानस्य च। ततोऽसौ महासिंहोऽमृतमय्येव प्रशान्तया दृष्ट्या पुनरुज्जीवयन्निव तान् समन्तादवस्थितानुपागतान् तिरश्चः, प्रशान्तधीरपदक्षेपेण शनैर्द्वित्रिः परिभ्रम्य सकृदूर्ध्वमधश्चावलोक्य वारद्वयमुज्जृम्भणं विधाय विकटदंष्ट्रांशुभिः कर्बुरयँस्तद्वनान्तभूमिमुच्चैर्विहस्य पुनरेवामरगिरा वक्तुमारेभे—

"अयि भो महारण्यचारिणो यावन्तः पशवः!

भवन्तो यथा महान्तो महासत्त्वा महाशयास्चावेदनपत्रमिदं तथैव नैपुण्येन लिखितम्। अत्रोपपत्तिरर्थगौरवमपरे च वाक्यगुणाः सम्यक् परिभाव्यन्ते, नालक्ष्यन्ते लेशतोऽपि निरर्थकत्वासमर्थत्वाद्यो दोषाः। अनीदृगाशयाः क एवं प्रसभं वक्तुं क्षमन्ते? अत्रभवद्भिर्विज्ञानमयेन चक्षुषा परितः समभिवीक्ष्य यदभिहितं तस्योत्तरपक्षे केवलायां क्रियायां सत्यामपि भवतां मर्य्यादासंरक्षणायैव, यत् किञ्चिदुच्यते। अहो! धन्योऽहम् यदद्य कृपार्द्रहृदयैर्भवद्भिर्मयि "राजेति" गौरवमारोपितं, तस्यैव संरक्षणार्थं मयाऽद्य किञ्चिन्मात्रमभिधीयते, श्रोतव्यञ्च तत्सावधानैर्भवद्भिरिति तु मे सानुनयः प्रणयः। अन्यच्च भवतां वचनावसाने मया केनापि स्वाज्ञानाद्यन्यतमेन स्वभावसुलभेन हेतुना यदूर्जितमधीरत्वं प्रदर्शितं, क्षन्तव्यं प्रथमं तदेवात्रभवद्भिर्भवाद्भिः [illegible] इत्यभ्यर्थये।" एतस्मिन्नन्तरे

सर्वे पशवः पुनरेव कर्णलांगूलाद्यभिघातोत्थचटपटादिशब्दैर्विविधैश्च स्वजात्युचितनिर्घोषैरभ्यन्तरसमुदितमानन्दभरमभिव्यज्य पूर्ववज्जोषमाशिश्रियुः ।

सिंह उवाच—"अत्र भवतां श्रीमतामावेदनपत्रस्य प्रत्युत्तरदानात् पूर्वं श्रीमद्भिः समवेतैः प्रदर्शिता पशुसमाजादृष्टचरीयं राजभक्तिर्नाम भृशं प्रशंसनीया । इतः पूर्वं पशुसमाजे कदाचित् कैश्चिदेवंविधा नीतिर्नानुसृतेति विस्पष्टमङ्गीक्रियते मया । श्रूयते हि पूर्वस्मिन् समये केसरिकुलधुरन्धरो महाबाहुः श्रीमद्भासुरकनामधेयः कश्चिदस्मत्पूर्वपितामहो महासत्त्वः पशुव्रजेषु स्वकीयराजत्वप्रख्यापनाय प्रत्यहमनुतस्थावतिभीषणं हिंसाप्रचुरं कर्म । तेन च समुद्वेजिताः सर्वे पशवस्तस्य राजत्वमङ्गीकृत्य तद्भक्षणार्थं प्रत्यहमेक एव मृगो मध्याह्नसमये समुपस्थास्यतीति समयं कृतवन्तः । अथ स ऋजुमतिरचिरेणैव कालेन पशुनैकेनेव छद्मना विनिपातित इति । तत प्रभृत्येवास्माकं परस्परं राजप्रजासम्बन्धोऽन्तर्हित एव, नैतावत्कालपर्य्यन्तं तस्य चर्चाऽपि केनापि प्रस्ताविता । एवं स्थिते यदद्य युष्माभिः सर्वैः समवेतै राजेति कृत्वा मत्सकाशमेवंविधगुरुकार्य्यपर्य्यालोचनार्थमागतं, प्रेषितं च प्रथमं मदाभिमुख्यमस्मत्सम्मानवर्द्धनमतिनिपुणतरमावेदनपत्रं तेन नवीकृतं मे गौरवं, सफलीकृतो राजशब्दो, बहुमानास्पदीकृतश्चात्मा । किम्बहुना अस्माकमद्यतनेनैतादृशव्यवहारेण नवीकृतमिवात्मानं मन्ये, जातं मयि अपि नवं तेजोऽभिनवश्चोत्साहः ; पश्यामि च समन्तान्नवमिव सर्वं जगत्, न च प्रभवामि प्रतिक्षणसम्वर्धीयमानानन्दप्रवाहं शरीरे सन्धारयितुम्" । इति वदन्नेवोच्चैः सिंहनादमेकं

कृतवान्। तदाकर्ण्य ते सर्वे पशवश्च स्वजात्युचितानन्दध्वानं चक्रुः, समुत्तस्थौ च तेषां सर्वेषां ध्वनीनामेकीभूतो महान् प्रतिशब्दः। येन तदानीं क्षुभितमिवाभवत् सर्वतस्तदरण्यस्थलम्।

अथ क्षणादेव पशुराजेन समं प्रकृतिमापन्नेषु पशुव्रजेषु पशुराजः पुनरेव वक्तुमुपचक्रमे—"एतदर्थं मे हृदयान्तस्तलोद्गता धन्यवादततयो विलसन्तुतरां श्रीमत्सु; साम्प्रतं प्रकृतमनुस्रियते। अत्रभवद्भिः श्रीमद्भिर्मनुष्याणामुन्नतिमधिकृत्य यदुक्तं तदग्रे समालोचयिष्यामि। ततः पूर्वञ्च मदीयराजतामधिक्षिप्योक्तानां वचनानां पर्यालोचनं विधेयमिति, तदेवादौ क्रियते।

संसारे ह्यस्मिन् विधात्रा यावन्तो जीवाः सृष्टाः स्वभावतः स्वयमुत्पन्ना वा यावन्तो जीवास्तेषु पशव एव यथार्थतः स्वतन्त्रा दृश्यन्ते। पशुराज्ये क्षुद्रतमस्य कीटस्यापि यादृक् स्वातन्त्र्यं वर्त्तते न तथा ससागरधरैकचक्रवर्त्तिनो मनुजस्य, वस्तुतः पशूनां मध्ये न कोऽपि प्रकृतो राजा विद्यते। मयि तु नाममात्रत एव राजशब्दस्य प्रवृत्तिः। परमेश्वरप्रसादान्नियतिवशाद्वा, सर्व्वे एव वयं समाना एव स्वतन्त्राः, यथेच्छं जीवामो, यथेच्छं विहरामो न कस्मिन्नपि कर्म्मणि पारतंत्र्यमनुभवामः। अत एवोक्तं सिंहस्य मे पशुराजत्वं नाममात्रमेवेति। नास्त्यस्माकं परस्परं कश्चिद्राजप्रजासम्बन्धो, यथा मनुष्याणाम्। नाहं कदापि प्रजाभूतान् युष्मानुत्पीडयन् यथेच्छं करं संगृह्य स्वविषयतृष्णां चरितार्थयामि। न च कमपि प्रजासु गुरुदन्डभयेन भीषयित्वा अवश्यकर्त्तव्यस्यापि कर्म्मणोऽनुष्ठानान्निवारयामि। नापि कस्मादपि स्वाभाविकं सर्वमेव स्वातन्त्र्यमपकृ-

प्य तमात्मन: क्रीडाशालमखिलं निर्माय यथेच्छं नर्त्तयामि। किं बहुना, मानवेषु प्रजानां पृथक् सत्ता नास्त्येव, राजशक्तेरेव तेषु सर्व्वतोमुखी प्रभुता। तेषां जीवनं राज्ञः प्रसादमात्रं, मरणञ्च सर्वथा तदिच्छाधीनं, ते सर्वथा राजप्रजातन्त्रा एव न केवलमैहिकं यावदामुष्मिकमपि कर्मजातं सम्पादयन्ति। नेमीनामिव तेषां वृत्तयो राजानुरागमार्गात्स्तोकमपि न व्यतियन्ति। बिभ्यति हि मानवाः परमेशादपि नरेशात्, सम्मानयन्ति च धर्म्मशासनादपि राजशासनम्। राजभयेन हि निरन्तरं वेपमानहृदया हि ते नाहारविहारादिष्वपि प्राकृतव्यापारेषु निजेच्छामनुसर्तुं शक्नुवन्ति, तेष्वपि सम्पूर्णं पारतंत्र्यमनुभवन्ति त प्रतिपदम्।

इत्युक्त्वा पशुराजः सस्मितमिदमाह—यूयं भारतभूमिनिवासिनः पशवस्ततश्च राजभक्तमानवकुलैः सह सुचिरसंसर्गतः संक्रान्तराजभक्तयो मदीयमहच्छिद्रकपशुराजशब्दप्रत्ययावर्ज्जितहृदया राजेतिकृत्वा मां परमैश्वर्यसम्पन्नं, ततश्च सर्वापदुद्धरणक्षमं, सर्वोन्नतिमूलभूतञ्च मन्यमाना एवं मत्समीपमुपागताः। नूनं न जानीथ यूयं यदिदानीन्तनोनविंशशताब्दीयसभ्यतायाश्चरमसीमानमधिरूढेषु जगन्मण्डलेषु राजशक्तिर्नाम पुराणकथास्वेवान्तर्हिता तिष्ठतीति।
किन्नामात्र भवतामद्यापि न श्रुतिपथमधिगतमेतद् यन्मार्किनापरपर्य्याय अमेरिकेतिप्रसिद्धः कश्चिन्नवाविष्कृतभूमिविभाग इदानीमवनीतले सर्वत्रैव सभ्यताया आदर्शतामुपागतः। वर्तमानसभ्यताभिमानिनो यावन्तो यूरोपीयप्रदेशाः सर्वात्मना यस्यैवानुकुर्वाणाः कृतार्थम्मन्या भवन्ति राजात्यन्ताभाव एव तस्य प्रधानगौरवम्। तत्र न

कोऽपि निरूढो राजा वर्त्तते। स हि प्रजातन्त्रो देशः, तत्र प्रजासु जातिकृतमैश्वर्य्यकृतं वा न किमपि तारतम्यं विद्यते। सर्वा एव प्रजास्तुल्यशक्तिसम्पन्नास्तुल्यप्रभावाश्च अत एव तत्र योऽद्य विण्मूत्रादिपरिशोधनहीनवृत्तिमुपजीवति परेद्युस्तस्य, स्वग्रामस्य, स्वमण्डलस्य, स्वदेशस्य चोपनेतृत्वं सम्भाव्यते। ततस्तत्र सर्वा एव प्रजा अविशेषेणात्मोन्नतिमाचिकीर्षन्ति। नीचवृत्तयोऽपि उत्तमगुणानभ्यस्यन्ति, तेन हि तत्र प्रतिक्षणं युगपदेव सर्वप्रकारोन्नतिरुपचीयते; प्रजातन्त्रताया एवं प्रत्यहं बहुगुणत्वं लोकोत्तरश्रेयस्करत्वञ्चावलोक्य युरोपे प्रजातन्त्रतां प्रति जनानां कोऽपि लोकोत्तर-पक्षपातो जातः। ततो दृश्यते तत्र तत्र प्रदेशेषु प्रतिक्षणमेव राजशक्तेः सुमहान् ह्रासः। समनुभूयते च सर्वेष्वेव राजकर्मसु प्रजानामेव प्रागल्भ्यम्। प्रजानामनुमोदनमन्तरेण तत्तद्देशाधिपतयः स्वेच्छया किमपि कर्त्तुमकर्त्तुमन्यथाकर्त्तुं वा न शक्नुवन्ति। सर्वेषु सभ्यतोद्दीप्तसमुन्नतप्रदेशेषु सर्वविधप्रकृतिनिर्विक्तात्मप्रतिनिधिसंगठिताः कतिचित् समितयो वर्तन्ते, तासामभिमतिं विना नृपतयो नात्मावश्यककर्माण्यपि सम्पादयितुं समर्था भवन्ति, दूरेऽस्तु तावदभिनवशासनसंविधाननियमप्रवर्तनवार्ता। तत्र हि राज्ञामाह्निकभोजनादिव्ययव्यवस्थापि तथाभूताभिः समितिभिर्निर्णीयते. तथानिर्द्धारितद्रव्येभ्य एककपर्दकमप्यधिकं न लभन्ते नरपतयो न वा बलाद्ग्रहीतुं शक्नुवन्ति, प्रजानामिव साधारणाधिकरणमण्डपेषु राज्ञामपि न्यायान्यायविवेकः क्रियते तत्तदाधिकरणकैः। इत्थं सुसभ्यपाश्चात्यमनुष्यसमाजेषु निर्वाणोन्मुखे प्रजासु सुचिरजाज्वल्यमाने

राजप्रतापानले, क्रमशः सन्धुक्षितायां चिरप्रशान्तायां प्रजाशक्तौ, स्थिते चास्माकमिव नाममात्रे तेषां राजशब्दे, श्रीमतां मयि पुनर्यदभिनव-राजसम्मानसमर्पणप्रयत्नो जागरूकः संवृत्तस्तदर्थं विलसन्तु मे धन्यवादाः पुनरेव युष्मासु, परं नाहमेवमसमये सर्वथान्तःसारशून्यं बहिश्चाकचिक्यमयमचिरविलासि नवमिदं राजमुकुटं स्वशिरसि संस्थापयितुमिच्छामि। इयच्चिरं वयं यथा परस्परं निरपेक्षाः स्थिताः स्थास्यामस्तथैवाप्रलयन्तेनैव वर्त्तनेन नो निःश्रेयसाधिगमो भविष्यति। द्रक्ष्यन्ति च भवन्तो मनुष्या अप्यचिरेण प्रतिपत्स्यन्ते ऽस्मत्सदृशीमवस्थाम्। यतस्तथाखर्वीकृतायामपि राजशक्तौ न सभ्यदेशेषु शान्ति राविरभूत्, समुत्पन्नस्तेषु 'निहिलिस्ट'-नामधेयः कश्चित्सम्प्रदायविशेषो यदन्तर्वर्त्तिनां जनानां चेतसि निरन्तरमेव निष्कारणं राजद्रोहवह्निः प्रज्वलति, यतन्ते हि ते निगूढराजघाताय, तेषां चेष्टितान्याकर्ण्य सर्वदा शङ्क एत्राहं युष्मास्वपि केचित् तथाविधा भवेयुरिति नोत्पादयामि कामपि बाधां श्रीमतां स्वच्छन्दविहरणेषु, तिष्ठामि चातिदूरे विसृज्य सङ्गं भवताम्।

अथाद्य भवद्व्यवहारमिममालोक्य परं तोषमनुभवामि, ततश्चाभिनन्दयामि सर्वात्मना श्रीमतां प्रस्तावममुं, चेष्टध्वं यूयं स्वोन्नतये, करिष्याम्यहं यथोचितं यथाशक्ति च साहाय्यं; अस्मद्धितायैव सुचिरं लयमुपगतः स राजप्रजाभावसम्बन्धोऽस्मासु। न तस्य पुनर्जीवनमावश्यकम्।

अभिनवप्रवर्तितेन राजभावेन सह प्रवर्तिष्यन्ते खलु युष्मासु काश्चिदभिनवा अननुभूतपूर्वा अश्रुतचरा अत एव दुःसहतरा यथा-

नियमकरप्रदानाधिकरणव्यवहारापेक्षणप्रमुखा आपदो, मयि च युष्मत्प्रतिपालनवृत्तिप्रमुखाः। उक्तं हि केनचिदव्याहतराजशक्तिमता प्राचीन-नरपतिना—

"औत्सुक्यमात्रमवसादयति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेव।
नातिश्रमापनयनाय यथा श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम्॥"

इत्थं क्लेशबहुलं राज्यभारं को नाम बुद्धिमान् स्वशिरसि ग्रहीतुमभिलषेत्! किञ्चेदानीं मयि भवद्भिः साग्रहं संस्थापिताप्यव्याहता राजशक्तिः कालप्रभावादनवरतं पाश्चात्यसभ्यजनसम्पर्कादल्पीयसैवानेहसा श्रीमद्भिरेव सोढुमशक्यतया तस्याः सङ्कोचनार्थं यत्नो विधास्यते, भविष्याम्यहमपि यथापूर्व्वं नाममात्रतो राजा, इत्थं स्थिते कथमहमल्पमात्रसमयार्थं तथाविधं क्लेशबहुलं राजभावं गृहीत्वा सर्वथा शान्तिसुखमनुभवत आत्मनोऽशान्तिहेतुर्भवेयम्! अतो नाभिकामयेऽहं युष्मत्प्रस्तुतं राजमुकुटमिदम्; येषां पूर्व्वपुरुषपरम्परा खलु राजमुकुटधारणोचिता, सम्यङ्नैपुण्यमधिगता च प्रजापालनकर्मणि, शोभतेऽदो राजमुकुटं तेषामेव मूर्धनि। अविज्ञातराजकर्म्माणः पुनर्नैतच्चिरं शिरसा वोढुं समर्था भवन्ति, समुज्झन्ति चाचिरेण स्वयमेव दुर्वहभारभिया। राजधर्म्मप्रतिपालनलब्धयशसां नृपाणामन्वय एवादर्शभूता नरपतयः प्रादुर्भवन्ति। राम-युधिष्ठिर-सप्तमएडवर्ड-पञ्चमजार्ज-प्रमुखनृपचक्रवर्त्तिनां प्रजारञ्जनप्रावण्यमेवात्र प्रमाणम्। अनभ्यस्तराजकर्माणः खलु कथमपि चण्डरवशृगाल इव लब्ध्वापि राजपदं न तच्चिरं रक्षितुं

पाश्यन्तीत्यत्र प्रजातन्त्रदेशेषु निरन्तरं घटमानस्वकल्पितप्रभुपरिवर्त्तनमेव निदर्शनम्। ततश्चाद्य श्रीमद्भिर्मच्छिरसि सादरं समारोपितेऽपि राजमुकुटे प्रकृतराजकर्म्मानभिज्ञतयाऽहं स्वयमेवात्मनोऽयोग्यतां विज्ञायाचिरेणैव तत्परित्यागे प्रवृत्तो भवेयं, यद्यहं स्वयं न तत्परित्यजेयं, श्रीमन्तोऽवश्यं रभसा मां ततो निष्कासयेयु रेवमादि मनसि कृत्वा न कामये राजमुकुटमिदम्।

अन्यथाभिनवराजतन्त्रताप्रवर्तनेन समं याः पुनः समापतिष्यन्ति युष्मासु दुःसहतरा आपदः समुन्नतसभ्यदेशानुचिकीर्षाप्रवणैश्च भवद्भिः कालेन प्रबाधितापि भवेदसौ राजतन्त्रता, ताः खलु न निवृत्तिमेष्यन्ति कदाचिदपि। तथाहि निवर्त्तितायामपि राजतन्त्रतायां राजप्रदेयकरप्रदानादयो व्यापारास्तु नैव निवर्त्तिष्यन्ते, प्रत्युत नानोपाधिमुपेत्य प्रवर्त्स्यन्त एव। किं नाकर्णितं प्रजातन्त्रेष्वपि राज्येषु प्रजानामितरासां प्रजाभावो हि यथापूर्वमवतिष्ठत एव, केवलं कतिपयानां शठानां किञ्चित् प्रागल्भ्यं संवर्द्धत इति। अथवा किं न प्रत्यक्षीक्रियते साम्प्रतं भारते कैश्चित् स्वार्थसिद्धिकुशलैर्विमोहिताभिः प्रजाभिः सनिर्बन्धमभ्यर्थ्यमाने राजपुरुषैः सानुग्रहं प्रवर्त्तिते "म्युनिसिपल्टी"-नामाभिनव-स्वायत्तशासने प्रजानां शोच्या दशा किल परां काष्ठामुपगतेति ? सञ्जायते च तेषां प्रत्यहं बहुव्ययदेशभाजः करभारस्य महीयसी वृद्धिरिति। अपि च तत्र तावदधिकारलिप्सया प्रतिद्वन्द्वितामापन्नानामत्यन्तरङ्गभूतानामपि परस्परं मनोमालिन्यम्, तद्धेतुकः कलहश्च प्रवर्त्तते। अत्र प्राप्ताधिकाराः पुरश्चण्डरवशृगालवत् प्राप्तरूपान्तराः स्नेहं, दयां, मैत्रीं, वात्सल्यं, साधुताञ्चैकपदे विसृज्य नित्यपरि-

चितेष्वन्तरङ्गेषु प्रतिवेशिषु स्वजनेषु निर्दयं यथेच्छं व्यवहरन्ति, साधूनुत्पीडयन्ति, दरिद्रान् बाधन्ते, सम्पादयन्ति च सिंहव्याघ्रसदृशानां बलशालिनां सर्व्वविधैरेवोपायैः समाधानम्, येन विराजते नित्यमशान्तिः प्रजासु। अवीम्यत एव तिष्ठन्तु भवन्तो यथास्थिता एव, मा कस्याप्यभिनवस्यानुचितस्य व्यवहारस्य प्रवर्त्तनं कुर्य्युः। युष्माकमतुलं शान्तिसुखमालोक्य कालेन मनुष्याः पुनर्युष्मत्पदवीमेवानुसरेयुरित्यनुमीयते, यतस्तादृशानुमानं प्रति तेषां राजशक्त्यवमाननेयमेव प्रथमहेतुतया प्रतिभासते।

अथेदानीं तावत् मनुष्यानालोचयामि। भवन्तु मनुष्या अस्मत्त उत्कृष्टा नाम, परं न स उत्कर्षो निरूढो न वा सर्ववादिसम्मतः सर्वविषयकश्च।

"आहारनिद्राभयमैथुनानि समानमेतत्पशुभिर्नराणाम्।
ज्ञानं किलैकन्त्वधिकं हि तेषां ज्ञानेन हीनाः पशुभिः समानाः।"

इत्येकः पक्षः। अत्र केचित् "ज्ञान"—स्थाने "धर्म्म" इति पठन्ति। अन्यश्च मार्कण्डेयपुराणे देवीमाहात्म्ये—

"ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरम्।
विषयश्च महाभाग याति चैवं पृथक् पृथक्।
ज्ञानं च यन्मनुष्याणां तत्तेषां मृगपक्षिणाम्।
मनुष्याणाञ्च यत्तेषां तुल्यमन्यत्तथोभयोः॥"

सर्वथा साम्यवाद-पक्षः। तत्रेदानीं प्रथमः पक्षो विचार्य्यते—मनुष्याणां पशुभिराहारादिविषयगते समत्वे प्रतिपादितेऽप्येनेन पक्षेण, वस्तुतस्तु तेष्वेव विषयेषु सुमहद् वैषम्यमुपलक्ष्यते। प्रथमं प्रधानतया मैथुनमालोच्यते—

पश्यन्तु भवन्तः काम-क्रोध-लोभ-मोह-प्रभृतिभिर्नैसर्गिकवृत्ति-निचयैः समाक्रान्तेऽपि जन्तुमात्रे मनुष्याणामुपर्य्येव तेषां स्थिराधिकारो दृश्यते। तथाह्यस्माकं कामः क्षणिकासङ्कल्पिसारूपमात्रम्, स च कदाचित् कस्यचिदेव भवति। न पुनः सर्वदा सर्वस्य; नाप्यस्मासु पूर्वरागजनितक्लेशपरम्परा, नापि विप्रलम्भबाधा वा, काचित् स्वजातीया ऋतुमती स्वभावप्रेरिता अस्माकं पुंजातीयानां समीपमायाति तस्यामेवास्माभिः कामप्रवृत्तिः कृतार्था क्रियते, नतु सर्वदैव कामबाधा ऽनुभूयते, नापि सततं कामचेष्टा वर्त्तते।

मनुष्याणां कामस्तु सङ्कल्परूपः, स हि सर्वदैव तेषां मनसि प्रादुर्भूतस्तानुत्पीडयति। स्थानं, क्षणं, प्रार्थितव्यजनोत्कर्षापकर्षादिकमविचार्य्यैव कामस्तानुद्वेजयति। ते च कामपीडिता निरन्तरं क्लिश्यन्ति, केचिन्म्रियन्ते च, प्रवर्त्तते च तेषु कामकृतो दारुणो व्यभिचारः। येन सर्वत्रैव मनुष्यसमाजेषु सुमहान् वेशसम्मर्दः, तन्मूलश्च प्रतिक्षणं बहुविधविपत्पातः संदृश्यते।

तेषु कामविकारस्य तिस्रोऽवस्थाः पूर्वरागः, सम्भोगो विप्रलम्भश्च। अथ कास्ता इति चेदुच्यते; तत्र पूर्वरागो नाम स्त्रीपुंसयोः प्रथमं परस्परमवलोकनमात्रेण परस्परस्यागमाय मनसि योऽत्युत्कटाभिलाषो जायते यथा अस्माकं मनसि कदाचित् काचित् भावपरम्परा समुत्थाय सद्य एव विलीयते, क्षणान्तरे हृदये तस्या गन्धलेशोऽपि नावतिष्ठते, मनुष्याणान्तु न तथा, मनुष्याणां चेतसि सकृदुत्थितो हि भावो वज्रकील इव बद्धमूलो यावन्न चरितार्थतामेति, तावत्तदर्थं तान् मुहुः प्रणोदयति। तथाविधप्रणोदनेन हि

तेषां तदनुकूलप्रवृत्तिश्चेष्टा चोत्पद्यते । ततश्च पूर्वसंस्तुतयोरसंस्तुतयोर्वा स्त्रीपुंसयोः परस्परं प्रति परस्परस्याभिलाषे समुत्पन्ने यावन्नोभयोः समागमस्तावत् तौ तदर्थं बहु विचेष्टमानौ नानाविधमुपायानुद्भावयन्तौ प्रतिक्षणं दुःसहं क्लेशमनुभवतः प्रदत्तश्च जलाञ्जलिर्लज्जाशीलसदाचारेभ्यः, अवनमयतश्च स्वजनानां शिरांसि, विनाशयतः कुलगौरवं, प्राप्नुतश्च महद्यशः, अन्ततो म्रियेते अपि कौचिच्चरितार्थौ ।

अथ सम्भोगः । सम्भोगस्तु अस्मास्वपि वर्तत एव, वयं सर्व एवाविशेषेण तत्र विदितभूयिष्ठा एव ततस्तदुल्लेखः पुनरुक्तिमात्रम्, कामस्य यत्सुखं तस्यैव भाजनं वयं, यच्च दुःखं न तस्य लेशोऽप्यस्मासु । धन्या वयं, धन्यश्च स जगत्स्रष्टा परमेश्वरो योऽस्मानेवंविधं सुखमात्रस्य भाजनं दुःखानभिज्ञांश्च कृतवान् । अथेदानीं विरहं विवृणोमि—

पशूनां चेतसि भावानामस्थायित्वं प्रतिपादयता परमेश्वरेणास्मासु सुमहान् प्रसाद एव कृतः, येन वयं न पूर्वरागस्य न वा विरहस्य नामापि जानीमः । एतदालोचयतस्तु मे यथास्मासु परमेश्वरस्य पक्षपातविशेषः प्रतिभाति, न तथा मानवेषु । मनुष्यैर्हि यथा पूर्वरागे तथा विरहेऽपि सततनिरन्तरदुःसहक्लेशभरोऽनुभूयते । विरहो नाम विप्रलम्भापरपर्यायो मिथःप्ररूढप्रेम्णोः कृतसङ्गयोश्च कामिनोः केनापि हेतुना वियोजनम् । शास्त्रीयपरिभाषा तु—

"यूनोरेकतरस्मिन् दूरसंस्थे विमनायते यदेकः स एव विप्रलम्भाख्यः" इति ।

अनया खलु विप्रलम्भावस्थया बाध्यमानो हि धैर्यौदार्य-

दिग्गुणसम्पन्नोऽपि गभीरसत्त्वोऽपि मानवः प्राकृत इव चपलायते, उन्मत्त इव प्रलपति, आर्त इव कातरो भवति, महाक्षयरोगाक्रान्त इव प्रतिक्षणं शरीरक्षयं प्राप्नोति । सततं दीर्घश्वासान् विमुञ्चति, कदाचिद् भूतले प्रलुठति, कदाचिन्मुक्तकण्ठं रोदिति, जाग्रदेव निशां नयति, नाप्नोति च क्षणमपि शान्तिम्, प्राकृतानान्तु कथैव का ?

स्त्रियस्तु विप्रलम्भे दुःसहमदनकदनानि सोढुमपारयन्त्यो लज्जा-शीलकौलिन्य-सदाचार-विनयार्जवेभ्यः सममेव तिलाञ्जलीन् समर्प्य महतीमधीरतां प्रकटयन्ति, भृशमन्तस्तप्यन्ति च, काश्चित्कठोर-हृदयाः कुलधर्ममपेक्षमाणा येन केनाप्युपायेन प्राणान् परित्यजन्ति, अपराश्च कोमलहृदयाः स्वहृदयानुमोदितमेवाचरन्ति । ता लज्जां, कुलस्थितिं, कुलाङ्गना-पद्धतिं किञ्च शपथशतैर्दृढीकृतं प्रथमप्रेमापि विस्मृत्य सद्यो व्यभिचारमाश्रयन्ते, वेशभावं प्रतिपद्यन्ते, तत्रापि च खिद्यन्ते दशाविपर्ययेन । मनुष्याणां यथा पूर्वरागस्तथा विप्रल-म्भोऽपि क्लेशकरः, तत एव केनचित् क्लेशासहिष्णुना मनुजेन स्वचित्तं प्रत्येवमुक्तम्—

"रागे चञ्चलतात्वनाश्चितरुचे चेतः प्रमुञ्च स्थिरं,
प्रेमाणं महिमानमेणनयनामालोक्य किं नृत्यसि ? ।
किं मन्ये विहरिष्यसे ? बत हतां मुञ्चान्तराशामिमां
एषा कण्ठतटे कृता खलु शिला संसारवारां निधेः ॥"

अपरेण चैवं मन्त्रितम्—

मलमतिविरसत्वात् स्वप्नमायोपमत्वात्
परिणतिविषमत्वात् सङ्गमेनाङ्गनायाः ।

इति यदि शतकृत्वश्चित्त आलोचयाम-
स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥"

अन्येन च निर्वेदमुपगतेन—

"मुखं लालाकीर्णं पिबति चषकं सासवमिव"—इत्यादि ।

वस्तुतस्तु कामो नाम सद्यश्चरितार्थतयाऽस्थायिरूपत्वादस्माकं सुखप्रदो मित्रम् । मनुष्याणान्तु—चिरेणापि अकृतार्थतया स्थायिभावं भजमानः क्लेशकरः शत्रुरेव । अयं तान् प्रज्वलितानल इव निरन्तरं प्रज्वलयति, महागद इव यावज्जीवं परिबाधते, निदाघमध्याह्न इव भृशमुत्तापयति, दस्युरिव प्रतिक्षणमुद्वेजयन् मृत्युभयं प्रदर्शयति, निशाचर इव भीषणस्वरूपं प्रदर्श्य विभीषयति । असौ शत्रुरिव क्लिश्नाति, धूर्त इव प्रतारयति, ऐन्द्रजालिक इव सम्मोहयति, अन्ततस्त्वन्तक इव तेषां प्राणानपहरति च । कामार्तानां खलु जगदिदं महत् परिभवस्थानं, सुदुःसह्यातनासहस्रसंकुलं महारौरवमिव प्रतिभाति । जायते च तेषु तेष्वखिलेषु रम्येषु महान् विद्वेषः । तथाहि—ते पिशाचाट्टहासादिव, निशाचरगोष्ठीसङ्गीतादिव भ्रमररुताद्बिभ्यति, कोकिलकुहूस्वरान् सुधाकरगर्जनादानिव, युगपदखिलजगन्मण्डलप्रसनोद्यतमहाकालसिंहनादानिव च श्रवणोपघातिनो मन्यन्ते । तेषु सुधाकरकिरणा विषमविषानलमुद्गिरन्ति, सुगन्धिकुसुमानि च निशितवज्रनखरशरायन्ते, समुद्गिरति मलयमरुदपि प्रबलदावानलज्वालाम् । ते पिशाचाविष्टा इव कामवेन भ्राम्यन्ति, आसन्नमृत्यव इव सुहृदुपदेशं न शृण्वन्ति, महामूर्खा इव गुरूनाद्रियन्ते, न नमन्ति तेषामग्रतः, प्रकुप्यन्ति चैषां हितवादाय, हठादधिगतस-

म्पदो दुष्कुलीना इव सर्वेषां स्थितिमुल्लङ्घयन्ति, कुर्वन्ति चासत्कार्य्यें-ष्वकातरं धनक्षयं, दिङ्मोहाक्रान्ता इव नियतं विदिशैव गच्छन्ति, सद्योजाताः शिशव इव सर्वथाऽज्ञानोपहता हिताहितविवेकशून्याश्च भवन्ति। इन्द्रजालविमोहिता इव वस्तुनः स्वरूपमन्यथैव विजानन्ति। ततश्च न शक्नुवन्ति कर्त्तुं सुरूपविरूपयोः सदसतोश्चान्तरम्। न भवति चैषां चेतनाचेतनविवेकः, नापि गम्यागम्यविचारः। न ते जातिं क्रियां, कौलीन्यं, सद्वृत्तं वा पश्यन्ति, किन्तु गावस्तृणमिव प्रत्यहं प्रतिक्षणमभिनवमेव जनं कामयन्ते, विस्मरन्ति च समयशतदृढीकृत-स्यापि पूर्वप्रणयस्य। कामातुराणां नाप्यमुष्मान्नैहिकाद्वा लोकाद् भीति-रस्ति। अथवा केऽमी वराका नैसर्गिकमहामोहोपहतचित्तवृत्तयो मनुष्या नाम, तेषामुपास्यीभूतानां देवानां ऋषीणां शास्त्रकृतामपि सुदारुणं कामव्यसनमुपश्रूयते।

तथाहि —सर्वलोकस्रष्टुर्वेदचतुष्टयप्रमथमावतरणतीर्थभूतस्य भगवतः पितामहस्य स्वकन्याभिरतिः, देवानामधिपस्य महेन्द्रस्य कपटेन गोतमकलत्रधर्षणं, जगतस्तमोपहस्यापि भगवतश्चन्द्रमसो गुरुपत्नी-हरणं, देवदेवस्य महादेवस्यानेकशतमुनिकन्यादूषणं, एवमन्येषामपि देवानां कामपारतंत्र्यं पुराणादिषु सुप्रसिद्धमेव। सन्ति च पुनर्महर्षि-प्रवराणां पराशरप्रभृतीनां धीवरकन्यादिगमनप्रभृतीनि भूयांसि कामा-यत्तकर्माणि शास्त्रे सम्यग्विवृतानि। एवमेषां कामवृत्तिर्न केवलं स्वजातीयरमणीषु चरितार्थतां लेभे यावत्तिर्यग्जातीयस्त्रीष्वपि प्रयो-जिताऽभवत्। तथाहि ऋषिविशेषेण महिषीगर्भे महिषासुर उत्पादितः, विभाण्डकेन हरिण्यामृष्यशृङ्गो जनितः। अतिशुद्धचरितस्य बुद्धदे-

तस्यापि तिर्यग्जातीयस्त्रियां बलात्कारवार्त्ता श्रूयते। एवमन्यान्यपि वृत्तानि मत्स्यगन्धादिवृत्तान्तेन दृढीक्रियन्ते, न विवृणोमि भवतां दुर्बोधभिया घटोद्भवकथानकादीनि। अस्ति च मनुष्याणां कोऽप्य-परविधः कामः। स हि लोभतृष्णाद्यभिधः। प्रथमोक्तस्वरूपः कामो हि स्त्रीपुंसयोः परस्परस्य परस्परमालम्ब्य यौवने वयसि प्रवर्त्तते, तिष्ठति च यावद् यौवनं तावन्मात्रकालं, ततो वयःपरिणामे जरया शरीरसौन्दर्यबलबुद्ध्यादिभिः सममसावपि क्रमशो जीर्यते, वार्द्धक्ये सम्यक् प्रलीयते च। द्वितीयस्तु तेषां हृदये यावन्ति भोग्यवस्तूनि संश्रित्याशैशवात् प्रवर्त्तमानः शरीरस्थितिं यावदवतिष्ठते, नासौ सत्त्व-संक्षयकारिण्या जरया जीर्यते, प्रत्युत प्रवर्ध्यत एव। तथाह्युक्तम्—

"केशः काशस्तबकविकासः कायः प्रकटितकरभविलासः।
चक्षुर्गर्धवराटककल्पं त्यजति न चेतः काममनल्पम्॥"

अपि च "तृष्णैका तरुणायते" इत्यादि। ततश्चैष पूर्वस्माद् भीष-णतरो भृशं दुनोति मनुष्यनिकरान्। सत्स्वप्यस्य लोभतृष्णाभिलाषा-द्यनेकनामसु लोभकत्वाल्लोभ इति लोकागमप्रसिद्धं नाम; ततो मया-प्यतः परं लोभ इत्येवाभिधायिष्यते।

लोभोऽयं स्तनन्धयस्य सद्योजातस्य प्रथमपीतस्तन्यबिन्दुना सहान्तः प्रविशति। निर्गच्छति च प्राणवायुना। लोभस्यास्य न विष-यविभागो दृश्यते, नापि च सन्तोषः। अत एव सुष्ठूक्तमेतत्—

"यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः। एकस्यापि न पर्याप्तम्॥" इति

अपिच—

"न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥" इति

कामशब्देनात्र लोभ एवाभिप्रेतः, मनुष्याणां लोभस्यैकमेव गतिः। यथा यथासौ कांक्षितविषयमात्मसात्करोति तथा तथैवायं स्फीतो भवति, न चास्यावधि दृश्यते।

तथाहि – यस्य दश मुद्राः सन्ति, स शतं कामयते, शती च दशशतीं, तद्वांश्चायुतं, अयुती च लक्षं, लक्षाधिपः कोटीं, कोटीशो राज्यं, राजा साम्राज्यं, सम्राट् पुनर्महेन्द्रत्वं, महेन्द्रश्च ब्रह्मपदमित्युत्तरोत्तरं लोभो वर्धते, ततश्चोक्तं–"आशावधिं को गत" इति। मनुष्येषु यस्य खलु परेणापि महिम्ना न तृप्तियोगः स एव महाशयो 'महात्मा' च कथ्यते। यस्य च स्वल्पया सम्पदा परितोषो जायते स कापुरुष इति। एवं लोभोपहतचेतसस्ते पापमनेकविधमाचरन्ति, पापेन चाकाल एव मृत्युमुखे निपतन्ति, लोभेन बाध्यमानास्ते योजनशतमपि न दूरं गणयन्ति, महार्णवमप्युत्तरीतुमीहन्ते ऽभ्रंलिहोत्तुङ्गपर्वतशिखराण्युल्लङ्घयन्ति, सुघोरकान्तारवत्मापि पर्य्यटन्ति। लोभेनैव ते स्नेहं, दयां, मैत्रीं, करुणां, स्वजातिप्रेम, परोपचिकीर्षां, अन्या अपि सद्वृत्तीरेकपदे विस्मृत्य परस्परमुपमृद्नन्ति, परस्परमुत्पीडयन्ति, परस्परं पर्याकुलयन्ति, परस्परमुपघ्नन्ति च। लोभादेव पुत्रः स्वहस्तेन पितरं निहन्ति, पितरौ स्वापत्यं विक्रीणतः, भ्रातरो ऽन्योन्यं जिघांसन्ति, मित्राणि परस्परं प्रतारयन्ति च, लोभपरतन्त्राणां हि न धर्ममुखप्रेक्षिता, नाधर्माद् भीतिः न नीतावादरः, न कुलाचारप्रतिपालनं, न सत्यव्रतभङ्गभीरुता, न परदुःखकातरता, न वा हिताहितविवेकित्वं भवति, भवति च परस्वाहरणे कौशलं, विश्वासघातकतायामुत्साहः, मिथ्याभिभाषणे प्रागल्भ्यमङ्गीकृतनिर्वाहे वैमुख्यम, अनादरः समाजबन्धने, अवैलक्ष्यमकार्य्यानुष्ठाने, अनास्था कुलगौरवे, अवज्ञा

विशुद्धव्यवहारे च। जायते च तेषां गौरवं श्ववृत्तौ, न स्ववृत्तौ, प्रयासोऽभिलषितार्थसिद्धौ, न स्वास्थ्यरक्षायां, अभिनिवेशोऽर्थागमोपायचिन्तने न शास्त्रादिषु, मित्रता चार्थेषु न स्वजनवर्गे, तथा व्यसनं कपटपाटवशिक्षायां न सदाचारपरिज्ञाने; तेह्यपमानं पुरस्कृत्य मानं पद्भ्यां विदलन्ति, आत्मानं सर्वथा विस्मृत्यापरचरणयोः सुगन्धितैलमर्पयन्ति, नैहिकादमुष्माद्वा लोकाद् बिभ्यति।

लोभेनैव मनुष्या महापातकमाचरन्ति, महदकार्यमनुतिष्ठन्ति, केचित् स्तेयवृत्त्यापरस्य यावज्जीवमुपार्जितं सर्वस्वमपहरन्ति, अपरे दस्युतया घोरं नृशंसकार्य्यं विदधति, अन्ये विश्वासघातकतया न्यासीकृतं विलुम्पन्ति, एवमेव सन्ति लोभपराणां सहस्रशः पन्थानः स्ववृत्तिसाधनाय, येषां नामोच्चारणेऽपि पापस्पर्शो भवति, तदलमेभिः। कामनामसादृश्यात् तु मैथुनप्रसङ्गे लोभः समालोचितस्ततोऽप्रासङ्गिकमप्येतदालोचनं न सर्वथाऽसङ्गतमिव विभावयामि। यदि श्रीमद्भिरत्र क्वापि त्रुटिरुपलक्षिता तदा स्वभावमहत्तया सोढव्या सा।

अथेदानीमाहारकथा कथ्यते। सत्यमस्माकमपि लोभो वर्त्तते, स तु क्षुत्स्वरूप एव न विषयतृष्णात्मा। अयं क्षुत्स्वरूपो लोभो मनुष्यैः सममस्माकं समानरूपोऽपि येन केनापि खाद्यवस्तुनोदरपूर्त्या सह शान्तिमुपैत्यस्मामाकं सः। भोज्यानि च पशूनां प्रायः स्वच्छन्दवनजातानि शाकफलपत्राण्येव, मांसाशिनः पशवः स्वल्पा एव तेपि यथाकालं यं कमपि जीवं नियत्या स्वाभिमुखमुपस्थापितं पश्यन्ति, तमेव हत्वा तद्दिनमाहारवृत्तिं निर्वर्तयन्ति। पार्श्वस्थितमपि नान्यं जिघांसन्ति। मांसभोजिनां महासत्त्वानां श्वापदानां प्रत्यहमेकवारभोजनेनैव तृप्ति-

र्जायते, यथाकथमपि प्रज्वलितजठरानलं निर्वाप्य ते मुनय इव प्रशान्तचेष्टा एकान्ते तिष्ठन्ति। यदि मनुष्या इव ते प्रतिक्षणं क्षुधा ताड्यमाना जीवघातमकरिष्यन्, तदा स्वल्पेनैवानेहसा महारण्यमिदं प्राणिशून्यं निर्मक्षिकमभविष्यत्। पशुषु गोमहिषादीनां केषाञ्चिद् बुभुक्षाप्राबल्यं यदनुभूयते, तत्र मनुष्यसङ्ग एव कारणम्। वानराणां पुनः नरवैकल्पप्रभावादेव सर्वदा बुभुक्षा-सन्धुक्षणमुपलक्ष्यते, इति च मे मतिः। समुद्रमध्यवर्ती प्रबलवडवानल इव मनुष्याणां बुभुक्षा निरन्तरं प्रज्वलत्येव, न जातु शान्तिमुपैति। प्रातर्मध्याह्नेऽपराह्णे सायं निशायां मनुष्या बहुविधानि भोज्यान्यपरिमितानि भुञ्जते, विशेषतस्त्वमीषां सभ्यतमा ये तेषान्तु न भोजनकालनियमो न वा भक्ष्यवस्तुनियमो लक्ष्यते, यावन्मात्रकालन्ते निद्रयाऽतिवाहयन्ति तावत्कालमात्रन्तेषामाहारविरति स्तदन्यत्र सर्वस्मिन्नेव समये भक्ष्यवस्तूनि तेषां सहचरभूतानि, प्रातर्निद्रापगममात्रतः शयाना एव ते किञ्चिदुदरसादकृत्वा न तल्पमुत्सृजन्ति। समुत्सृष्टतल्पाश्च ते मैत्रकर्मादिकं समाप्य पुनः किञ्चिदभ्यवहरन्तीत्थं पुनर्निद्रागमपर्यन्तं क्षणे क्षणे तेषामाहारक्रिया वरीवर्ति, कर्मक्षेत्रे, क्रीडाभूमौ, सङ्गीतगोष्ठ्यां, नृत्यकर्मणि, नाट्यदर्शने, सुहृत्समागमोत्सवे, किम्बहुना शवानुयात्रायामपि भोजनायोजनमेषां तुल्यरूपमेव प्रवर्तते। किन्नावलोकयन्ति भवन्तो मानवोदरपूरणार्थं प्रतिदिनं प्रातः प्रातः कत्यपरिमिता भक्ष्यवस्तुभाराः समानीयन्ते नानादिग्देशतो मनुष्यालयेषु? भोजनव्यापारे मनुष्याणां द्रव्यन्नियमोऽपि नास्ति, नास्ति तेषामभक्ष्यं किञ्चिल्लोकेऽस्मिन्; फलमूलबीजानि यानि यानि भक्ष्यतयोपकल्पितानि, तानि सर्व्वाण्येव मनुष्यैर्भक्ष्य-

न्ते, कटुतिक्तकषायादयः षड्रसाः साग्रहमेव तैरास्वाद्यन्ते, अस्माभिस्तु स्वरुचिकरमेव भक्ष्यं भुज्यते। किञ्च नैसर्गिकभोज्यजातैस्तृप्तास्ते बह्वर्थसाध्यानि यानि नानाविधानि सुस्वादून्यत्युपादेयानि भोज्यानि कल्पितवन्तस्तानि पुनः पर्य्युषितानि न केवलं विरसान्यखाद्यानि, किन्तु बहुविधव्याधिकारणान्यपि भवन्ति, यद्भक्षणादकाल एव बहवो मृत्युमुखे निपतन्ति। मनुष्यकल्पितान्याहार्य्यवस्तून्यपथ्यभूयांस्येव, तत्तस्यापथ्यभोजिनो मनुष्याः, पशवस्तु न तथा। पथ्यभोजित्वात्पशूनां न व्याधिर्नचाप्यकालमृत्युः। मानवानां बुभुक्षाप्राबल्यादेव सत्यपि तेषां भक्ष्यवस्तुप्राचुर्य्ये प्रायो दुर्भिक्षाविर्भावो भवति। दुर्भिक्षप्रादुर्भावसमये ते स्वकुटुम्बमांसान्यदन्तीति तेषामितिहसैर्ज्ञायते। ततश्चाहारे पशुभिः सह तेषां महद्वैषम्यमेव न स्वल्पमपि साम्यम्।

अथ निद्रा। तस्यामपि नास्माभिः सह तेषां साम्यमस्ति। सुनिद्रा सुदुर्लभा किल मानवैर्यास्मासु सर्वैरेव सर्वदानुभूयते। निरन्तरजाज्वल्यमानविषयतृष्णाकुलीकृतचेतसामेषां संस्पर्शभियेव निद्रा पलायतेऽतिदूरम्। अज्ञातनिद्रासुखानुभवावसरतैव मनुष्याणामात्मश्लाघानिदानमहत्त्वचिह्नम्। अनिद्रयैव बहवः सश्लाघं सगौरवं समयं नयन्ति, बहवश्च लुब्ध-समृद्धाः स्वार्थनाशाशङ्कया न निद्रां कामयन्ते। इत्थं निद्राविरहितानां तेषां सञ्जायते किलाकालमृत्युहेतुः समुत्कटो व्याधिरल्पीयसैव कालेन। पशवस्तु यथाकालं निद्रासुखमनुभवन्तो निरामयास्तिष्ठन्ति।

भयमपि पशुभ्यो नराणां प्रबलतरं बहुप्रकारञ्च। भयविह्वलीकृतचेतसो मानवा यादृशीं प्रदर्शयन्त्यसारतां प्रतिपदं तत्र सम्यगभिज्ञा एव श्रीमन्तस्ततोऽपतो भवतां तदुल्लेखो निरर्थक एव। पशवः खलु

स्वमृत्योरन्यस्मान्न बिभ्यति। मृत्युरेक एव तेषां भयस्थानम्। मानवा न केवलं स्वमृत्योः स्वजनमृत्यो र्दारिद्र्या दधिकारनाशाद् दशाविपर्य्ययाद्, व्यसनाद्राजदण्डाद्, दुर्जनपीडनाद्, दस्युबाधाद्यनेकविधदुःख-हेतुभ्यो बिभ्यति। भयस्थानान्येषामसङ्ख्यान्यैहिकानि, पारलौकिकभयकारणानि तु तेषामल्पसंख्यकानामत्यल्पान्येवेति न तदुल्लेखः कृतः। वस्तुतो मानवजीवनं भीतभीतमिवापगच्छति, तेषां शयने भयमासने भयं, भोजने भयं, गमने भयं, स्वदेशे भयं, विदेशे भयं, समुन्नतौ भय मवनतौ भय मुत्सवे भयं, व्यसने भयं, सर्वत्रैव भयस्यातिविकटमूर्तिर्विराजते। तदेवं मानवजीवनस्य भयप्राचुर्य्यमवलोक्याहं ताननुशोचाम्येव, श्रीमतान्तु कथमीर्ष्येति न विज्ञायते! येषां नाम सर्वतः सुरक्षिते स्वावरोधमध्येऽपि भवति खलु भयाविर्भावस्तान् भवन्तः कथं सुखिनो मन्यन्त इति न जानामि, येषां सर्व एव व्यापारः सभयाः प्रवर्त्तन्ते तेषां सुखमस्वप्नगोचरमिति किं सन्दिग्धव्यम्?

मनुष्याः सततमेव नानाविधाभिराशङ्काभिराक्रान्ताः सुभृशमनुभवन्ति निरवच्छिन्नं वैक्लव्यजालम्। तथाहि—मनुष्याणां मध्ये स्वभुजार्जिताशेषधरामण्डलाधिपत्यानां महैश्वर्यसम्पन्नानां प्रबलप्रतापशालिनां प्रचण्डदोर्दण्डप्रकम्पितससागरभूमिदिक्चक्राणां चक्रधरावतारतयोत्प्रेक्षितानां निखिल-नृपचक्र-चूडामणि-मरीचि-मालोपरञ्जितचरणनखाग्राणां, विक्रमोपहसितत्रिविक्रमविक्रमाणां, चक्रवर्तिपदवीमधिरूढानामपि भूभुजां भीतिस्थानानि खलु निरन्तराण्यपरिच्छिन्नानि, नेयत्तयेदन्तया वा परिच्छेत्तुमलमित्यर्थः। यतस्तेषां सर्वं चान्नपानादिकं भोग्यजातमसंख्याभिः शङ्काभिराकीर्णम्। येन हि ते न क्षणमपि

निर्भयाः सुखमासितुं समर्था भवन्ति, न च स्वच्छन्दतः स्नानाहार-विहारादीन्यनुष्ठातुं शक्नुवन्ति। निवसन्ति च स्वबन्धनकारागृह-मिव विशालपरिखा-प्राकारादिपरिवेष्टितोऽतीवदुर्गमं दुर्गं निर्माय रात्रिन्दिवं तदभ्यन्तरे। तत्रापि समन्ततो ऽगणितसशस्त्ररक्षि-पुरुषाभिरक्षिताः प्राप्तकारादण्डा इव शेरते त्रियामासु। दिवा च न स्वैरं बहिर्गन्तुं पारयन्ति, तत्रैव स्नान्ति, तत्रैवाश्नन्ति तत्रैव स्वयमपि खड्गपाणयः, प्रतिहारीनिकरनिरुद्धप्रवेशमार्गं कुलक्रमागताप्ततम-कतिपय-पुरुषमात्रलब्धप्रवेशाधिकारं, सेवन्ते खल्वास्थानमण्डपम्। न च गृहाद् गृहान्तरमपि स्वयं परिभ्रमितुमलम्। यदि कदाचिद्बहिर्निर्गच्छन्ति, तदा कारावासिनामिव तेषां पुरतः पश्चाच्च प्रधावन्ति बहवः सशस्त्रा रक्षिपुरुषाः, ये खलु न कस्मैचिदपि तत्पार्श्वगमनायावसरं ददति, न कञ्चिदपि तैः सहालापनायानुमन्यन्ते, दूरतोऽपसारयन्ति च चिरार्थितराजदर्शन-लालसा-स्फारित-नयनान् भक्तिप्रवणान् प्रजापुञ्जान्।

इत्थं निरन्तरप्रबल-भय-व्याकुलतया बद्धमूलतामापद्यते खलु तेषां हृदयेषु महानविश्वासः। तेन ते, न पौरजानपदेषु, न प्रकृति मण्डलेषु, न सचिवकुलेषु, नाप्यन्तःपुरिकासु, न मित्रेषु, न वा स्वजनेषु, न चात्मकुटुम्बेषु, नापि चिरपरिचितकुलक्रमागत-सदा-सन्निहितभृत्येषु, न पुत्रेषु न च प्राणाधिकप्रियतमेषु कलत्रेषु स्तोकमपि विश्वसन्ति। प्रत्युत सर्वेषामेवैतेषामन्तर्गूढरहस्यप्रभेदाय सर्वदैवैकैकस्य पार्श्वे विशेषपरीक्षया परीक्षितमेकैकं गूढपुरुषमवस्थाप्यावस्थाप्य स्वयञ्चावहिता स्तेषामाकारेङ्गितचेष्टितानि निश्वासप्रश्वासयोर्गतिभेदमपि परीक्षमाणाः

प्रतिक्षण माकुलीभवन्ति । तथात्म-रहस्यानि च सदा सर्वत्र सञ्चारिणः सदागतेः, सर्वव्यापकादतिभीराकाशात् , सर्वसम्बन्धाद् दिक्चक्रात् सर्वलोकचक्षुःकल्पाभ्यां सूर्याचन्द्रमोभ्यामपि परिरक्षितुकामा इव सर्वथा निर्मक्षिके, सर्वतः सुपिहिते च कक्षान्तरे सर्वेभ्य आत्मतमत्वेन विभावितस्य कस्याप्येकस्य तथाविधयोर्द्वयोर्वा समीपे समुद्घाटयन्ति, भेदशङ्कया न तत्र तयोस्तृतीयमनुमन्यन्ते ।

किञ्चान्तरेवं शङ्किता अपि बहिरशङ्किताकारमुपेत्य तृणाच्छन्नकूपोपमाः सर्वानेवात्मीयजनानलीकमधुरव्यवहारेणादरं प्रदर्शयन्त आत्मसात्कर्तुमीहन्ते ।

यदा मनुष्येषु तथाविधैश्वर्यसम्पन्नानामप्येवं व्याकुलता, तदा चिन्त्यतां तावत् , तेषां दुर्बलानां कीदृशं नाम भयव्याकुलत्वमिति !

वयं पशवस्तु सर्वथा निर्भीका एव । नास्माकं राजभयं, चौरभयं दस्युभयमीतिभयमग्निभयमुत्पातभयं, सम्पदपगमनभयं, रोगभयं, देशविप्लवभयं, नगरोपप्लवभयं, परराष्ट्राक्रमणभयं, गृहविलुण्ठनभयं, करपीडनभयं, प्रबलजनाभिभवभयं, दुर्जनजनपरिभवभयं, निष्कारणापमानभयं, शठजनप्रतारणभयं, कुलकलङ्कभयं, लोकापवादभयं, पुत्रकलत्र-स्वजनविनाशभयं, अनिमित्तपिशुनजनोत्पीडनभयं, निरन्तरदुरात्मजनात्याचारभयं वा विद्यते, न वा धर्मभयं, समाजभयं, परलोकभयञ्च, किञ्च स्थितमपि न गणयामो मरणभयमपि । ततश्च वयं स्वच्छन्दं विहरामः, स्वच्छन्दं विचरामः, यथेच्छं कुर्मो यथारुचि भोज्यान्यास्वादयामः, यथासुखं व्यवहरामः, यथाभिलाषं निवसामः, यथाकालं यत्र तत्रैव शेमहे । नास्मासु कश्चिदपि परोपपीडनकृतसङ्क-

ल्पो दुरात्मा दृश्यते, न वा विद्यन्ते परद्रव्यलोलुपाः परस्वापहारिणो दस्यवस्तस्करा वा, नापि परप्रतारणनिपुणाः कापट्यकुशलाः शठाः, न चापि प्रभुत्वप्रिया वृथाभिमानगर्विता दुष्टाशयाः, न वा धर्मकञ्चुका विश्वासघातकाः कृतघ्नाश्च। न वयं परलोकोपभोग्यानेकविध-भयङ्कर-निरयभयं प्रदर्श्य, किं वाऽनन्तकालावध्यनेकदिव्याङ्गनाश्लेषनन्दन-वनस्वेच्छाविहारादिषु प्रलोभ्य प्रतारिता भवामो धर्मध्वजिभिर्वञ्चकैः पुरोहितधूर्तैः। न चास्मान् ग्रहनक्षत्रादिप्रतिकूलसञ्चारजन्यावश्य-म्भाविविपत्पातभयेन भाययित्वा प्रवञ्चयितुं शक्नुवन्ति दैवज्ञाधमाः। नाप्यस्मत्समाजच्युतिभयं प्रदर्श्य यथेष्टमर्थमाददते समाजपतयः। नवास्मानुद्वेजयन्तीतस्ततः परभाग्योपजीविनो भिक्षुकाः। अत एव वयं सर्वथैव निर्बाधं, निरुद्वेगं निर्भयं, निरातङ्कञ्च जीवनमतिवाहयामः। अस्माकं मध्ये केचिन्मन्दबुद्धयो दुर्भगा मनुष्याणामापाततः शुभत्वेन प्रतीयमानामवस्थामवलोक्य विमोहिता अरण्यं परिहाय ग्रामं गत्वा मनुष्यानाश्रितवन्तस्तेऽपि मनुष्या इव निरवधि क्लेशमनुभवन्ति। नास्ति तेषां दुःखानामवधिः।

ग्राम्यजन्तूनां दुरवस्थामवलोक्य स्वत एव प्रवर्त्तन्ते बाष्पप्रवाहा नयनयोः। मनुष्यास्तान्निर्दयं ताडयन्ति, सर्वदैव दुष्करव्यापारेषु नियुज्य वाहयन्ति, रात्रिन्दिवं बन्धने निक्षिप्य तेषां स्वातंत्र्यं विघा-तयन्ति, येन ते आहारनिद्राप्रभृतिष्वपि नैसर्गिकव्यापारेषु नात्मनः प्रभ-वन्ति, न च ते प्राणपणेन मनुष्याणामनुवृत्तिं कुर्वाणा अपि स्वोदर-पूरणक्षममन्नं लभन्ते। किंच मनुष्यसंसर्गान्मलिनीकृतात्मसु तेषु केचित् शृगालादयः परं शाठ्य एवाशिक्षन्त, साम्प्रतं ते धूर्त्ततायामा-

त्मनः शिक्षागुरूणां मनुजानामप्यादर्शरूपतां प्राप्ताः, अपरे सर्पादयः खलानामेव नैपुण्यं लब्ध्वा जगति खलानां प्रधानोदाहरणानि सञ्जातानि, तेन हि मनुष्येषु खलस्वभावाः खलु द्विजिह्व-भुजङ्गादिनामभिरभिधीयन्ते।

भवत्वद्यात्रैव विश्रामः, समुपस्थितश्च सायं समयः, समागता चास्माकं जीविकार्ज्जनवेला, श्वः प्रातरेव जगन्माता नेतव्या भारतभूमौ। स्थास्यामि च दिनत्रयं तया सह तत्र। अथ चतुर्थेऽह्नि तां स्वस्थानं प्रापय्य तत्परदिवसेऽवसरेऽस्मिन् कथयिष्यामि भवद्भ्यो वक्तव्यशेषमित्युक्त्वा व्यरमत् पशुराजः।

अथ विरतिमुपगते पशुराजे सर्वे ते पशवः स्वामिपादग्रहणसंभ्रमान्दोलितभूमण्डलमुत्थायाहंपूर्विकया परस्परमुपमर्द्य पुरतोऽस्यैकैकशो दण्डवत् प्रणम्यैकान्ते बद्धाञ्जलयोऽवतस्थिरे। सिंहश्च विचित्रदंष्ट्रांशुभिन्नान्धकारं स्मयमानः प्रशान्तयापि विकटतारकया दृशा तान्सर्वान् युगपदलोकयत्। ततस्तान् यथायथं सादरमाभाष्य पुनः दिवसचतुष्टयान्ते ऽत्रैव नः समागमो भविष्यतीत्युक्त्वा स्वयमन्तर्हितो बभूव। बभूव च तत्र समन्ताद् यथाभीष्टां दिशं प्रचलतां तिरश्चां संभ्रमजनितो महान् संक्षोभः। क्षणेनैव ते सर्वे स्वस्वयूथैः सह यथाभीष्टां दिशं भेजिरे। अथ सहसा तत्स्थानं निर्मक्षिकं भवन्मन्थनानन्तरं सर्वथा स्थिरतामापन्नो जलनिधिरिव सर्वतः प्रशान्तं समपद्यत। सलीलं निर्गच्छतां पशूनां प्रयाणोत्सवमवलोकयतां चास्माकं कश्चित्कालोऽज्ञात एव व्यतीयाय। ततः सद्य एव तथाविधप्राणिसमवाय-विरहिता वयं पातालोदरप्रविष्टा इव सुगभीरकरालगिरिगुहाभ्य-

न्तरनिपतिता इव, मनुजकृतविभागात्पूर्वमैक्यं दधतोर्भिर्दिग्भिः कवलीकृता इव, द्यावापृथिव्यो रन्तरालकुहरप्रस्खलिता इव, महाजलनिधिजलराशिमध्यनिमग्ना इव, तदायताभोगभीषणमहारण्यस्य सर्वथा प्राणिसम्पर्कशून्यं मध्यस्थलं भजमानाः, आगमनप्रवेशमार्गं निरूपयितुमशक्नुवन्तः, सुतरां पतनादात्मरक्षणाक्षमस्य शयने "पद्मनाभ"-स्मरणमिव तत्रैवावस्थानं विना गत्यन्तरमपश्यन्तस्तत्रैव स्थितवन्तः। सहसा तथा निर्जनभवनेन तद्धि स्थानं क्षणेनास्माकं पूर्वतोऽपि घोरतरमभवत्; वयमपि च कियत्कालं स्तम्भिता इव निश्चलाः किंकर्तव्यविमूढा अभवाम।। न चोचितेषु प्रात्यहिकव्यापारेषु हस्तपादादिकमस्माकं प्रससार, क्षणं न क्षुधा, न तृष्णा, नाप्यपरा काचन वृत्तिरस्मान् बबाधे, वयं केवलं भयजडाः शोकाभिभूता इव हृतसर्वस्वा इव अपरिहार्य्येष्वप्याहारादिकार्य्येषु पराङ्मुखा जोषं स्थिताः।

एवं कियत्कालमवगमय्य कथं कथञ्चिदुत्थाय स्नानादिकमनुष्ठाय च यथाशक्ति सन्निहिततरुभ्यः फलान्याहृत्य क्षुत्प्रतीकारं कृतवन्तः।

अथाविमृष्यकारिणोऽस्मान् भीषयन्निव क्षणेनादर्शनमुपगतो भगवान् गगनाङ्गनोज्ज्वलप्रदीपस्त्रिभुवनैकचक्षुः सहस्ररश्मिः।

अथास्ताचल-शिखरावलम्बिनि भगवति मरीचिमालिनि सहसा दृक्पथमतिक्रम्य प्रस्थातु मुद्यते किरणाः खलु "निराधाराः क्व स्थास्यामः" इति प्रष्टुमनस इव क्रमेणोच्चोच्चतरस्थानमारुह्य तदनुसरणं चक्रुः। तत स्तेन 'मा तावत् पुनरहमागमिष्यामि, ममाऽदर्शने यावद् विभावसौ कालं नयत'—इत्यभ्यनुज्ञाता इवाग्नौ प्रविष्टा अग्निमया इव क्षणं सर्वं भुवनं गगनतलञ्चालोहितं कृतवन्तः। अथ तान् निसर्गप्र-

तिद्वन्द्विनोऽसहायानवलोक्यान्धकारः समुचितावसरमुपलभ्य सहसा गभीरगिरिगुहातो निःसृत्य महादैत्यो मायाबलेनेव स्वकायं वितत्य क्षणेनैव तान् प्रक्षालितानिव निःसारयामास ।

इत्थं सवितुरदर्शनं, तस्य किरणानाञ्च तथाविधं परिभवं दृष्ट्वा भीतानीव युगपन्मुद्रितान्यभवन् पद्मवनानि, भ्रमराश्च तेषां परिसान्त्वनायेवोपर्य्युड्डीयमाना मधुरगुञ्जनं वितेनुः । दिवाचराः पक्षिणः, पशवश्च दिवसनाथस्य तादृशं समयकृतदशाविपरिणाममनुभूय शोकपरीता इव समन्ताद् वृक्षशाखास्वरण्यस्थलीषु च यथायथमाश्रयमालम्ब्य सकरुणमुच्चैर्विलपितुमारेभिरे, व्ययुज्यन्त स्वयमेव शोक-वैराग्य-विधुराणीव चक्रवाकमिथुनानि । निशाचरा दुष्टस्वभावाः पशवस्तु जयशब्देनेवोच्चैरारटनेन तथातमोबहुलं प्रदोषं प्रत्युज्जगृहुः । वस्तुतस्तदानीं क्वचित् दिनान्तागतयोः स्वपित्रोर्दर्शनानन्दोच्छ्वसितानां कुलायस्थितानां पक्षिशावकानां, पक्षिणाञ्च स्वशिशुसन्दर्शनप्रेमावर्जितहृदयानां सस्नेहचोकुञ्चीतकूजनेन, क्वचित् कुलायान्वेषिणामितस्ततो भ्रमतामनाश्रयाणां पतत्रिणां सोद्वेगसंरावेण, क्वचिद् यूथभ्रष्टानामितस्ततः प्रधावतां भयव्याकुलानां हरिणशिशूनां सकरुणविरावेण, क्वचिद् गोष्ठमभिद्रुतानां गोव्रजानां हाम्बारवेण, क्वचिदश्वानां ह्रेषाभिः, क्वचिद् गजघटानां बृंहितैः, क्वचिदाहारसंग्रहार्थं प्रस्थातुमुद्यतानां व्याघ्र-भल्लूकप्रमुखानां श्वापदानां दिगन्तप्रतिध्वानिना गम्भीरनिर्घोषेण, क्वचित्परस्परामन्त्रणपराणां चक्रद्वन्द्वानां हृदयभेदिकरुणामन्त्रणरवेण, क्वचिच्च गोमायुसारमेयाणामसारोच्चारटनेन च सुमहान् कोलाहलः समजायत । तेन हि समाप्रिता वयं तत्कालानुष्ठीयमान-नगर-देवायतन-नीरा-

जन-युगपदाहन्यमानानकदुन्दुभिकाहलकांस्यादित्राद्य-भाण्डारवाणाम् ।

अथ सुरवधूपन्यस्त-सान्ध्यप्रदीपा इव क्रमेणैकैकशो विजृम्भिरे गगनाङ्गने ज्योतींषि, विलसुश्चेतश्चेतश्च वनदेवतासचकितेक्षणानीव वनराजिषु ज्योतिरिङ्गणानि, उदियाय च सान्ध्यविधिपरिचिकीर्षयेवेषदुन्मुक्तशरन्नववधूवदनमण्डलमिवास्तमितसूर्यशोकोन्मृष्टावशेषमाहेन्द्राशावधूसकुङ्कुमचन्दनस्थासकमिवालोहितं षष्ठीसायन्तनचन्द्रबिम्बखण्डम् ; विकासमीयुश्च तदवलोकनकुतूहलेनेव जलदेवतेक्षणानीव कुमुदवनानि, समनुसस्रुश्च तानि सम्पदनुगामिनो मित्रवर्गा इव विहाय तत्क्षणं कमलवनानि भ्रमरकुलानि, चन्द्रोदय-विजय-गानमुद्गातुकामा इव चुकुजुरुच्चैः सममेव सर्वे ;जलचराः पतत्रिणस्तदाकर्ण्य चान्ये पक्षिणः पशवश्च पुनरेव तारस्वरेण स्वस्वानुरूपमारवं कृतवन्तः, पुनरेव तत्र पूर्ववन्निखिलतिर्यग्रवजनितः सुमहान् कोलाहलः समपद्यत, तेन चापसारिता क्षणमात्रमस्मच्चेतसस्तथाविधविजन-वास-जनिता भीतिः । ततश्च प्रक्षीणकायमपि ज्योतिःस्वरूपं भगवन्तं चन्द्रमसमुद्यन्तमालोक्यान्धकारो भीतभीत इव क्रमेण गगनतलात् पर्वतशिखराद् वृक्षाणामग्रभागाच्चापसृत्य पुनरेव निभृतस्थानानि भेजे, जहसुश्च घोरान्धकाराक्रान्तिमुक्ताः सर्वा दिग्वध्वः, विललासाभिनव-शारदोत्सव-सम्प्राप्त-पतिसमागमा कामिनीव ज्योत्स्नाधवलाम्बरोज्ज्वल-तारकाराजि-मणिविभूषणा रजनी । दूरदेशागतः सुहृज्जन इव सान्ध्य-समीरणो मन्दं मन्दं सञ्चरन् सम्भावयामासैकैकं तदागमन-हर्षोत्फुल्लमिव प्रफुल्लकुसुमं वनतरुम् । जग्राह च ततस्ततः समुचितोपायनमिवामोदभरम् । शुशुभिरे च क्वचित् क्वचिद् गगनैकदेशे शारदमहोत्सवोन्मत्तानां वङ्गीयजानपदानां पुञ्जी-

भूता अट्टहासा इवाऽजलगर्भाणि सुधाधवलानि जलधर-खण्डानि; विच-कसुः पवनान्दोलिता विविधकुसुमाभरणाः शारदोत्सव-प्रफुल्ला बङ्गीय-कुल-ललना इव लताः ।

इत्थं सर्वतः प्रदोषरमणीयं महारण्यस्थलं पर्यवेक्ष्य वयं क्षणं विजनवासदुःखं विस्मृत्य तूष्णीं स्थितवन्तः। ततः क्रमेणोवाहास्मच्चेतसि बहुविधा चिन्ताधारा। क्व वयं ? क्व चैतत् सर्वतो जनसम्पर्क-रहितं भीषणमरण्यस्थलम् ? क्व सा नगरवासिनां शारदमहोत्सवाकुलता, क्व चास्माकं भीषणनिर्जनारण्यनिवासभयव्याकुलता, अद्य दुर्गाषष्ठी, सर्वे खलु जानपदा मानवाः कर्मबन्धाद्विश्रामं लब्ध्वाऽतिदूरादपि प्रदेशा-दागत्यागत्य स्वजनैः सह सम्मिलन्ति, स्वपुत्र-कलत्रादिभ्यो यथाशक्ति वसनाभरणानि वितीर्य तेषां परितोषमुत्पादयन्ति, तेषां सन्तोष-सूचकं मधुरवचनमाकर्ण्याकर्ण्यामृतरसस्य तृप्तिं च निर्विशन्ति। किं बहुनाद्य खल्वस्मद्देशीयाः सर्वत्र एव स्वस्य विभवमनोरथानुरूपं संचेष्ट्य सुखिनो भवन्ति, सफलयन्ति चानुरूपचेष्टनैरुत्सवदिवसम्।

तथाहि—प्रवर्तते क्वचित् बहोः कालात्समागतानां सुहृज्जनानां नर्मपरिहास-कथानां समुदयः, क्वचिद् गगत-पुत्र-सन्दर्शनपुलकितयोर्जनकजनन्योरानन्दाश्रु विसर्जनपुरःसरकुशलप्रश्नपरम्परा, क्वचिदेकान्ते सम्मिलितयोर्दम्पत्योः किमप्यविश्रान्त-प्रेम-सम्भाषणं, क्वचित्सवयस्कानां वयस्यानां युवतीनां वक्रवाक्य-रचना-चातुर्य्यं, क्वचिदभिनव-वसन-भूषण-लाभ-प्रमुदितानां बालानामानन्दकोलाहलश्च। अपि च क्वचिद्विदेशागतस्वजनानां भोजनार्थं नानारस-चर्व्यचोष्यादि-चतुर्विधा-न्नपरिपाको भवति, क्वचित् प्रियतममनोरञ्जन-वेश-विन्यासः क्रियते।

क्वचिदभिनव-सामग्री-परम्परया यथेप्सितं गृहसज्जा सम्पाद्यते, क्वचि-त्सविचिन्त्यते च सह सखीभिः प्रियजनहृदयवशीकरणोपायः, स्मर्यते गीतिका, विभाव्यते काव्यार्थः, विरच्यते कविता, आलोच्यते प्रहेलिका, अभ्यस्यते व्यंग्यवाक्य-वैदग्धी, उल्लास्यते विलासः, आचर्यते विभ्रमः, उपदिश्यते अङ्गवलना। क्वचिदावध्यते विलासिजनैः संगीतगोष्ठी, वाद्यते वीणा, आहन्यते मृदङ्गः, गीयन्ते सङ्गीतकानि, क्रियते वंशीरवः, दीयते करतालिका। क्वचिन्निर्विश्यते सवयोभिः क्रीडारसः, क्वचित् कथ्यन्ते नानाविधलोकोत्तर-रसकथाः, व्याख्यायन्ते चाख्यायिकाः। एवं सर्वतः समुत्सवमय इवानन्दमय इव, हर्षसागरनिमग्न इव, समधिगतसाम्राज्याभिषेक इव, सम्प्राप्तामरलोक-सम्पदिव, विस्मृताशेषक्लेश-सन्तानो विराजते खलु भावुक-भक्त-बहुलो ललितकलानिकेतनं वङ्गदेशः। विशेषतो येषां भवने जगदम्बा-प्रतिमा-समर्चनम्, तेषामुत्सव-व्यापारास्तु नेयत्तया नेदन्तया वा निरूपयितुं शक्यन्ते।

तथाहि--अलं क्रियते प्रतिमा, सज्जीक्रियते गृहम्, न्यस्यन्ते नानावर्गविचित्राणि वितानमण्डलान्यङ्गनोपरि, स्थाप्यन्ते चूतपल्लवमालिका गोपुरतोरण-शिखरेसु, निधीयन्ते पूर्णकलशाः कदलीस्तम्भाश्च द्वारदेशेषु, वाद्यन्ते बहुविधानि वादित्राणि, आह्रियन्ते सम्भाराः, आरभ्यते बोधनं, प्रस्तूयतेऽधिवासोपकरणम्, पच्यन्ते मोदकाः, प्रदीयते भृत्येभ्यः सपारितोषिकं वेतनम्, परिजनेभ्यो वस्त्रालङ्करणजातञ्च। बालाः सानन्दकोलाहलं नृत्यन्ति, युवान इतस्ततो विचरन्तः पूजोपकरणान्याहरन्ति, केचिदामन्त्रयन्ति स्वजनानपरे निमन्त्रयन्ति सुहृज्जनमन्ये प्रणोदयन्ति भृत्यान्, केचित्समानयन्ति स्वगृहागतान्

सन्मानार्हान् ग्रामवृद्धान्, केचित्प्रत्युद्गृह्णन्ति मित्राणि, केचिदालपन्ति सुहृद्भिः, केचिच्च हसन्ति परिहासनिपुणैः सवयोभी रहसि। वर्षीयांसस्तु गलदश्रवो बद्धाञ्जलयो भक्तिगद्गद-स्वरेण सर्वदा 'मा! मा' इति, जगन्मातरमाह्वयन्ति। धन्यास्ते, धन्यास्तेषां सम्पदो, धन्यस्तेषां जीवितं, ये खल्विह सन्ततक्लेश-संकुले संसारे इत्थमुत्सवोत्सवेन कालमतिवाहयन्ति, अर्जयन्त्युभयलोकहित-साधनमक्षयं पुण्यराशिं, लभन्ते सागरान्तविस्तीर्णं शुभ्रं यशः, आनन्दयन्ति स्वजनान्, भोजयन्ति दरिद्रान्, तोषयन्ति प्रतिवेशिनः।

अहो अधन्या वयं ये खल्वेवंविधे महोत्सव-दिवसे जनसम्पर्करहिते मृगहिते घोरप्रचारे कान्तारे एकाकिनः स्वजनविरहिता भीतभीता निवसामः। क्वास्माकमाबाल्यमित्राणि, पुत्राः, दाराश्च। ध्रुवं ते एतावत्कालमस्मत्तो वार्तामपि नोपलभ्याशङ्किताऽस्मदमङ्गला महता दुःखेन समयमतिवाहयन्ति। विशेषतोऽद्य महोत्सवदिवसे समन्तात् सर्वान् निर्भरहर्षसागरनिमग्नान् प्रतिवेशिनः समवलोक्य स्मारं स्मारमस्माकं पूर्वाऽऽदरं, समनुभूय चास्मद्विरहजनित-वर्तमानानवच्छिन्न-क्लेशसन्ततिं न जानीमहे कथं भवन्ति, कीदृशी मवस्थामनुगच्छन्ति, किमध्यवस्यन्ति, कथं वर्तन्ते। निश्चितमद्य ते सायमस्मत्प्रत्यागमन मुत्प्रेक्षोत्प्रेक्ष्य मार्गविनिहितेक्षणा बहुविधाशा-पूरितहृदयाः कथमपि सान्त्वमवस्थिताः। अथ क्रमेण समयमतिक्रान्तमवलोक्य सहसा नैराश्यपरीतहृदया दश दिशः शून्याः समुद्वीक्ष्य प्रपेदिरे खल्वतिविषमामवस्थाम्। कस्तानुपसान्त्वयति, कस्तान् प्रबोधयति, कस्तानाश्वासयति, कस्तेभ्य आश्रयं वितरति, कस्तेषां शरणं भवतीति नावगच्छामः।

इत्थं बहुविधाभिरन्तश्चिन्ताभिरवसन्नानां दिवसं परिभ्राम्य सुभृशं परिश्रान्तानां शिथिलितसन्धिबन्धानामस्माकं शोच्यां दशां विलोक्य दयमानेव भगवती निद्रा समुपाजगाम, तयाऽपहृतसंज्ञाश्च विस्मृत्य सर्वं चिरं प्रसुप्ता अभूम।

अथ निशावसानमावेदयन्तश्चरणायुधा उच्चैर्विरौतुमारेभिरे, प्रववौ च मन्दं मन्दं प्रबोधयन्निवारण्यचरान् सर्वान् प्राभातिकः शीतलो मातरिश्वा; तेन च प्रबुद्धाः सर्वे विहङ्गमाः स्व-स्वकुलायावस्थिता एव स्व-स्वजातिसमुचितानारवान् कर्तुं प्रवृत्ता अभवन्, समन्तादुपजायमानेन चानेन पतत्रिकुल-कलरवेण जजागरुः सर्वे वनचराः पशवः, प्रबोधं प्राप्ताश्च ते तारस्वरेण विरावं कृत्वा प्रत्युज्जगृहुरिमां प्रभात-सन्ध्याम्। अथ प्रातरभिषेककालात्यय-भीता इव सत्वरं मानससरोऽभिमुखं प्रतस्थिरे ससाध्वीकाः सप्तर्षयः, क्रमेण च गगनमार्ग-नैश-प्रदीपा इव एकैकशो निर्वाणमुपगतास्तारकाः। समुदियाय च मूर्तिमती प्रातःसन्ध्याधिदेवतेव रक्ताङ्गी, रक्ताम्बरा शिशिरबिन्दु-स्थूल-मुक्ता-फलहारिणी, जनानां प्रबोधमादधाना वासवाशामुखे भगवत्युषादेवी।

अथ तां सर्वमङ्गलैकनिलयां समालोक्य सर्वे जलचराः स्थल-चराश्च पतत्रिणो युगपदेकतानतामिवाधिगतेन मधुरस्वरेण तदागमन-मङ्गलसङ्गीतकमिवारब्धवन्तः। तद्दर्शन-भीत-भीता इव निशाचराः दुष्टसत्त्वाः हिंसाप्रायव्यापाराद्विरम्य गिरिगुहाप्रमुखानि निभृतस्थानानि भेजुः; तत उषा अप्यचिरभावि-सूर्योदयमुत्प्रेक्ष्य कुलकामिनीव सस-म्भ्रममन्तर्हिता बभूव। अथ निर्भराक्रान्तजगन्मण्डल-प्रबलभीतिस्था-नमन्धकारकुलं समूलमुन्मूलयिष्यन् क्रोधादिवारुणेक्षण उदयाचलशिखर-

माशिश्रियाय भगवान् सप्तसप्तिः। तन्तथाविधमुद्यन्तमवलोक्यान्धकाराः सहसोन्मुच्य सर्वं जगदेकपद एव पलायनश्चक्रुः। अन्धकारोन्मुक्तं गगनतलं, क्षितितलं दिङ्मण्डलं च सर्वतः प्रसन्नं बभूव।

बालातपरक्ताम्बरा पर्यन्तपर्यस्तान्धकार-चिकुरा सर्वतस्तुहिनजलवर्षिणी कृतप्रातःस्नानेव प्रातःसन्ध्या दिवसकरमुपतिष्ठते स्म। रविकरस्पर्श-हर्षोत्फुल्ल-वदनकमला कमलिनी चिरविरहानन्तरं प्राप्त-प्रियतम-समागमा कुलकामिनीव नितरां शुशुभे। तां तथा प्रफुल्ल-मुखीं विलोक्य ईर्ष्या-द्वेष-परायणा प्रतिवेशिनीव म्लानतामुपगता कुमुदिनी। सम्पत्समय-बन्धुवर्ग इव भ्रमरौघः कुमुदिनीं हीनदशामुद्वीक्ष्य नवप्रस्फुटितां पद्मिनीमनुससार, जगौ च गुन्गुन्-रवेण तस्या दयादाक्षिण्याद्यशेषगुणान्। तुषारकण-जडतनुः समीरणश्चाचिरप्रफुल्लकमलिनीसौरभ-भार-मन्थर इव मन्दं मन्दं बभ्राम। यथाविध-धीर-सुरभिसमीर-स्पर्श-सुखमनुभूय विस्मृताशेष-विरहक्लेशं झटिति समगच्छत चक्रवाक-मिथुनम्। पक्षिणः पशवश्च स्वस्ववासस्थानानि परिहायाऽऽहारान्वेषणाय नानादिग्देशानभिजग्मुः। तेषां प्रस्थान-समयोद्गीर्ण-नैसर्गिकारवजनितकोलाहलेन पुनरेव सम्पूरितं तदरण्यस्थलं शब्दमयमिव व्यभाव्यत; स्मारयामास चास्मान् प्रातस्ताड्यमानानेक-वाद्य-भाण्डानि प्रतिमार्चन-भवनानि। अथ बालातपमण्डलं गगनमण्डलेऽचिरहतान्धकाररुधिरप्रभां, पर्वताग्रेषु हेमसारूप्यं, वृक्षाग्रेषु रक्तकुसुमापीडलीलां, कुसुमितलतासु प्रफुल्लपद्मिनीवनेषु च स्मितौपम्यं, दिग्वधूषु रक्तांशुकविभ्रमं विदधत् क्रमेण पृथिवीं व्यानशे।

वयमपि सुचिरं सुप्तोत्थिता यावदुत्क्षिप्य चक्षुषी इतस्ततोऽवलो-

कथामस्तावस्तत्र महारण्यप्रदेशे पूर्ववदेव तथाविधपशुसमाजमेकाग्रचेतसा पशुराजस्याविश्रान्तमधुधारावर्षिवचनविन्यासाकर्णनपरं दृष्टवन्तः। दृष्ट्वा च शौचादिकान्यावश्यकानि प्रातःकृत्यानि समाप्योपयुज्य च फलमूलानि यथालब्धं पुनरेव त्वरितगतयस्तत्र सङ्गता अभूम। मनस्यकुर्म च अहो निद्रया दिवसचतुष्टयमविदितमेव व्यतीतम्। अहो दयाप्रकारो दयामय्याः, सा खलु दिनान्येतान्यस्मत्स्वदेशस्थभ्रातृपरम्परास्वानन्दमयरूपिणी विरेजेऽस्मासु पुनर्निद्रारूपिणी। यदि सा कृपया नैवमविधास्यत तदाऽतीव शोच्याभविष्यद्दशास्माकमिति चिन्तयन्त एव समवेतपशुसमाज-पार्श्वस्थितमहाप्लक्षान्तरितदेहाः समाकर्णितवन्तो मृगाधिपस्यानर्गलवाक्प्रवाहम्।

सिंह उवाच – अहं प्रतिवर्षं जगन्मातुश्चरणसेवार्थं शरदि वसन्ते च सार्धदिनत्रयं भारते धनशालिनां मध्यवित्तानां च मनुष्याणां गृहेष्वधिष्ठाय तत्र तत्र महोत्सवसन्दर्शनार्थमुपागतानामनेकप्रकाराणां भारतीयमनुष्याणामवस्थां, प्रकृतिं, व्यवहारान्, शीलं, चरितानि च तत्त्वतः प्रत्यक्षीकरोमि, शृणोमि च तेषां परस्परमालापपरम्परया यूरोपादिप्रभवाणामपि सभ्यताचरमावधिमधिगतानां मनुजानां प्रकृत्यवस्थां चरितादीनि च, इत्थं मे सर्वेभ्य एवात्रभवद्भ्यः श्रीमद्भ्यो मानवचरितादिषु सम्यगभिज्ञत्वमुत्पन्नं मतश्च मद्वचनं भवद्भिरविकल्पं प्रमाणीकरणीयम्। मानवा हि मे निखिलप्राणिवर्गेषु निकृष्टतमा प्रतिमान्ति। तेषां कामादयश्च वृत्तयः प्रत्येकं प्रबलतरा एवास्मद्भ्य इति पूर्वं सुस्पष्टमाख्यातं मया। तेषामपरे च मदमोहादयः शरीरजा रिपवः प्रबलतराः सन्ति, येषां गन्धोऽपि नास्मासु विद्यते। यथा कामादिभिरनिशं पीड्यमाना मनुष्याः प्रत्यहमवसादं प्रा-

व्य निरयाभिमुखमग्रेसरा भवन्ति, तथा मदादिभिरपि भृशमभिबाधिताः क्लिश्यमाना रौरवफलानि महान्ति पातकानि सगौरवमनुतिष्ठन्ति। मदो नाम कश्चिदलीकात्मोत्कर्षविधायकान्तरीण-वृत्तिविशेषः। तस्य गर्वाहङ्कार-दर्प-प्रभृतयोऽनेकविधाः परिवाराः, यैरधिकृताः खलु मानवा आत्मानमितरेभ्यो रूपवत्तया, गुणवत्तया, विद्यावत्तया, बुद्धिमत्तया, शौर्यवत्तया, वीर्यवत्तया, सारवत्तया च किं बहुना सर्व्वसद्गुणशालितयैव श्रेष्ठतमं मन्यमानाः सर्वदा विकटहुङ्कारेण गगनदिगन्तरालमापूर्य सावलेपं सावष्टम्भं साटोपञ्च परिक्रामन्तः केवलमात्मकार्यसाधनतत्पराः परानुत्पीडयन्ति। न ते गुरूपदेशानाकर्णयन्ति। न सुहृदुपदेशं गृह्णन्ति। किन्तु यदेव स्वयं साध्वभिजानन्ति, तदेवानुतिष्ठन्ति। एते खलु निजप्रज्ञया सुरगुरुमप्युपहसन्ति, अवजानन्ति च पितृप्रभृतिस्वकीयगुरुजनान्। ते सर्वेषु शास्त्रेषु, सर्वासु कलासु, निखिलेषु लोकव्यवहारेषु चात्मनामसाधारणनैपुण्यं मन्यन्ते। प्रदर्शयन्ति च सर्वत्रैवात्मनां नैपुण्यविशेषं, किं बहुना ते आत्मनां सर्वस्मादेव जगतः किमप्युत्कर्षं विभाव्य स्वान् किमपि लोकोत्तरान् देवांशसम्भूतान् साक्षाज्जगदीश्वरस्य वा पूर्णावतारानवधार्य निखिलमेव विश्वं तृणाय मन्यन्ते; सर्वस्योपरि सावज्ञामुपहासमिश्रामरुन्तुदां तीव्राञ्च दृष्टिं निक्षिप्य संकुचितेनाक्ष्णाऽवलोकयन्ति, न केनापि स्वयमालपन्ति। पृष्टाः प्रतिवचनदानमपि अनुग्रहं गणयन्ति, ततश्च न सर्वेभ्यः प्रतिवचनं ददति, यं भृशमनुग्राह्यं मन्यन्ते तस्मा एव प्रतिवदन्ति। न बिभ्यति ते सुनिश्चितप्रतिश्रुतभङ्गान् न वा लज्जन्ते परप्रतारणकौलीन्यात्, इत्थं मदान्विता उन्मत्ता इव, प्रमत्ता इव मत्तमातङ्गा इव चोद्धतमुच्छृङ्खलञ्च परिभ्रम्य समाकुल-

यन्ति समन्तात् सर्वं भूमण्डलं, स्वयमपि च सर्वदाऽलीकपरापमानशङ्कया भृशमाकुलीभवन्ति। अहो धन्या वयं यतोऽस्मासु तथाविधस्य श्वपाकस्पर्शवदुद्वेगकरस्य मदस्य लेशमात्रमपि न विद्यते। धन्यश्च परमेश्वरो येन तथाविधस्यातिमहतो वैरिणोऽस्मद्धृदयेऽङ्कुरमात्रमपि नारोपितम्। न वयं मनुष्या इव कदाचिन्मदगर्वाऽहङ्कारदर्पभूयिष्ठाः स्वानेव बहु मन्यामहे, न परानवजानीमो वयं सर्वमेव समचक्षुषा पश्यामो न च तारतम्यप्रदर्शनेन कस्यापि मनःपीडामुत्पादयामः। मनुष्यास्त्वहङ्कारवशेन यत्र यत्र यथा यथा स्वत्वमुपचीयते, तत्र तत्र तथा तथैवादरं प्रदर्शयन्ति, एवं यत्र यत्र यथा यथा स्वत्वं परिहीयते तत्र तत्र तथा तथैवानादरम्। पीड्यन्ते च ते नित्यमेव स्वाभिभवशङ्काप्रभवेण विविधेनाधिना, पीडयन्ति च स्वोत्कर्षमात्रप्रदर्शनाय विनाप्यपराधमपरान्, विशेषतः स्वापेक्षया दुर्बलान् जीवान्। ततश्च मनुष्याणामहङ्कारः स्वेषां परेषाञ्च दुःखोत्पादनहेतुर्महाननर्थकरः। अत एव साधूक्तं केनापि—"नाहङ्कारात्परो रिपुः"। सन्ति च—

"अहङ्कारवशादापदहङ्काराद्दुराधयः।
अहङ्कारवशादीहा त्वहङ्कारोऽयमामयः॥
अहंबुद्ध्येव मोहिन्या योजयित्वा वृतेर्बलात्,
विक्षेपशक्तिः पुरुषं विक्षेपयति तद्गुणैः॥"

यावत्स्यात्स्वस्य सम्बन्धो ऽहङ्कारेण दुरात्मना।
तावन्न लेशमात्रापि, मुक्तिवार्ता विचक्षणाः॥"

इत्याद्यनेकानि वचनानि तेषां शास्त्रनिबन्धेषु, परं कस्तान्या-

कर्णयति ! किञ्चाहङ्कारस्य कामाद्यपररिपूत्पादकत्वमपि केनचित्सुबु-द्धिना मनुजेनैव समुद्भावितं ; तथाहि—

"कामः क्रोधस्तथा लोभो मदो मात्सर्यमेव च ।
मोहश्चेत्यरिषड्वर्गमहंकारगतं विदुः ॥"

एवं मोहमात्सर्यावपि द्वावपरौ स्तस्तथाभ्यन्तरीणरिपू मनुष्याणाम् । तत्र प्रथमो मोहो नाम पशुजातिष्वपि दृश्यते, किन्तु नासौ तासु मनुष्येष्विव सुदृढबद्धमूलः, स्थायिभावमापन्नः । मोहोऽयमनात्मीयेष्वात्मीयबुद्ध्युत्पादकमज्ञानमविद्यामायेत्यादिनामभिरभिधीयते । अनेनैव मोहेनाक्रान्तहृदयाः सर्व एव जन्तवोऽनात्मीयेषु पुत्रदारेषु आत्मीयबुद्धिमारोप्य क्लेशमाजः क्रियन्ते, मोह्यन्ते चापातरम्यैर्भोग्यवस्तुभिः । परमसावितरजन्तून् प्रति न चिरं प्रभुतां कर्त्तुं शक्नोति, ततश्चास्माकं मोहः क्षणिक एव । अत एव वयं नापत्येषु वा दारेषु वा चिरं स्निह्यामः । अपत्यानां स्वभरणशक्त्युद्गमपर्य्यन्तमेवास्माकं पुत्रदारसम्बन्धस्तद्गतस्नेहश्च । अथ तेषु स्वभरणक्षमेषु सत्सु परस्परं न कोऽपि सम्बन्धो विद्यते । एकया दिशा पिता प्रयाति, अन्यया माता, अपरया चापत्यानि । विशेषतः परभृतप्रभृतीनां कतिपयानां तिरश्चामपत्य-स्नेहस्य गन्धोऽपि न दृश्यते । ते खलु स्वापत्यानां स्वपोषण-शक्त्युदयात् प्रागपरैः काक-प्रभृतिभिः स्वान्यपत्यानि परिपोषयन्ति, ततस्ते नापत्यस्नेहजन्यं क्लेशलेशमप्यनुभवन्ति ।

इत्थं सर्वतः समालोच्यमानेषु मानव-पाशवचरितेषु पशूनामेव श्रेष्ठत्वं किल सुस्पष्टं प्रतिपादितमपत्यपरिपोषणव्यापारे पशूननुकर्तुमिच्छुभिः सभ्यतमसमुन्नतमनुजपोतैः प्राप्तवयस्कानां पुत्राणां सम्प-

र्कपरित्यागिभिः साम्प्रतम्। न तेषु पितरौ प्रवयसः पुत्रस्य पुत्राश्च जराजीर्णयोर्वार्द्धक्यपरीतयोः पित्रोः संवादं गृह्णन्ति। तथाकथित-सभ्यताप्रभावेणैव ते महतामियत्तया परिच्छेत्तुमशक्यानां क्लेशराशी-नामास्पदान्यभवन्।

इयं हि सभ्यता महामोहमयी पिशाचीव ज्योत्स्नाप्रायं कपटप्रकाश-मयस्वरूपं प्रकाश्य स्वभावतो दुर्ब्बलहृदयान् मनुजान् स्वाभिमुखमाकृ-ष्य, सर्वथा स्ववशमानीय च पश्चाद् दुस्तरेऽविरलक्लेशसङ्कुले मोहगर्ते निपातयति, ततस्तेऽपथं सुपथमिव मन्यमानास्तेनैव प्रयान्ति, धर्ममिति कृत्वाऽधर्मं सेवन्ते, न्यायबुद्ध्या ऽन्यायमाचरन्ति, गृह्णन्ति च नैष्ठुर्यं कृपास्वरूपेण, वैरं स्नेहरूपेण, परद्रोहमुपकाररूपेण, पापानि च पुण्यरूपेण। प्रवर्धते तेषां सर्वविधबाह्याडम्बराकांक्षा, अपगच्छति सन्तोषः, उत्पद्यन्ते चासन्तोषेण सह नानाक्लेशमूला अभावाः, येषां पूरणार्थं ते सर्वदैव प्रयतन्ते, परं छिद्रघटा इव न पूर्यन्ते।

मम हि महामायाप्रसादान्मनुष्याणां सर्वास्वेवासभ्याद्ध सभ्य-सभ्य-सभ्यतर-सभ्यतमावस्थास्वभिज्ञानं वर्तते। ततश्च विज्ञातं मया सभ्य-तैव तेषां यावदनर्थानां मूलम्। तैरियं परमोन्नतिरूपेण विभावितापि घोराधःपातहेतुस्तेषामिति। यथा यथेयं लब्धप्रसरा भवति, तथा तथैव यानासन-वसनभूषण-वासभवनादीनां वृथाडम्बरो वर्धते, वर्धते च तत्त-दभिलषित-यानासनादिसम्पादनार्थमर्थस्यावश्यकता। विवर्धयति सा पुनर्महीयसीमर्थार्ज्जनपिपासाम्। तया पुनरुत्पाद्यते तेषां परस्परं जिगीषा। यया खल्वात्मोदयः, पर-ग्लानिरितीयत्येव प्रवर्तते नीतिस्तेषु। यामुपजीव्य प्रवर्तन्तेऽनन्तशाखानि नीतिशास्त्राणि।

परमकारुणिकेन परमेश्वरेण यथा सूर्यालोके, विमलज्योत्स्नायां, मृदु-मन्द-सञ्चारिणि सुरभिपवमाने, शीतस्वच्छनिर्झरवारिणि च स्वसृष्टानां यावतामेव प्राणिनां तुल्य एवोपभोगाधिकारः प्रदत्तस्तथा विविधफलमूलपूर्णायां वसुन्धरायामपि। स्थितवन्तश्च ते, वयं च सुचिरं संश्लिष्टाः सोदरा इव परस्परं सद्भावं प्रदर्शयन्तः। अथ ते, न जाने, केन हेतुना, सहसैव स्वेषां बुद्ध्युत्कर्षं निश्चित्य, बहवः सम्भूय च न केवलमस्मत्तः पृथग्भूताः किन्तु यदा यदाऽस्मान् पूर्वविश्वासेनैकाकिनः संचरतो हीनपक्षानवलोकितवन्तस्तदा तदाऽस्मानुपमृद्यास्मदधिकारमाच्छिद्य चात्मसादकार्षुः। अथास्मासु तेषां तथाविधं प्रकृतिविपर्ययमालोक्य तादृशासत्संसर्गपरिजिहीर्षयैव दूरमपसृतेषु, तेऽन्योन्यमात्मानमन्यविलक्षणं मन्वानाः स्वस्वोत्कर्षमभिरक्षितुमीप्सवः, परस्परं स्पर्द्धितुमारेभिरे। ततश्चान्योऽन्यसंघर्षे तेषां बलवद्भिर्दुर्बलानामधिकाराः क्रमेण कवलिता अभवन्, ते च बलवत्तराः सञ्जाताः। ततश्चैते विजितेभ्य आत्मनां सर्वथा वैशिष्ट्यं प्रदर्शयितुं यानासनादीनामपि वैशिष्ट्यं चक्रुः। इत्थं परविमर्दनेन स्वोत्कर्षस्थापनप्रवृत्तिरेव महेच्छोन्नतेच्छादिभिराख्याप्यते चाख्याभिः। तथाविधप्रवृत्तिशालिनश्च महाशयाः, महात्मानः, सभ्याश्च कथ्यन्ते। ततश्च यत्र यत्रैव विमर्दातिशयस्तत्र तत्रैव सभ्यताधिक्यम्। यत्र च जना निरन्तरं परस्परं विजेतुं स्पर्धन्ते यतन्ते च सर्वात्मना सर्वोपायेन सर्वेभ्य आत्मन उत्कर्षं संस्थापयितुं, पीडयन्ति दुर्बलान्, वञ्चयन्ति मुग्धान्, निपातयन्ति स्वोन्नतिप्रतिबन्धकान्, सेवन्ते चेश्वरान्, सन्तोषयन्ति धनिनां मनांसि, बहिः समाचरन्ति बकव्रतं, गूढमाश्रन्ति द्विजिह्वतां, न दयन्ते, न स्निह्यन्ति, नो-

पकुर्वन्ति, न सम्मानयन्ति च, न बिभ्यत्यधर्मान्, न लज्जन्ते लोकापवादान्, नाशङ्कन्ते मिथ्याकथनान्, नापत्रपन्ते दुराचारान्, न विरमन्ति परपीडनान्, न निवर्तन्ते पैशुन्यान्, न त्रस्यन्ति परस्वापहरणान्, नार्द्रीभवन्ति परक्लेशदर्शनान्, न गणयन्ति मैत्रीम्, नालोकयन्ति समाजम्, नापेक्षन्ते बन्धून्, न जानन्ति संस्तुतान्, न स्मरन्ति पूर्वोपकारम्, न शृण्वन्ति गुरुजनवचनानि, नाद्रियन्ते साधून्, चेष्टन्ते च केवलं स्वार्थसाधनाय, स एव सभ्यतमो देशः। सभ्यतमा हि जनाः सुपक्वबिम्बफलानीव बहिःशुभदर्शना अभ्यन्तरत्यन्तमलशालिनो भवन्ति, ते बहिर्बहुसुखभोक्तृतया प्रतीयमाना अप्यनुभवन्त्यन्तरविच्छिन्नक्लेशधाराम्। ततश्च सुचारुसौधान्तर्गतसुरम्यकक्षमध्ये दुग्धफेननिभकोमलधवले शयनतले शयाना अपि, निरन्तरं मृदुमृद्वान्दोलितैः सचन्दनोशीरार्द्रव्यजनैर्वीज्यमाना अपि, सततं युवतिजनकोमलकरतलेन कृतशरीरसंवाहना अपि न निद्रान्ति, सर्वदा शिरःपीडया पीड्यन्ते च। किञ्च सत्यपि बहुविधसुरभिकुसुमप्रकरोपशोभितरमणीयोद्याने, रूपलावण्यवति चावरोधजने, न विहारसुखमनुभवितुं समर्था भवन्ति, तथा सत्स्वपि विविधरसमधुरानेकविधचर्व्य-चोष्य-लेह्य-पेय-भूयिष्ठेषु, भोज्यद्रव्येषु, करतलगतेषु, अजीर्णाक्षुधादिरोगबाधिता न वा यथेष्टं भोक्तुम्। तत एवानुभवन्तीव ते प्रत्यहं प्रतिक्षणं स्वयमनुष्ठीयमानानां निरपराधविश्वस्तजनमर्दनमहापातकानां समुचितफलान्येव। न ते क्षणमपि विश्रामसुखं लभन्ते, अथवा विश्रामाभावो हि तेषां महत्त्वस्य महोन्नतेश्च मुख्यं चिह्नम्, येन ते ऽसत्यपि सामर्थ्ये युगपदेव बहुषु दुष्करव्यापारेषु प्रवर्तमाना अनवरतं सत्त्वाधिकं परिश्रमं कुर्वन्तः क्रमेण

क्षीयमाणशरीरधातवोऽकालं कालकवलं प्रविशन्ति। अत एव मनुष्याणां प्रासादहर्म्यादिनिर्माणमहार्घपरिच्छदादीनन्तःसारशून्यान् बाह्याडम्बरानवलोक्यास्माभिर्न स्वल्पापोर्ष्याऽभ्यसूया वा कर्त्तव्या, नापि तत्र प्रार्थना; प्रत्युतैवंविधायाः सभ्यताया न काप्यस्मास्वाविर्भावो भूयादित्येव कृताञ्जलि परमेशः प्रार्थयितव्यः।

पश्यतान्तरमुभयेषां, ते सुदृढनिर्मितसुसज्जितहर्म्यतलेऽपि साशङ्कं निवसन्ति, वयमनावृततरुतले, काननाभ्यन्तरे गिरिगह्वरे वा निःशङ्कं निवसामः। पर्यङ्कोपरि दुग्धफेनधवले शयनीये शयानानामपि तेषां न क्षणमपि निद्रासुखं जायते, वयन्तु लोष्ट-धूलिनिचिते कर्कशभूमितल एव सुचिरं गाढनिद्रामनुभवामः। बहुविधेष्टभोज्य-पानास्वादनेनापि न ते तृप्तिं प्राप्नुवन्ति, अस्माकं तु यथाकालं यत्किञ्चिद्भोजनेनैव तृप्तिरुपजायते। ते खलु कल्पितविपत्पाताद्यनर्थवारणायार्थानर्ज्जयन्ति। परन्त एवार्थाः प्रतिपदमनर्थं सङ्घटयन्ति। यतोऽर्थानामर्जनं तावद्दुष्करं ततोऽप्यर्जितानां संवर्धनम्, वर्धितानाञ्च रक्षणमतीव दुःखप्रदमेव। विशेषतः सभ्यतोन्नत्या सहार्थापहरणाशङ्का प्रतिपदं प्रवर्धते; सभ्यदेशेषु मध्याह्नसमये जाग्रत्स्वपि नगरवासिषु सततं जनाकीर्णेष्वपि राजमार्गेष्वविरलं नगररक्षणाय प्रचरत्स्वपि रक्षिवर्गेषु निःशङ्कं निर्बाधञ्च चौर्यमनुष्ठीयते। पश्यतामेव जनानामर्था अपह्रियन्ते सभ्यनगरेषु। अपि च यदि केचित्स्वयं यावज्जीवमशेषक्लेशपरम्परां सहित्वा, कृत्वा चाकार्यसहस्राणि, किञ्चिद् धनं सञ्चेतुं समर्था भवेयुस्तत्पुत्राः पौत्रा वा तत्सर्वं कतिपयैरेव दिवसैः क्षपयित्वा पुनरेव कष्टां दशां प्राप्नुवन्ति। किञ्च यदा निय-

तिवशादप्रतिविधेया विपद आपतन्ति, तदा न किमपि कर्तुमलमर्थ-कल्यवर्त्ताः, ते खल्वग्रत एवान्तर्हिता भवन्ति। तथाहि—

"प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि।"

अत एवार्थार्ज्जनान्निवृत्ता वयं; यतः शरीरे पङ्कमुपलिप्य प्रक्षालनाद् दूरतस्तत्परीहार एव श्रेयान्। मनुष्या विद्याभ्यासेन ज्ञानिनो भवन्तीति तु न मन्तव्यम्, तेषां विद्यालयास्तु केवलमविद्याविलसितानां वादिनां परस्परमतखण्डनमण्डनपराणां कूटतर्काणामभ्यासायैव प्रतिष्ठापिताः। ततस्तेषां विद्याभ्यासः केवलं पराभिसन्धानाय कल्पते।

किम्ब्रवीमि, तेषां पण्डितम्मन्यैरासृष्टेरद्याप्यविश्रामं प्रयतमानैरपि न क्षित्यादीनां स्थूलभूतानां तत्त्वं निरूपितं, केवलं दुर्बोधवाग्जालं वितत्य बुद्धेर्भ्रान्तिभूयिष्ठं मालिन्यमेवोत्पादितम्। विद्याभ्यास-बलेन तैरिदानीं यल्लौहवर्त्मताडितवार्त्तावहाद्यापातविस्मयकरयन्त्रविशेषाणामाविष्कारः कृत इति चेदुच्यते। तथाविधाविष्कारः केवलमैहिक-कार्यसाधनसौकर्यमापादयति, ततश्च तत्र यथा श्रेयांसि तथा ऽश्रेयांस्यपि जायन्ते। परलोकस्त्वस्माकमिव तेषामन्धकारमय एव, न तत्र सभ्यतालोको मानवीयविद्यालोकश्च प्रवेष्टुं समर्थो बभूव। अत एव केनापि सत्यवादिनोक्तं—'धर्मस्य तत्त्वं निहितं गुहाया" मिति।

अथ तैर्या चिकित्सापद्धतिराष्कृता सा केवलमेषामकालमृत्युहेतुः। वन्या-वात्याधिदैविक-मृगयाद्याधिभौतिकोत्पातमन्तरा पशूनां प्रायेणा-कालमृत्युर्न दृश्यते। तथाविधोत्पातस्तु मानवेष्वपि प्रभवति। ततश्चोत्पा-तजन्याकालमृत्युः साधारण एव। ततस्तं वर्ज्जं चिकित्साहेतुकोऽकाल-

मृत्युरेवात्र विचार्यते। यतस्तथाविधो मृत्युस्तु मनुष्येष्वेव घटते, नेतरेषु जन्तुषु। तत्र केचिच्चिकित्सकभ्रमेण, केचिदयथौषधव्यवहारेण, केचिदधिकमात्रयौषधव्यवहारेणैवमाद्यनेकनिमित्तपरम्परया मनुजानां चिकित्साहेतुको ऽकालमृत्युर्जायते। किञ्चौषधानि क्वचिदेकविधस्य रोगस्य प्रतीकारं कृत्वापि स्वयमपरविधान् दुष्प्रतीकारान् रोगानुत्पादयन्ति, ततोऽप्यनेकेऽसमय एव काल-कवले निपतन्ति, केचिच्च यावज्जीवं मृता इव सर्वकर्माक्षमाः स्वजनानां भारभूतास्तिष्ठन्ति।

अत एवात्रभवद्भिर्भवद्भिर्यद्यन्मनुष्याणामुन्नमनकोटौ चिन्तितं तत् तत्सर्वं बहुदुःखप्रदं, तैः केवलमूर्णानाभै रानाय इवात्मविनाशायैवोद्भावितम्। मनुष्येषु द्विविधैवोन्नतेः पराकाष्ठा कल्पिता, केचिद् विषयवैराग्येण, समलोष्ट्रकाञ्चनज्ञानमेवोन्नतेः पराकाष्ठां मन्यन्ते, अपरे तु संसारिणः सांसारिकयावत्कार्येषु, जातिभेदादिकमविचार्य्यैव सर्वेषां स्त्रीपुंसानां तुल्याधिकारस्थापनमेवोन्नमनस्य चरमसीमानमागणयन्ति; उभयथैव वयमुन्नतेः पराकाष्ठामधिरूढा एव, तन्नास्ति किमप्यनुशोच्यमस्माकम्। समलोष्ट्रकाञ्चनज्ञानमस्माकं स्वतः सिद्धमेव। इदानीं सभ्यतमायां मार्किन-भूमौ राजतन्त्रता-विवाहबन्धनाद्यशेषक्लेशहेतुनियमान् समूलमुन्मूलय्य याभिनवस्वातन्त्र्यपद्धतिरुद्भाविता, सास्माकमनुकृतिरेव। मनुष्याः खलु बहुशः परीक्ष्यान्ततोऽस्मद्व्यवहाराणां सारवत्तां ज्ञातवन्त स्ततस्त्वस्माकमनुकर्तुमारेभिरे। यथा कदाचित् समुद्रमध्यगतप्रवहणकूपदण्डावलम्बिनः पक्षिणस्तं कूपदण्डं परित्यज्येतस्तत उड्डीयमाना अपरमाश्रयमपश्यन्तः पुनस्तमेवाश्रयन्ति, तथा मनुष्या अपि अस्मत्तः पृथग्भूता नानाविधामवस्थां प्राप्य कुत्रापि सुखमपश्यन्तः पुनरस्मदाचा-

रमनुवर्तन्ते। अपि च सभ्यतमा अप्युन्नमनस्य चरमसीमानमधिगता अपि मानवा न प्रकृतश्रेष्ठतां प्रापुः, येनाद्यापि ते स्ववाचकपदादुत्तरमस्माकं कतिपयेषां सिंह-व्याघ्र-कुञ्जरर्षभ-वृषभप्रभृतीनां नामानि संयोज्यात्मनः श्रेष्ठतां प्रकाशयन्ति, यथा Jhon Bull, रघुव्याघ्रः, मनुजर्षभ इत्यादि, तेषां वीराश्च सिंहेत्युपाधिलाभेनात्मनो गौरवोचितसम्मानलाभं मत्वा साग्रहं तमेवोपाधिं गृह्णन्ति। अन्यच्च तेषां चरित्रमपि न सम्यक् परिशुद्धं बालानामुपदेशक्षमं जातमतस्तेषां बालोपदेशनिबन्धेषु पशूनां काक-कपोतमूषिकमृगकच्छपादीनां क्षुद्रजन्तूनां, सिंहगजशार्दूलप्रमुखाणां महापशूनाञ्च चरितान्याश्रित्य बहुधा कथा रचिताः।

शारीरबलेऽपि मनुष्या अस्मत्तो निकृष्टा एव, यतस्तेषां वीरा अपि शस्त्रग्रहणमन्तरा नास्मत्सम्मुखमायातुमुत्सहन्ते, अस्माकं क्षुद्रतमा पिपीलिका अपि निरस्त्राः, निःशङ्कं तेषां गृहेषु विचरन्ति। नच मनुष्याणां शारीरिक-सौन्दर्यमप्यस्ति, ततश्च ते वस्त्रादिना स्वशरीरमाच्छादयन्ति। तेषां रूपोत्कर्षस्यापि वयमेवोपमानपदानि। प्राणिनां स्त्रीजातय एव सौन्दर्यस्याश्रयीभूताः। मानवीनान्तु या लोकोत्तर-लावण्यवत्यस्तासामपि नास्ति कश्चिदवयवो विशेष-सौन्दर्यप्रद्योतको यो नास्माकमवयव-विशेषैरुपमीयते। तथाहि—तासां केशकलापाश्चामरैर्मयूरपुच्छैश्च, चक्षुषी हरिणनेत्राभ्यां, नासा खगेन्द्रनासिकया, दन्ताः शुक्तिगर्भसम्भूतैर्मुक्ताफलैः, ग्रीवा कम्बुना, स्तनौ चक्रवाक-करिकुम्भाभ्यां, मध्यः केसरिमध्येन, ऊरुद्वयं करभशुण्डेन, गमनञ्च राजहंस-गज-गतिभ्यां, कण्ठस्वरश्च कोकिल-कलालापेनोपमीयते। पुरुषा अपि 'वृषकन्धाः', 'सिंहविक्रमा' इत्येवं विशेष्यन्ते।

किमधिकेन वागाडम्बरेण, अस्मासु ये जात्यधमा मर्कटास्तेभ्य एव मानवानामुत्पत्तिरिति तैरिदानीं मुक्तकण्ठं स्वीक्रियते !! ये खल्वेवंविधा नीचजातयस्तेषां कथयापि हृदयस्य क्षुद्रतोपजायते; तदस्त्वेतावतैव भवतां सन्तोषः ।

तथापि मद्वचनोपसंहृतौ वक्तव्यमेकमुत्प्रेक्षे । नास्ति खल्वस्माकं गम्यागम्यविचारः, नापि निर्दिष्टवासस्थानमिति भृशमुपहसन्ति मनुष्या अस्मान् । किन्तु भारतीय-स्मृतिनिबन्धेषु प्राचीनेष्वतिपातकानुपातकादिपापानामुत्कटप्रायश्चित्तविधीन् समीक्ष्य मनुष्याणामपि तत्तत्पापमूलीभूतकर्मसु प्रवृत्तिः स्वाभाविकीत्यनुमीयते, केवलं तथाविधोत्कटप्रायश्चित्तरूपदण्डविधानेन तस्या निरोधः कृत इत्यपि किं वक्तव्यम् ? अनिर्दिष्टवासस्थानत्वं पुनः समुन्नतसभ्यताया अङ्गीभूतमेव । यतः सभ्यजगत्सु बहूनां बहुपुरुषपर्य्यन्तं निर्दिष्टवासस्थानाभावो दृरीदृश्यते ।

इत्येवमुक्त्वा मृगेन्द्रः सभाभङ्गमकरोत् । पशवश्च सर्वे स्वस्वहृदयस्यानन्दं महता कलकलेन प्रकाश्य स्वस्वस्थानं प्रति प्रतस्थिरे । वयमपि द्रुतपदं स्वदेशमागत्य स्वजनैः सङ्गता अभूम ।

( समाप्तं महारण्यपर्य्यवेक्षणम् )



# प्राप्तपत्रम्

( महिला-महत्त्वम् )

एकमेवाद्वितीयम् । ओं तत्सत् ।

महात्मन् विद्योदय-सम्पादक !

अस्मद्देशीयसामयिकपत्रसम्पादकेष्वत्रभवन्तं भवन्तं लोकोत्तरधैर्य्यवन्तं सर्व्वथा निःस्वार्थञ्च सम्भावयामि। यत एतावन्तं दीर्घकालं वराटिकामात्र-लाभप्रत्याशामन्तरा प्राणान्तपरिश्रमसहकृतं वर्त्तमानसभ्यजनावज्ञातसंस्कृतभाषायां सामयिकपत्रसम्पादनं नाम, न केवलं भवतस्तादृग्धैर्य्यवत्तायाः प्रत्युत स्वार्थराहित्यस्य च सम्यक् परिचयं ददाति। मन्दोऽपि खलु जनः प्रयोजनमनुद्दिश्य न प्रवर्त्तते कस्मिन्नप्यनायाससाध्ये कर्म्मणि। भवांस्तु निष्प्रयोजनमेव बह्वायासेन विद्योदयं सम्पादयन् वृथैव क्षयं नीतवान् दुर्ल्लभं मनुष्यजन्म। यदीमं वन्ध्यपरिश्रमं परिहाय भवानियन्तं कालमुन्नतपदारूढानां महात्मनां चरणतलेषु तैलमर्द्दनमकरिष्यत्, तदा निःसन्देहं विपुलमैश्वर्य्यमैहिकसम्मानञ्चालप्स्यत। परन्तत्र किञ्चिद्बुद्धिकौशलमपेक्ष्यते, तत्तु भवतो लेशमात्रमपि नास्ति ; नास्ति किं भवतः सम्मार्ज्जनीप्रयोगकुशला मादृशी सुगृहिणी ? या सुशिक्षां दत्त्वा निवर्त्तयेद्भवन्तमेतस्मादसन्निर्ब्बन्धात् ; किम्भवतो हितकामी सुहृदपि कश्चिन्नास्ति ? यो भवन्तमेवमधःपतितमवलोक्य तूष्णीं तिष्ठति ! विद्योदयसम्पादनव्यतिकरान्नाम दूरेऽस्तु तावदर्थलाभवार्त्ता, नान्यदपि किञ्चित् प्रयोजनं सिध्यति। एवंविधस्य पत्रस्य पाठकारिणो-

ऽपि दुर्ल्लभा एव। ये खल्वत्र संस्कृतमात्राभिज्ञाः, नैसर्गिकविकत्थनतृणीकृतजगत्त्रयपाण्डित्यसारास्ते तु नास्योपरि भ्रमेणापि दृष्टित्रिभागं पातयन्ति। किं वा करिष्यन्त्यन्त्ये संस्कृतानभिज्ञास्तपस्विनः। ते हि वराकाः समुन्नतचेतसोऽपि बहुविधकुसंस्काररहिता अपि वंशपरम्परासमागतसंस्कारस्यानुच्छेद्यतया ह्यापातदर्शन-भीषण-देवनागराक्षरभिलिखितमेतन्न सहसाऽधःशौचे नियोक्तुमुत्सहन्ते, नाऽपि पादुकाच्छादनकर्म्मणि, ततश्च भवत्पत्रस्य न क्वाप्युपयोगं पश्यामि। अत एव भवत्परिश्रमोऽयं न स्वार्थसिद्धये, नापि परार्थसम्पत्तये, किन्त्वैकान्ततोऽर्थसम्पर्कविरहादरण्ये रुदितमिव, भस्मनि निहुतमिव सर्व्वथा निष्फल एव। एवं निष्फलारम्भायासिनं भवन्तमवलोक्य जाने, भवान्नूनमन्यस्मिन् जन्मनि कोऽपि कस्यापि कुलालपोतस्य प्रियसहायः पञ्चमान्यथासिद्धानामग्रिम एवासीत्। अथ सरस्वतीप्रतिमामृदाहरणात्, क्वापि पुण्यतीर्थे शरीरक्षयाद्वा साम्प्रतं मनुष्याकृतिं, किञ्चिद् विद्यावत्त्वञ्च प्राप। बुद्धिस्तु पूर्व्ववदेवास्ति, प्रकृतिरपि तथैवातिभारवाहिणी विद्यते!

उक्तञ्च—

"सती च योषित् प्रकृतिश्च निश्चला,
पुमांसमभ्येति भवान्तरेष्वपि।" इति

अन्यथा कथमस्मिन्नूनविंशशताब्द्यवसानसमये सर्व्वतः स्वार्थसाधनपरेषु, मानवकुलेषु भवानेक एव निःस्वार्थभारवहनव्यसनी संवृत्तः! किञ्च प्राक्तनसंस्कारवशाद्वा, दुर्ल्लङ्घ्यनियतिनियमप्राधान्याद्वा भवन्तमेवं निरर्थगुरुभारहारिणं निरीहञ्चावलोक्य शङ्के, यदि कदाचिदेत-

दुर्गुणद्वयं नगरपरिषत्सभ्यमहोदयानां श्रवणगोचरं भवेत्तदा विषमा खल्वापतिष्यति दशा। नियतं ते स्वभावतो दुर्ग्रहाणां धर्म्मवृषभाणां ग्रहे प्रयत्नं परिहाय भवन्तमेव संगृह्णीयुः। न विमुञ्चेयुश्च जीविताऽवसानं यावत्। सर्व्वथा परमेशो मङ्गलं विदधातु। माभूद्भवतस्तथाविधो विषमो दशापरिणामोऽस्मिन् परिणते वयसि।

वस्तुतः शोच्योऽसि, कृपार्होसि त्वम्। किं करोमि, अखण्डनीया खलु ललाटलिपिः। तथापि महिलाजनस्वभावसुलभकृपापरवशाऽहं तव लेखभारस्यांशतो लघूचिकीर्षुः पत्रमिदं प्रेषयामि—(पत्रप्रेषणपाटवमेवास्माकीनोन्नतशिक्षालाभफलम्)–आशासे च भवान् धन्यम्मन्यः परमाग्रहेण प्रकाशं नेष्यतीदम्। विदितमेव भवता संस्कृताभिज्ञाः किल न कथमप्यन्यतः स्वलेखस्य शुद्धिं सहन्ते; अहं संस्कृतविदुषी, तद्भवान् मास्य शुद्धौ यत्नं कार्षीत्। करिष्यति चेदापतिष्यति नूनं पूर्वोक्तो विषमो दशापरिणामः।

अयि भो नवदूर्व्वादलप्रियातिथे, नररासभ, लम्बकर्ण, लम्बोदरकुलभूषण विद्योदयसम्पादक! अपि जानाति भवान् भारतीयमहिलानामुत्पत्तौ किम्बीजमिति। किमेषा पुराणप्रजापतिसृष्टिः? उत कस्यापि सर्वथा निर्दयहृदयस्याजन्मब्रह्मचर्य्यपरिचर्य्यया स्त्रीद्वेषिणोऽभिनवस्य हतविधातुः सिसृक्षाकण्डूतिविनोदनप्रकारोऽयम्? किंवा जन्मान्तरसहस्राचरितागणितमहापातकानामेकीभूतः परिणामः? किमेतत् प्राक्तनं कर्म्म? उत वा नियतेर्विलसनं? अथोपादानमाहात्म्यं? आहोस्विद्वीजाङ्कुरन्यायानुसृतिरियं? किंस्विद्भवितव्यतैवेदृशी?

नाऽहं वैदिकसमग्राचारेषु विदितभूयिष्ठाऽस्मि, न जाने तत्त्वतो-

गार्ग्यात्रेयी-लोमशा-प्रमुखाणां ललनाकुलललामानां चरित्रचेष्टितानि, नापि श्रद्धे पुराणकथाः। ततश्च स्मार्त्तसमयानधिकृत्यैवोच्यते मया। वैदिकसमये भारते खलु स्वभावमुग्धानां कृषीवलानामधिकारः श्रूयते, ततस्तं परिहरामि। यत्र समये धर्म्मबुद्धिः प्रथममाविर्भूता, धर्म्मशास्त्रस्योदयोजातस्तत एवारभ्य स्त्रीणामशेषदुःखबीजान्यारोपितानि, यानीदानीं फलपुष्पसङ्कुलविषमविषमयारण्यरूपेण परिणतानि।

अहो चित्रमेतत्! अन्यत्र किल देशेषु प्रथमावस्थायामेवाबलानां दुर्गतिः श्रूयते। अथ यथा यथा धर्म्मबुद्धेराविर्भावः सभ्यताया विस्तृतिश्च, तथा तथैव स्त्रीणामप्युन्नतिर्जाता। भारते तु सर्वथा तद्वैपरीत्यमिति। यतोऽत्र स्मार्त्तसमयादारभ्यैव स्त्रीणां चरणौ सुदृढं नियन्त्रितौ। खिलीभूताश्च चिराय तासां समुन्नतेः पन्थानः, सन्निरुद्धश्चाशेषतः श्रेयसां मार्गः, संरोपितमवरोधबन्धनस्य मूलं, निक्षिप्तश्चासामुपरि सुदुःसहपुरुषाधिपत्यक्लेशप्रवाहः। किम्बहुनोक्तेन, तस्मादारभ्यैव तासु संस्थापिताऽशेषविधक्लेशोपभोगभित्तिः। मूढाः खलु यवनानामुपरि समारोपयन्ति सर्व्वविधान् दोषान्। न ते सर्व्वथा निर्द्दोषा इति ब्रवीमि। किन्तु भारतीयस्त्रीणां भाग्यविपर्य्ययस्तु तदधिकागतः पूर्व्वमेव सङ्घटित इत्येव मद्वचनाभिप्रायः। दृश्यन्तान्तावद् धर्म्मप्रवक्तॄणां प्रथमस्य महर्षेर्मनोर्वचनानि—"न स्त्री स्वातन्त्र्यमर्हतीत्यादीनि"। तस्य खलु महानुभावस्य न केवलं स्त्रीणां स्वातन्त्र्यमवहृत्य परितोषोऽभवत्, किन्त्वाजीवनावसानं तेन तासामुपरि सर्व्वास्वेवावस्थासु पुरुषाणां शासनमारोपितम्। विचार्य्यतां तावद्यदि नाम सज्जनगोष्ठीषु, सङ्गीतसमाजेषु, यात्रासूत्सवेष्वपरविधेषु च। सङ्घेषु

स्त्रीणां स्वच्छन्दसञ्चरणं न स्यात्, तदा कथमासां शिक्षा सम्पूर्णतामियात्, सम्भवेद्वा मनसश्चतुरस्रो विकासः! जायेत वा बहुदर्शित्वं! उत्पद्येत वा सदसद्विवेकशक्तिः? विशेषतश्चाबाल्यान्मरणावधि तासु निर्दयपुरुषाधिपत्यस्थापनात् सुलभीकृतस्तासामन्धतमसावगमहेतुरात्मघातः, समुन्मूलितश्च सर्व्वविषयकोत्साहः। यत्र धर्म्मशास्त्रस्यैवमधर्म्ममयी, विषमपक्षपातप्रवर्त्तिनी च व्यवस्था, तत्र का कथा स्वतोऽधर्म्मभूयिष्ठस्य नीतिशास्त्रस्य। समीक्ष्यतां तावन्नीतिशास्त्रप्रथमाचार्य्येणाऽऽचार्य्यकौटिल्येन यथोक्तम्—"विश्वासो नैव कर्त्तव्यः स्त्रीषु।" अहोऽतः परं किन्तु शोच्यतरं सम्भवति। याः संसारस्य मूलं, धर्म्माचरणस्य सहायाः, दयाया अवताराः, प्रेम्णः परमाधाराः, गृहस्थाश्रमस्य जीवनशक्तिस्वरूपाश्च, तासु यदि न विश्वासः कार्य्यः सदा साशङ्कं वर्त्तितव्यञ्च, तदा समुन्मूलिता शान्तिः, दूरमपसारितानि सुखानि, प्रवर्त्तिता समन्तान्महती विशृङ्खलता, समारोपितान्यमङ्गलबीजानि। या आदाय गृहस्थानां गृहस्थता, संसारिणां संसारः, कर्मिणां (कर्मठानां) कर्माणि, सर्वाणि च प्रवर्तन्ते गृहमेधिनां धर्म्माणि, जायते चानृण्यं नराणां, याश्चान्तरा न गृहस्थाश्रमः सम्भवति, न वंशस्थितिः प्रवर्त्तते, न कुलानि तिष्ठन्ति, न धर्म्मिणां धर्म्माचरणं सिध्यति, न नर्म्मप्रियाणां नर्म्मालापा उद्यत्पद्यन्ते, न धनिनां हर्म्यतलानि शोभन्ते, शून्यञ्च भवति जगदिदं जीर्णारण्यप्रायं, ता नाम यद्यविश्वास्याः, शत्रुवत् सर्व्वरहस्यमन्त्रणबाह्याः क्रियेरन्, तदा गतं गतं गार्हस्थ्यसौख्येन, अन्तर्हितं शान्त्या, तिरोहितमुद्वाहबन्धनेन, विलीनं दाम्पत्यप्रेम्णा, निलीनं विश्रामसुखेनापसृतमशनतृष्ण्या, पलायितं

सुखनिद्रया; गृहञ्च यथारण्यं सञ्जातम्। प्रादुर्भूतं भृशं चिन्तया, उद्भूतमनिशं शङ्कया, प्रवृत्तं निरन्तरं कलहेन, निवृत्तं सद्यः समुत्साहेन, निःसृतं ससम्भ्रमं दाक्षिण्येनावृतं हृदयमन्धकारेण, प्रसृतं समन्तात्तीव्रतरनिरययन्त्रणाभिः।

किञ्च—नयविदां नैतावतापि सन्तोषः। ते पुनः 'आहारो द्विगुणस्तासा'-मेवमादिकाल्पनिकवचोभिः स्त्रीणां प्रकृतीस्तथा लोकोत्तरभयङ्करत्वेनोपचित्रितवन्तो यथा ता दृष्टिमात्रत एव राक्षस्य इव, पिशाच्य इवापरविधाभिनवदेवयोनिविशेषा इव वा सर्व्वदैव पुंसां मनःसु महतीं भीतिमादधति। येन ते भद्राभद्रमविचार्य्यैव स्त्रीणां कौलिन्यवादे, छिद्रोद्घाटने च सर्वदैव प्रयत्नं कुर्वन्ति। अनन्यकर्मतयाऽस्मदेशीय-नराणां सर्व्वमेव कौशलं स्त्रीणां छिद्रान्वेषण एव व्ययितं भवति। ततश्च भारतीयकवयोप्येकमात्रोपजीव्यभूते रमणीचरिते; यदा-यदाऽवसरं प्रापुस्तदा तदैव कुटिलं कटाक्षं निक्षिप्तवन्तः।

दृश्यतान्तावद्रसभावविशेषदीक्षागुरोर्महाराजविक्रमादित्यस्य नवरत्नपरिषल्ललामभूतस्य महाकवेः कालिदासस्य रसमयी लेखन्यपि स्त्रीणां प्रकृतिनिर्म्माणे कीदृग् वज्रसारा बभूव। तथाहि—

"स्त्रीणामशिक्षितपटुत्वममानुषीणां
संदृश्यते किमुत याः परिबोधवत्यः॥"

इत्येकेनैव वाक्येन कालिदासस्य रसवत्तायाः परिमाणं सुष्ठु ज्ञायते; ज्ञायते च स्त्रीजातिं प्रति तस्य कीदृग् गौरवं, समादरश्चासीदिति। मानुषीणां कथैव नास्ति, अचेतनमपि स्त्रीलिङ्गं वस्तु कापट्ये पटिमानमादधाति, जगदशेषमभिसन्दधाति, समुत्पादयति च स्वालीक-

बाह्यमधुरभावेन मनःसु महीयांसं मोहम्। अतः स्त्रीत्वमेव जगति यावतामनर्थानां मूलम्। इत्येकेनैव वाक्येन प्रतीयते कालिदासस्य सहृदयता, प्रकाश्यते चास्यान्तरमौदार्य्यं; दृश्यते च शकुन्तलायास्तथाविधं लोकोत्तरसौन्दर्य्यमार्ज्जवञ्च वनवाससुलभम्। स्त्रीणां खलु निसर्गत एव कापट्यपाटवं, प्रवञ्चनाचातुर्य्यमनृत-चाटुभाषणव्यसनिता, पुंसां निरयगमनहेतु महामोहोत्पादनकौशलञ्च सञ्जायते। नाजन्मतपोवनवासेन; नाबाल्यधर्म्माचरणाभ्यासेन, नापि निरन्तरसाधुसङ्गेन तदन्यथा भवतीत्यतः सत्स्वप्यसाधारणसौन्दर्यौदार्य्यमाधुर्य्यार्ज्जवादिहृदयविमोहनगुणग्रामेषु स्त्रियः खलु श्मशानप्रसूनानीव दूरतः परिवर्ज्जनीयाः, न कदाचिदभ्यन्तरीकरणीया इत्येव यत्र सहृदयानां कवीनां लोकशिक्षणप्रकारः, तत्र स्त्रीजातिं प्रति जनानामादरो गौरवञ्च कीदृगासीदिति न दुरुन्नेयमेतत्। नैतावन्मात्रेण कवीनां परितृप्तिरभूत्। तेषु केचिद्रुद्धमूलस्य महतो वैरवृक्षस्य योषित एव मूलत्वेन निर्द्दिष्टवन्तः।

अत्र जगन्मण्डले यावन्ति जनसङ्घसमुच्छेदकराणि जन्यान्यजायन्त, यावन्तश्च स्वजनविच्छेदहेतवो विवादा अभूवन्, तत्तावतां योषित एव मूलकारणमित्यहो अशान्तिहेतुता स्त्रीणामिति तेषामभिप्रायः। अपरे तु स्त्रीबुद्धेः प्रलयङ्कारितामाहुरन्ये त्वङ्कस्थितानामपि जनीनां यत्नतो रक्षां विदधुः। अपरे चापरविधान् दोषानुद्घोषयामासुः। किञ्च "दीर्य्यन्तेऽमीभिर्दारा" इति व्युत्पत्ति-प्रकारं दर्शयतां वैयाकरणानामपि नात्र पश्चात्पदत्वं स्त्रीरन्ध्रान्वेषणौदासीन्यं वा दृश्यते।

एवं तेषां सर्वेषां सङ्कलनेन स्त्रियस्तावन्मनुष्यसमाजेषु, पुंसा-

मक्षिपथेषु च भृशं शङ्कास्थानान्यसीमभयकारणानि, परमाविश्वासभाजनानि, सर्वदोषाणामाकराः सर्व्वपापानामाश्रयाः, सर्व्ववैराणां प्रसवभूमयश्छलकापट्यानां निलयाः, नित्याभिसन्धानपराः, नित्यप्रवञ्चनचतुराः, कुमार्गप्रवर्त्तननिपुणाः, मिथ्यावादव्यसनाः, कुमन्त्रप्रदानदक्षाः, साक्षाद् यक्ष्य इव बहुरूपदर्शनकुशलाः, डाकिन्य इव मायाचणाः, पिशाच्य इव चित्तभ्रमोत्पादनपटीयस्यो राक्षस्य इव बहुघस्मराः, अभिनवभीषणप्राणिप्रकारा इव किम्भूतकिमाकाराः, भीषणाद्भुतसृष्टिप्रियस्य कस्यापि नूतनप्रजापतेर्हस्तलेखा इव दर्शनमात्रोद्वेजकाः, हिंसाद्वेषेर्ष्यासूयामत्सरभूयिष्ठाः, जङ्गमनिरयमूर्त्तय इवाशेषक्लेशप्रदाः, निरयाधिदेवता इव भूमण्डलमवतीर्णाः प्रत्यैयन्त ! तासां व्यभिचारप्रियता तु सर्व्वतो गरीयस्येव। ता हि प्रत्यहं प्रतिक्षणं "गावस्तृणमिवारण्ये प्रार्थयन्ति नवं नवं" (पुमांसम्)। तासु यदि कदाचित् कस्याश्चित् सतीत्वं दृश्येत, तत् केवलं—

"स्थानं नास्ति क्षणो नास्ति
नास्ति प्रार्थयिता नरः।"

इत्येतेष्वन्यतमकारणादेव, न तु सहजधर्म्मबुद्धिप्रभावात्। अहो किमतोऽस्त्याधिक्यं दुर्भाग्यस्य, दुर्दशाया वा। न ज्ञायते विधात्रा कस्यामवस्थायां, किं वा मनसि विचार्य्य भारते रमणीकुलं सृष्टमिति। यदा भारतं स्वाधीनमासीत्, यदा च भारतीयाः स्वधर्म्मनिरताः, शास्त्रानुशासनपरिपालनपरतन्त्राश्चासन् तदानीमेव विद्वद्भिः स्त्रीजातिं प्रत्येवमादरो दर्शितो यस्मिन् स्मृतिमात्रपरिकल्पितेऽपि सहस्रधा विदीर्य्यते हृदयम्। इदानीं सर्वे हि भारतीयाः प्राक्तनस्य सर्ववि-

पयस्यैव गौरवं कुर्व्वन्तो महान्तमानन्दमनुभवन्ति, परं प्राचीनैर्धर्मप्रवक्तृभिर्नीतिकुशलैः कविनिकरैरपरैश्च विद्वद्भिः स्त्रीचरितानि यथा चित्रितानि तदवलोक्य वयन्तु किंविषयकं गौरवं कुर्म इति तु न जानीमः ।

यदि कदाचित् कस्मिन् विषये विकत्थनमुदेति, तदा तत्क्षणमेव तद्विषयकं प्राचीनपण्डितकृतमात्मगौरवं समीक्ष्य लज्जया नम्राननास्तिष्ठामः, विलीयते कण्ठान्तरेव भारती । वस्तुतो भारतस्य तथाविधसमुन्नमनसमये स्त्रियो नाम यादृशीं शोच्यां दशां प्रापिता वर्त्तमान-नेग्रोदेशीयारण्यवासिनोनामपि न तादृगवस्था श्रूयते ।

तत: परं दीर्घकालं यवनाधिकारः ।

एतावत्कालं दुर्बलहृदयानां भारतीयपण्डितानां स्वभावतो दयावृत्तेः प्राबल्याद्वाऽस्मद्दुर्भाग्यस्यासम्पूर्णतया वा, नास्मासु निर्दयप्रहरणं विहितमभूदित्येतावानभाव आसीद्यवनाधिकारे तु सर्व्वं सम्पूर्णमभवत् ; अभवच्चास्मद्दुर्भाग्यस्य चतुरस्रो विकासः । महिलासु निर्दयप्रहरणव्यवस्थाऽपि प्रवर्त्तिता । एतावन्मात्रमेव यवनाधिकारस्य प्रचण्डत्वमन्यत् सर्व्वन्तु पूर्व्वत एवाऽवस्थितम् । एतत्कारणन्तु यवनानां मते नास्ति स्त्रीणां मनुष्योचित आत्मा । तास्तु छागादिपशुवज्जडचेतनयोरन्तराले तिष्ठन्ति । स्त्रियो नाम न जडं, नापि सम्यक् चेतनं, किमप्यत्यद्भुतमश्रुतपूर्व्वमलौकिकमद्भुतं वस्तु । ततस्ता इतस्ततः स्थानान्तरं सञ्चरमाणा अपि, मधुरमाभाषमाणा अपि, पुरुषाणां प्रियहितचिकीर्षया निरन्तरं यतमाना अपि, चिन्मयपुरुषानधिष्ठिततया न किमपि सुखं दुःखं वाऽनुभवन्ति । ततस्ता-

सामपद्यतेऽपि न किञ्चित् पापमस्ति। तद्विचार्य्यतां तावत्तेषामधिकारसमये योषितां कीदृशी भयङ्करी दशाऽऽपतितेति। गृहलक्ष्मीणां तादृशीं हीनदशामवलोक्य शङ्कितेव भीतभीतेवापुनरावृत्तये देशान्तरं प्रातिष्ठत भारतराजलक्ष्मीरपि। चिरप्रतिद्वन्द्विनीं कमलां प्रस्थितां समीक्ष्य सहजविजिगीषाकण्डूयनापनोदनोचितपरिपन्थ्यभावात् सरस्वत्यपि भारतमपहाय तत्क्षणं तामनुजगाम। ततः सद्यः प्रादुरभूयत समन्तादतिघोरेणाज्ञानान्धतमसेन, सर्व्वतः प्रसृतं मूर्खतया, तिरोहितं शास्त्रज्ञानसहचरेण विवेकेन। सर्व्वत्रैव मूर्खाः स्त्रियः मूर्खैः पुंभिः सह सङ्गता मूर्खापत्यानि प्रसोतुमारेभिरे।

अथ समयचक्रस्याविरतपरिभ्रमणवशाद्वा, स्वत एव भारतीयानां दुर्भाग्यविपरिणामाद्वा, निर्दयविधातुराकस्मिकदयोदयाद्वा, वर्षेऽस्मिन् सभ्यतमानां, न्यायपराणां, समुन्नतचेतसां इङ्गलण्डीयानामधिकारः समायातः। एते यद्यपि सर्व्वप्रयत्नेन तथाधःपतितानां भारतमहिलानां समुद्धरणे प्रवृत्तास्तथापि देशस्वभावस्य दुरपनेयतया वा भारतीयमहिलानामखण्डनीयदुर्भाग्यप्रबलतया वा भारतभूमिचिरपराङ्मुखस्य हतविधातुः कुटिलकटाक्षपातस्यानुच्छेद्यतया वा, न विज्ञायते केनानिर्व्वचनीयेन कारणेनास्माकं दुःखानि पूर्व्वतोऽपि दुःसहतराणि जातानि।

पूर्व्वदुःखानि तु प्रतिकार्य्याण्यासन्निदानीन्तनानि त्वप्रतिकार्य्याणि, ततश्च विषमाण्येवेमानि। तथाहि विदितमेव भवतां दाम्पत्यसुखमेव संसारिजीवनस्य, गृहस्थाश्रमस्य जीवितसर्व्वस्वं, समाजबन्धनस्य मूलग्रन्थिः, सदपत्यस्य च मूलमिति। साम्प्रतं तत्रैव महान्

प्रत्यूहो महती च विडम्बना सञ्जाता। तद्धि नाम परस्परमनुरूपयोः, सर्व्वथा सुयोग्ययोर्दम्पत्योः सप्रेमसम्मेलनेन सम्भवति, न पुनरननुरूपयोरयोग्ययोः स्त्रीपुंसयोः प्रसभसंयोजनेन। साम्प्रतं दम्पत्योः परस्परमानुरूप्यं सुदूरपराहतमेव। तथाहि स्त्रियस्तु प्रायः सहृदयनृपतिपुरुषसंस्थापितपाश्चात्यविद्यालयेषूच्चशिक्षालाभेन, समुचितव्यायामाद्यभ्यसनेन च समुन्नतचेतसः, स्वाधीनवृत्तयः स्वातन्त्र्यप्रियाः, समुन्नताशयाः, सभ्यतमाः, सदसद्विचारकुशलाः, समुत्साहवत्यः, समुन्मीलितज्ञानचक्षुषः, स्वार्थेष्वभिज्ञाः, स्फूर्त्तिमत्यः, सर्व्वकार्येषु च दक्षाः सञ्जाताः। परीक्षायामप्युच्चस्थानमधिकुर्व्वन्ति। न ताः पूर्व्ववज्जडधियो हिताहितविचारासमर्थाः, यत्किञ्चनसन्तुष्टाः पराधीनाः स्वामिदैवत्या अनुचितलज्जापरवशा अज्ञानाच्छन्नाः स्वार्थज्ञानशून्या आरण्याः पशव इवासभ्यानामग्रगामिन्यः केवलं सन्तानप्रसवयन्त्रभूताः सन्ति। न तासामिदानीं स्वच्छन्दवनजातेन शाकमात्रेणाहारवृत्तिश्चरितार्था भवति, न वा दशहस्तमनितैकेन वस्त्रखण्डेन शरीराच्छादनकर्म्म सम्पूर्णतामेति। न ता गृहमार्ज्जन-भोजनभाजन-प्रक्षालनप्रमुखाणि गृहकर्माणि स्वयमनुष्ठातुमिच्छन्ति, मन्यन्ते च तथाविधानि कर्म्माण्यभद्रजनोचितानि, नीचजनानुष्ठेयानीति; रन्धनमपि नासामग्रतो नीचजनोचितं सभ्यजनविगर्हितमपकर्म्मैव। अनवरतस्तन्यदानेन स्वापत्यपोषणमपि सभ्यताविरोधि महदस्वास्थ्यकरमकार्य्यमेव। किञ्च ताः पालितपशुवत् सर्व्वदावरोधनिरोधनं नामामानुषोचितं, महारौरवलोऽप्यधिकक्लेशप्रदमधःपातैककारणं जानन्ति। श्वश्रूश्वशुरशुश्रूषणमपि वृद्धभृत्यपरिपोषणवद्व्यर्थं गणयन्ति, न देवस्यातणां

सङ्कर्षमपि सहन्ते. किन्त्वायासहेतुगृहकर्मस्वनासक्ताः सुसभ्यपरिच्छद-परिवृताङ्ग्यो रङ्गावतीर्णनायिका इव बहुविधाङ्गभङ्गीसङ्कुतहावभाव-विलासकिलकिञ्चितनृत्यगीतादिव्यतिकरेण समयातिवाहनमेव भद्रमहिलोचिताचरणं मन्यन्ते। पाश्चात्यसभ्यतालोकोन्मीलितनयनास्ताः सर्व्वथा पाश्चात्यसभ्यरमणीनामनुकुर्व्वन्त्येव।

पुमांसस्तु प्रायः शेमुषीशून्या अकृतविद्या एव विद्यालयं परित्यज्य मसीजीविनो भवन्ति। ततश्च तेषामन्तःकरणममार्ज्जितमशोधितं कालुष्यबहुलमाशयश्च नीचो निकृष्टपदवीमनुगतस्तिष्ठति। पाश्चात्यशिक्षाकलङ्कभूतास्ते हि नामासभ्या असभ्यव्यवहारा अनुन्नतहृदया अस्वाधीनप्रकृतयः स्वल्पसन्तुष्टा निकृष्टपशव इव हीनबला हीनौजसो हीनकर्मनिरता गौरवरहिता आत्माभिमानशून्या अगण्या अधन्या जघन्याचारा असारा अनुदारा वराका यदृच्छाशब्दवत् केवलं संज्ञायै जन्मग्रहं कुर्व्वन्ति। नाभिजानन्ति ते मादृशां स्वदेशोज्ज्वलललामभूतानां महिलानां समुचितसम्माननं, प्रकृतगौरवमनुरूपमादरं वा; पश्यन्ति चास्मानितरसाधारणधिया, वयमपि तान् तृणवदवजानीमः, पशुवदनादरेण पश्यामस्तैः सह सामानाधिकरण्यमपि न सोढुं शक्नुमः। तिष्ठन्त्वतस्ते दूरत एव।

अथ ये खलु प्राणपणप्रयत्नार्ज्जितविद्या विद्वत्तया ख्यातिमुपगताः पाश्चात्यविद्यालयानां मुखमुज्ज्वलयन्ति, गौरवं परिवर्धयन्ति, ते ह्यस्मदधन्यतयाऽस्मल्ललाटलिपिनामनुच्छेद्यतया वा विद्यार्ज्जनपरिश्रम-हृतसाराः, अकालवार्द्धक्यमुपगता निष्प्राणा निरुत्साहा निरुद्यमाः स्वाङ्गचलनमपि महापुरुषकारं मन्यमानाः कीटदष्टकुसुमानीव प्रायशो-

ऽकाल एव कालकवलमभिपतन्ति। ये केचिज्जीवन्ति, ते जीवन्मृता इव निश्चेष्टास्तिष्ठन्ति, चिररोगमयं, महाक्लेशमयं निरयमयं हतजीवितमुद्वहन्ति, शववत् निर्जीवं निष्प्रयोजनं शरीरभारं वहन्ति। ते शैशवादारभ्य शुकपोता इव कतिचिन्निर्दिष्टानि पुस्तकान्येवाभ्यस्यन्ति, नान्यत्र शिक्षन्ते, न लोकव्यवहारे, नापि सादरसम्भाषणे। तेषामन्तस्तत्त्वानि तु न मनुष्यत्वं जानन्ति, न प्रेम्णानुरुध्यन्ते, न स्नेहेन खिलीक्रियन्ते, न मैत्र्यानुस्त्रियन्ते, न सौहार्देनाधिक्रियन्ते, न दययोपसेव्यन्ते, नाप्यौदार्य्येणाश्रियन्ते, येन ते निर्लिप्ता इव, निःसङ्गा इव, उदासीना इव, जातवैराग्या इव, शङ्किता इव, भीता इव, गर्व्विता इव, अवष्टब्धा इव, ग्रहग्रस्ता इव, पिशाचगृहीता इव, महाप्रेताधिष्ठिता इव, न कैश्चित् सङ्गच्छन्ते, न कञ्चित् सम्मानार्हमपि सम्मानयन्ति, न गुरूनपि पूजयन्ति, न बन्धूनप्याद्रियन्ते, न सुहृद्भिः सह जल्पन्ति, न च पूर्व्वमामाषिता अपि प्रतिवचो ददति, न वा क्रीडाह्लादं कुर्व्वन्ति, न विहारसुखमनुभवन्ति, न हसन्ति, न वा हसितुमपि जानन्ति, यदि कदाचिद्धसन्ति तद्धि मुमूर्षुहास्यमिवातिनीरसं विकटं भीषणञ्च प्रतीयते। ते शङ्कव इव निरन्तरमूर्ध्वमुखास्तिष्ठन्ति, पश्यन्ति च शून्यमिदमशेषं जगत्। नास्ति तेषां क्वापि स्फूर्त्तिर्नाप्युल्लासो न वा विलासः।

किञ्च नास्ति तेषामभिमतार्थार्ज्जनसामर्थ्यम्। राजसेवनमेकमेव तेषामर्थार्ज्जनद्वारं, तच्च पूर्व्वत एव निरुद्धं, सुचिरं घनीभूतन्तद्संरुद्धं राजजातीयपुरुषैर्नास्ति तत्र मक्षिकाप्रवेशावसरोऽपि। तेषामुच्छिष्टं यत्किञ्चिद् दूरादालभ्यते, न तेन स्वोदरपोषणमपि सम्यक्

भवितुमर्हति, दूरेऽस्तु तावन्मादृशसुशिक्षितसभ्यताप्रियकलत्रपरिपोषण-वार्त्ता। येषां स्वोदरपूरणक्षममपि धनार्ज्जनं न भवति, नापि कदाचिद्भविष्यति वा ततश्च प्रायोपवेशनाश्रय एव श्रेयान् प्रतिभाति, तेऽपि किमस्मद्विधानामनुरूपभर्त्तारो भवितुमर्हन्ति ? न कथमपि।

पूर्व्वमज्ञानान्धकारस्य प्रबलतया देशाचारेषु, गुरुवचनेषु, शास्त्रानुशासनेषु चास्माकं द्रढीयसी श्रद्धा, गरीयांश्च विश्वास आसीत्, ततश्च पित्रोरन्येषां वा तदास्पदीभूतानां स्वजनानामनुमोदनेन येन केनाऽपि समं सकृत्पाणिपीडनमभवत्, स दरिद्रो वा मूर्खो वा दुर्बलो वा वृद्धो वा कदाकारो वा कदाचारो वा यादृगेवासीत् तादृशमेव तं साक्षाद्दैवतमिव विजानाना वयं सर्व्वथा तदनुसरणमेवैहिकपारत्रिकनिश्श्रेयसकरं मन्यमाना सर्व्वदा तस्यैव सन्तोषसाधने प्रयत्नमकुर्म्म, तेन निर्दयं ताडिता अपि न मनसापि प्रातिकूल्यमन्वतिष्ठाम, किन्तु छाया इव केवलन्तमन्वगच्छाम। इदानीन्तु पाश्चात्यशिक्षालोकोन्मीलितज्ञानचक्षुषामस्माकं देशाचाराणामसारतया, गुरुवचनानामयुक्ततया शास्त्रानुशासनानाञ्चाप्रमाणतया प्रतीतेर्न तेषु तादृशी श्रद्धा, तथाविधो विश्वासो वा वर्त्तते, ततो न पूर्व्ववत् यं कञ्चन भर्त्तृत्वेनाङ्गीकृत्याजीवनमात्मसुखेभ्यो जलाञ्जलिं दत्त्वा तस्य दास्यमनुष्ठातुमिच्छामः। किन्तु कमपि सौम्यं, सोत्साहं, बह्वर्थार्ज्जनकुशलं, बहुव्यापारासक्तं, बहुजनसम्मानितं, स्वाधीनचेतसं, स्वच्छन्दानुसारिणं, निर्भयं, निःशङ्कं, सर्व्वविधकुसंस्कारोन्मूलने मुखरं, सर्व्वदा स्वदेशोद्धरणव्यापारेष्वग्रेसरं महोदारं, वरं लब्ध्वा स्वगुणैस्तं

सम्यग्वशमानीय क्रीडापुत्तलिकावत् स्वेच्छयाऽभिचालयितुमभिलषामः। सोऽकातरमर्थानर्ज्जयित्वा निःशेषमस्मद्धस्तसात् करिष्यति, वयञ्च तान् निःशङ्कं, निर्बाधं, यथेच्छमात्मोपभोग्यवस्तुषु नियुज्य शेषमावश्यकव्ययनिर्वाहार्थं कदाचिदस्मै दास्यामो न दास्यामो वा, स तु सर्व्वथैव सन्तुष्टो भविष्यति। सांसारिकेषु सामाजिकेषु वा व्यापारेष्वस्माकं सर्व्वतोमुखीं प्रभुतां संस्थाप्य स स्वयमुदासीनः स्थास्यति; न कदाचिदस्मत्कृतं गर्हितमपि कर्म्म व्याहनिष्यति। स सर्व्वेष्वेव कर्म्मस्वस्मदनुमोदनमपेक्षिष्यते, वयन्तु न कुत्रापि तदपेक्षां करिष्यामो यथेच्छं विहरिष्यामो यथेच्छमाचरिष्यामो येन केनचिद् व्याहरिष्यामः। तदपरिचितेनापि मित्रेण मिथो यथेच्छं निवत्स्यामः। स तु वाङ्मात्रमपि न प्रयोक्ष्यते, सर्व्वथा तूष्णीं स्थास्यति चेत्येवमादिसमुदारसभ्यजनोचितसाधुव्यवहारेणैव दाम्पत्यप्रेम्ण उत्कर्षो जायते स्थैर्य्यञ्च भवति। संसारश्च शान्तिमयः, सुखममयः कल्याणमयः सम्पद्यते। भूमिरियं द्युलोकं स्पर्द्धमाना तिष्ठति। परं सर्व्वस्यैतस्यानुरूपभर्त्तृलाभो मूलमेव, यदि पुनरस्माकमधन्यतयाऽनुरूपभर्तृलाभाभावात्तन्मूलमेव व्याहतं तदास्माकं विद्यार्ज्जनं, ज्ञानलाभः, सभ्यता, शिक्षा, शिल्पनैपुण्यञ्चेत्यादि सर्व्वमेकपद एव विध्वस्तं, निष्प्रयोजनमनर्थकञ्च संवृत्तं, सञ्जातञ्च जगदिदं दुःखबहुलं घोरकान्ताररूपं, शून्या भीषणाञ्च सञ्जाता दश

दिशः। अहो धिग्विधातारं, धिग् भारतं वर्षं, धिगस्मान् *। अद्यै-तावन्मात्रमस्तु। इति शम्।

| | |
|---|---|
| आषाढस्य प्रथमदिवसे | श्रीपूनानगरवास्तव्या श्रीअनामिका देवी ( बाई ) |

वयमेतावन्तं कालं कार्य्यकरणासमर्थैः केवलं वागाडम्बरनिपुणैः सर्व्वप्रकारेण पाश्चात्यपुरुषदोषानुकरणप्रियैः पाश्चात्यविद्यालय-शिक्षितपुरुषैरुद्वेजिताः प्रत्यहं महाप्रलयमपेक्षमाणास्तिष्ठामः। इदानीं गण्डस्योपरि विस्फोटकवत् स्त्रियोऽपि तादृशं वागाडम्बरं कर्त्तुमारेभिरे, ततश्च भारतोद्धारस्य नास्ति किञ्चिद्विलम्बः!

* विधातारं धिक्, यतोऽसावस्मान् बहुविधसद्गुणराशिभूषिता विदु-षीर्विधाय नास्माकमनुरूपान् स्वदेशीयान् वरानसृजत्। सन्ति भिन्नदेशी-येषु बहवस्तथाविधाः सन्यं, किन्तु ते नास्मासु प्रीतिं कुर्व्वन्ति, ततश्च न वयमपि तेषु।

धिग् भारतं वर्षम्, यतोऽस्मिन् स्त्रीणां दुःखानि चिरं समानरूपाण्येव दृश्यन्ते। यत्र खलु देशे स्त्रीणामश्रुप्रवाहो दीर्घनिश्वासश्च न कदाचिदपि शान्तिं नीतस्तस्य देशस्यागाधजलधितलविलय एव श्रेयान्।

धिगस्मान्, यासां निरन्तरं दुःखभोगायैव जन्म। यदि वयमन्तःपुरावरो-धान्मुक्तिं लभेमहि, सर्व्वथा स्वच्छन्दं विचरितुञ्च शक्नुयाम तदा स्वल्पेनैव कालेन भारतस्य पुनरुद्धारः स्यात्, प्रबलेन भारतीयवीराणां सार्व्वपत्य-न्यासैःपुनरेव मेदिनी। ( लेखिका )

मक्षिका यथा सर्व्वमन्यदुपादेयद्रव्यजातं परित्यज्य व्रणस्थानमेवा-भिधावति, तथा पाश्चात्यशिक्षामधिगता अस्मद्देशीयाः पुरुषाः स्त्रि-यश्च यथाक्रमं पाश्चात्यदेशजातानां पुंसां स्त्रीणाञ्च गुणेभ्यः पराङ्मुखा दोषानेवानुधावन्ति । किं बहुनोक्तेन—

"प्रासादीयति यः कुट्यां पर्य्यङ्कीयति मञ्चके ।
तस्य सन्तोषशीलस्य कुब्जिकाप्यप्सरायते ॥"

इत्यलं परकलत्रं प्रति तीव्रकटाक्षविक्षेपणेन । तद्धि मादृशां परिणतवयसामतिगर्हितमेवेति । शम् ;

विद्योदय-सम्पादकः ।



# चण्डीदासस्य

अस्ति खलु वङ्गेषु भगीरथयशःपताकायमानायाः, सद्यःप्रदीप्तकपिलकोपानलभस्मीभूतसगरसुततापहरणामृतपूरायाः पापभराधःपतिताखिलजगदुद्धरणसोपानभूतायाः, सुरनरसिद्धविद्याधरसेवितपवित्रसलिलसञ्चारपवित्रीकृताशेषभारतजनपदायाः, प्रबलकलिकालमत्तकुञ्जरकुम्भविपाटनतीक्ष्णांकुशधारायाः पूर्व्वसागरसङ्गमकृताभिसारायाः सुरसरितः पश्चिमे तीरे; महोदधिरिव सर्व्वरत्नानां, नन्दनकाननमिव कल्पवृक्षाणां, मलयगिरिरिव चन्दनद्रुमाणां, मधुमास इव सुरभिकुसुमानां, वङ्गीयमहाकवीनामुत्पत्तिक्षेत्रमतिपवित्रसरस्वतीदामोदरप्रमुखस्रोतःसलिलक्षालिताशेषकल्मषः, सर्व्वसस्यसमृद्धोऽतिविशालः सुचिरगाढप्रतिष्ठो राढ़ो नाम जनपदः। यदाश्रयाद् वङ्गीयकुलीनब्राह्मणानामद्यापि 'राढ़ीय' इति बहुमानास्पदा ख्यातिः प्रचरतितराम्। यतश्चोदयाचलाज्ज्योतिश्चक्रमिव, चतुर्मुखमुखकमलाद्वेदशास्त्रमिव, क्षीरोदार्णवादमृतभाण्डमिव, नारायणचरणाङ्गुष्ठनखविवरान्मन्दाकिनीपयःपूर इव, प्रथममाविर्भूतममृतरसनिष्यन्दि, सर्व्वलोकहृदयाकर्षि, लोकोत्तरचमत्कारकारि सुललितपद्यमयं वङ्गीयकाव्यजातम्। यस्मिन् खलु वाग्देवताचरणचारणचक्रवर्त्तिपद्मावतीहृदयोज्ज्वलमहार्घ्यरत्नायमानमहाकविश्रीजयदेवप्रमुखवैष्णवकवयो वैदूर्य्याणीवाकरे, कमलानीव पद्माकरे, मुक्ताफलानीव करिवरकुम्भोदरे, करिवरा इव सामगानावसरे, पारिजातनिकरा इवामरपुरेऽमरकुलानीव महर्षिकश्यपपर्णे-

शालाभ्यन्तरे, वैद्युतामय इव जलधरपटले, जलधरपटलानीव वर्षारम्भसमये, युगपत् क्रमेण चोत्पत्तिं लेभिरे। यत्र चोदयाचल-मेखलायामभिनवोदितशशाङ्ककिरणमालेव, रागबहुलाऽमलसुधाधारा-निष्यन्दिनी च, महोदधिवेलायां कल्लोलमालेव स्फीतस्फीता कल-शब्दप्राया च, नगरोपवनान्ते प्रफुल्लमधुमासकुसुममञ्जरीव मधुरसा-मोदिनी हृदयहारिणी च, शारदीयपद्माकरे प्रभातभिन्ननवनलिनीव रुचि-रश्रीसमधिष्ठिताऽऽकृष्टानेकमधुव्रतहृदया च, गभीराशयाऽपि विविध-क्रीडारसोल्लासिनी, नानाविधच्छन्दोनिबद्धाऽप्यनिरुद्धप्रसरा, श्रवणमात्र-विषयाऽपि सहृदयहृदयसंवेद्या, विचित्राऽप्यनेकचित्रालंकृता, बहुमाना-रूपदापि मानिनीमानापनोदनचतुरा, पूर्व्वरागसुरञ्जिताऽपि विप्रलम्भा-वलम्बिनी, सुगाढप्रेमरसाश्रिताऽपि विरहावेदनकातरा, संस्कृत-प्रायाऽपि प्राकृतकलिताऽवयवा, गीतमय्यप्यविगीता, सरलभावाऽपि वक्रोक्तिरचनपरा, निरुपमाप्यनेकोपमाशालिनी, अपरूपापि रूप-कोज्ज्वला, स्फुटीकृतार्थाऽप्यपह्नवकृतादरा; क्वचित् प्रथमावतीर्णयौवनेव सुललितपदन्यासा सरसभाषिणी समदना च, क्वचित् प्रगल्भवनितेव वाग्विन्यासपटीयसी महोजस्विनी, समाक्रान्तनायका च, क्वचित् धीरनायिकेव सुगूढाभिप्राया गम्भीराकृतिर्दर्शितप्रसादा च, क्वचिद्बाल-कुमारीव माधुर्य्यमयी, दर्शितहासा कृतकरुणप्रलापा च, वंगीयबाल-कविता, मात्रेव संस्कृतभाषया सुलालिता कृताङ्गरागा च, धात्र्येव हिन्दीभाषया परिपोषिता दत्तहस्तावलम्बना च; कदाचित् वसन्ता-वतारमणीयेषु दक्षिणानिलान्दोलितेषु भ्रमरकुलकलगुञ्जनानुरणितेषु कोकिलकाकलीकलकलाकुलितेषु लताकुञ्जेषु नवोद्गतमञ्जरीपरिमला-

मोदितदिगन्तरेषु सहकारकाननेषु च नवयौवनभरोल्लासितहृदययुवजन-प्रवर्त्तिताभिनवमृतूत्सवं पश्यन्ती, कदाचित् प्रचण्डमध्याह्नविरलच्छाया-धिगममुक्तसहजविरोधतया निःशङ्कं निद्रायमाणेषु निश्चलकृतरोमन्थेषु वा वन्यपशुनिकरेषु, सर्व्वतोवरुद्धसुशीतलगृहाभ्यन्तर्निभृतनिषण्णेषु मानवकुलेषु, समासन्नमार्गवनस्पतिच्छायाश्रितेषु पथिकनिवहेषु, सलिल-भ्रान्त्या मृगतृष्णिकामनुधावत्सु पिपासार्त्तमुग्धहरिणकुलेषु च निदाघम-ध्यन्दिनेषु, विरहविधुरकामिसार्थैः सह विरलविरलेषु मन्दपवनसञ्चारा-न्दोलितनवपल्लवेषु गिरिणदीप्रस्रवणपुलिनवेतसवनेषु परिभ्राम्यन्ती, कदाचिन्नवदूर्व्वादलश्यामलाभिनवजलधरारब्धरात्रिन्दिनदुर्द्दिनान्धका-रितेष्वविभाव्यदिवारजनीप्रभेदेष्वनवरताविरलासारपातपिच्छिलभूतलेष्व-न्तराऽन्तरा तडिद्विस्फुरणानन्तरघोराशनिनिर्घातभीषणेषु, स्वगृहचिन्ता-स्तिमितपथिकनिवहेषु च जलधरदिवसेषु प्रफुल्लकदम्बपरिमलामोदिसमी-रकम्पितबर्हाणां चक्रमण्डलं प्रनृत्यतां मयूराणां कलकेकारवपूरितकन्दर-स्य पक्वजम्बूफलश्यामलितप्रान्तस्य गोवर्द्धनपर्व्वतस्यासन्ननिधुवननिकु-ञ्जेषु, प्रेमोन्मत्तयो राधामाधवयोर्बहुविधनिधुवनलीलास्वन्तरीभवन्ती, कदाचिज्जलदजालापगमामलाम्बरतलस्वच्छविमलज्योतिषि, कुम्भयोनि-सन्दर्शनापहृताशेषमलतया स्वच्छजलजलाशयोद्भासितदशदिशि, प्रफुल्ल-पुण्डरीककमलकुमुदकैरवकुलधवलितसजलस्थलावनिमण्डले निर्जलजल-धरपटलाच्छादनोपचितधवलिमनभस्तले, समन्तात् सत्ययुगावतारमिवो-पदर्शयति समच्छदरेणुरूषिते शरत्समये, पार्व्वणशशधरकिरणमालाभा-स्वरासु प्रफुल्लमल्लिकायमानासु पूर्णिमारजनीषु धीरसमीरसञ्चरणसुखे यमु-नापुलिनकदम्बमूले भगवतो विश्वम्भरस्य विश्वविस्मयकारिणीं,

रासलीलामीक्षमाणा; कदाचित् कृताभिसाराभिर्गोपवनिताभिर्नैशतम:-समीकृतोद्धाते कान्तारवर्त्मनि सुमधुरवेणुनिनादमभिसञ्चरन्ती, कदाचित् समानवयोवेषसुचितस्थिरसख्यसुन्दरगोपकिशोरकुलानुगम्यमानेन, कृतमधुरगोचारणोचितरुचिरवेषेण, सतृष्णगोपवधूरागस्फारितेक्षणयुगकवलिताशेषावयवेन, सखेलपदन्यासानुरणन्मञ्जुमञ्जीरझङ्काराकृष्टदर्शकजनहृदयेन शिखिशिखण्डमण्डितचारुचूडेन मणिमयकुण्डलचुम्बितसुन्दरगण्डयुगलेन, मुरलीरवस्तब्धीकृताशेषवृन्दावनभूमिभागेन, वनमालालम्बितविशालवक्षःस्थलेन, भगवता पीतवाससा समं मनोहरकन्दरासु, नवतृणोद्गमशाद्वलासु गोवर्द्धनोपत्यकासु, विविधस्वादुफलतरुलतानिरन्तरेषु कालिन्दीतटवनेषु च गोचारणलीलां कुर्व्वाणा, बाल्योचितसरलभावा, मुग्धा, स्वयमपरांश्च विमोहयन्ती तत्तदनुभावचब्रजलीलामधुरं बहुविधं बाल्यक्रीडनञ्चकार।

इत्थं वङ्गस्योत्तमाङ्गस्येव पश्चिमस्य, कैलासस्येव सदासन्निहितशिवस्य, प्रह्लादबालचरितस्येव हरिगुणकीर्त्तनप्रभवस्य, शिष्टाचारस्येव समादृतमहाजनपदावलोकस्य महातीर्थभूतस्य महाजनप्रभवक्षेत्रस्य राढजनपदस्यापि शिरोभागेऽवस्थितस्य महतां वीराणां प्रभवतया वीरभूमीतिप्रसिद्धस्य प्रदेशस्य मध्ये 'नान्नुर'नामकः कश्चिदग्रहारोऽद्यापि समृद्धिसम्पदा वरीवर्त्ति सर्व्वाग्रहाराणामुपरि। इदानीमपि च यस्य कैलासकाशमहेशाट्टहासधवलं यशः कर्णपूरायमाणं विबुधानां धवलयत्यखिलं धरामण्डलमुन्नामयति चान्तरिक्षम्। यस्मिन् वङ्गधराललामभूते निकायमाये च सुसमृद्धाग्रहारनिकराणाम्, वसन्तसमये मधुमास इव, मधुमासे नवपल्लवोद्गम इव, नवपल्लवे कुसुम-

निकर इव, कुसुमनिकरं मकरन्दनिष्यन्द इव ; हिमालय इव पर्व्वतानां, कुसुमाकर इव ऋतूनां, धनेश्वर इव गुह्यकानां, भास्वान् इव ग्रहाणां, अश्वत्थ इव वृक्षाणां, क्षीरोद इव सागराणां, अनन्त इव नागानां, पाणिनिरिव वैयाकरणानां, गोतम इव तर्कवादिनां, व्यास इव पुराविदां, कालिदास इव संस्कृतकवीनां चण्डीदासो नाम वङ्गीयकवीनां प्रवरः वर्त्तमानसमयात् प्रायः पञ्चशतवत्सरपूर्व्वं जन्मग्रहणञ्चकार ।

१२८० वङ्गाब्दीयपौषमासदशमदिवसीयसोमप्रकाशाभिख्यवङ्गीयसंवादपत्रविशेषस्य कश्चित् पत्रप्रेरकः "१३२९ शकाब्दे चण्डीदासस्याविर्भावः, १३९९ शकाब्दे चास्य तिरोभावो बभूवेति" लिलेख । लेखोऽयमसंविवादितया प्रतीयते । यतश्चण्डीदासोऽयं अर्ज्जुनस्य कृष्ण इव, कालिदासस्य निचुल इव, वङ्गीयप्राचीनकवीनामन्यतमस्य विद्यापतिनामधेयस्य महाकवेः समसामयिक आसीत् । विद्यापतिस्तु खृष्टीयचतुर्दशशताब्द्याः शेषभागे जन्मग्रहं कृत्वा १४५६ खृष्टाब्दादूर्ध्वमपि जिजीवेति, तज्जीवनवृत्तलेखकानां लेखैः स्पष्टं प्रतीयते । तयोः समसामयिकत्वञ्च—

"विद्यापतिगुणान् श्रुत्वा चण्डीदासोऽस्य दर्शने ।
उत्कण्ठिततरो जातश्चण्डीदासगुणानथ ।
विद्यापतिरपि श्रुत्वा दिदृक्षुश्चाभवत् तदा ॥"*

इत्यादिपदावलीभ्यः प्रतीयते । किञ्च—

* "चण्डीदास शुनि विद्यापतिगुण दरशने भेल अनुराग ।
विद्यापति तव चण्डीदासगुण दरशने भेल अनुराग ॥"

तत्रभवानखिलवैष्णवकुलचूडामणिमरीचिरञ्जिताङ्घ्रियुगलो निखिलजगदुद्धरणहेतुहरिनामामृतवितरणकल्पतरुर्नवद्वीपमहार्णवपूर्णचन्द्रः, शचीगर्भाकरोज्ज्वलपीतमणिर्विष्णुप्रियाकण्ठहारमध्यमणिर्हरिभक्तिप्रचारमहाचारणो भक्तिरसाभिनयप्रस्तावना-सूत्रधारः, स्वच्छप्रेमत्रिस्रोतःप्रवाहावतरणगोमुखीकल्पो निखिलपाषण्डषण्डोद्दण्डमातङ्गोद्दलनमहासिंहः, कलिकालप्रवृत्तासदाचारघोरान्धकारोन्मूलनमध्याह्नविभाकरः, प्रवरः सन्न्यासिनामग्रणीर्यमिनामग्रेसरो ज्ञानिनां, धुरन्धरस्तत्त्वविदुषां, मुखरो भगवद्भक्तानां, श्रेष्ठो रसिकानां, ज्येष्ठः प्रेमिणामुपदेशको भक्तिरसस्य, प्रचारकः कृष्णप्रेमणः, गायको हरिगुणानां, नायकः कृष्णभक्तानामुद्धर्त्ता साधूनामुन्मूलयिता चासाधूनां, गोप्ता धर्म्मस्यापहर्त्ता यथेच्छाचारस्य, प्रवर्त्तयिता शास्त्रमार्गस्य, विनाशयिता चाधर्म्मस्य, द्रष्टा पाषण्डाणां, स्रष्टा सङ्कीर्त्तनपद्धानां, महामतिर्महासत्त्वो महाप्रभावो महामहिमसम्पन्नो महोदयो धरणिधैर्य्येण, महोदधिर्गाम्भीर्य्येण, सूर्य्यस्तेजसा, वह्निरोजसा, बुधः शरीरभासा, शशीव सुशीतलप्रकृतिर्ध्रुव इव हरिध्यानविस्मृताखिलविषयो, बुद्ध इवाऽहिंसावादशूरो, नारद इव भक्तिप्रवादपटुः, सुमेरुरिव सर्वोन्नतात्मा, हिमालय इव स्थिरप्रकृतिरादर्शो महापुरुषाणामाश्रमो विनयानां, प्रत्यादेशो मनस्विनां, निवासो दाक्षिण्यस्य, प्रवासः पापानामागारः समुन्नतभावानामाधारो दयाया, आलयः सत्यस्योदयाचलः सदुपदेशग्रहाणामस्ताचलः कामकेतोरुत्पत्तिक्षेत्रं साधुतायाः, आयतनं संयमानां, निकेतनं नियमानां विलासभवनं समदृष्टेः क्रीडाभवनमौदार्य्यस्य, तीर्थं सत्यसन्धतायाः समुल्लसनभूमिः श्रद्धायाः,

योनिः शाचस्य, सरणिः सदाचारस्याश्रमस्तपसां, विश्रामभूमिः समाधेः, जयन्त इव शची-हृदयनन्दनो नारायण इव विष्णुप्रिया-सेवितचरणारविन्दः, कमलयोनिरिव वेदवादनिरतो महेश्वर इव सत्यादरपरायणः, सुपूतस्वभावोऽपि कृष्णचरितानुरक्तः परमैश्वर्य्यसम्पन्नोऽपि सन्न्यासकृतादरः, परित्यक्तसर्वसङ्गोपि साधुसङ्गानुरागी, समुन्मुक्तबन्धनोऽपि नित्यमोक्षानुसन्धानपरः, सत्कुलप्रसूतोऽपि कौलीन्यरहितः, समुन्नतात्माऽपि प्रकटितविनतिः, कृष्णावतारतया प्रख्यातोऽपि गौरशरीरः, सदाशयः, सदाश्रयः, सज्जनानुगतः, सन्मार्गप्रवर्त्तको विश्वम्भराभिधेयो, विश्वजनीनकर्म्माऽपगतमोहावरणतया चैतन्येत्यन्वर्थनामा, नित्यानन्दासक्तहृदयः श्रीगौरांगः किल चतुर्द्दशशत-शकाब्दे माघमासीयपौर्णमास्यां जन्मग्रहं कृत्वा कृत्स्नमेव मनुष्यलोकं पावयामास। चण्डीदासस्तु तस्मादपि पूर्व्वं प्रादुर्भूत इति चैतन्यचरित-नामधेयात् पुस्तकादवगम्यते। तथाहि—

"गीतानि विद्यापतिचण्डीदास-
कृतानि, कर्णामृतमेव नित्यम्।
श्रीगीतगोविन्दमसौ पपाठ
रामेण चानन्दपरेण सार्द्धम्॥"

चैतन्यचरिते सन्त्यन्यान्येवंविधानि वचनानि येभ्यश्चण्डीदासस्य श्रीचैतन्यप्रागभावित्वं प्रतीयते।

वस्तुतश्चण्डीदासजन्मदिनावधारणप्रत्यक्षप्रमाणाऽसद्भावतयैवमनुमानप्रमाणमाश्रियतेऽस्माभिः। विद्यापतिचण्डीदासयोरेककालवर्त्तित्वं पूर्व्वं सप्रमाणमुपदर्शितम्। विद्यापतिश्च श्रीचैतन्याविर्भावात् प्रायः

षष्टिवत्सरपूर्व्वं भुवि प्रादुरभूत्ततश्च चण्डीदासोऽपि तदानीमेव प्रादुर्भूतः। एवं १३३९ शकनरपत्यतीताब्दे चण्डीदासस्य प्रादुर्भाव इति सोमप्रकाश-पत्रप्रेरकलेखो न सम्यङ् मिथ्या भवितुमर्हति।

चण्डीदासोहि ब्रह्मण्य-सौजन्यदयादाक्षिण्याप्रतिहततेजःसम्पन्नतादिगुणग्रामप्रथितमहिम्नि, वेदवेदाङ्गादिविविधशास्त्रकलाकलापाभ्याससंवर्द्धितगरिम्णि, प्राप्तात्मोन्नतिसीम्नि, सदासदाचारानुसरणवर्द्धितगौरवे, समन्तात् प्रसृतदिक्चक्रवालाचंक्रमणनिपुणपुण्ययशःसौरभे, महाप्रभावोज्ज्वले, महीयसि वारेन्द्रब्राह्मणवंशे; महामणिरिव सद्वंशे, कमलयोनिरिव नारायणनाभिपङ्कजे, प्रफुल्लपङ्कजनिवह इव पद्माकरे, चन्द्रमा इव क्षीणसागरे प्रसूतः। तस्य पितरौ खलु शुद्धिमत्तरौ सदाचारपरायणावपि न नाम्नाभिज्ञातौ, न वा तयोरन्यत् किमपि विशेषवृत्तं लभ्यते।

अस्ति खलु नान्नूर-ग्रामाधिदेवता, बहुप्राचीनसमयप्रतिष्ठिता, सुरासुरनरकिन्नरगन्धर्व्वविद्याधराद्यशेषचराचरचूडामणिचक्रमरीचिमालानुरञ्जित-चरणनखाग्रा, ब्रह्मर्षिदेवर्षिमहर्षि-राजर्षि-प्रभृति-मुनिवृन्दवन्द्यमानचरणा, दीनशरणा, शशिमौलिवक्षःस्थलाधिष्ठाना; प्रतिष्ठा जगतां, गरिष्ठा गुरूणां, वरिष्ठा देवतानां, दात्री चतुर्वर्गसम्पदां, धात्री ब्रह्माण्डमण्डलस्य, प्रसवित्री भुवनानां, निर्गुणापि त्रिगुणा, अवाङ्मानसगोचरापि जगद्धितप्रकटितविविधदृश्यरूपा, महामायाऽपि चिन्मयी, करालवदनापि प्रसादसुमुखी, दैत्यकुलदलननिष्ठुरापि करुणामयी, सर्व्वभूतप्रकृतिरप्यप्रकृतिरजाऽपि देवहितकृतजन्मपरिग्रहा, जगदन्तहेतुरप्यनन्ता, षोडश्यपि वर्षीयसी, भुवनैश्वर्य्यपि छिन्नमस्ता, सिद्धविद्यास्वरूपाप्यविद्या, सौम्यतरापि महाघोरा, महेश्वरी, महाशक्तिर्महाप्रभावा

चतुर्भुजा 'विशालाक्षी' नाम। यस्या 'वाशुलीति, ग्राम्यं नाम।

चण्डीदासस्त्वाबाल्यात्तां सृष्टिस्थितिप्रलयकारिणीं, महाकालहृदयनिलयां, स्वग्रामाधिदेवतां जगन्मातरं भगवतीं विशालाक्षीं मद्यमांसधूपदीपाद्युपचारैः सम्पूजयन् कौलव्रतं प्रतिपेदे। लेभे च तस्या अघटनघटनापटीयस्या ...भ्रूनटनविपर्य्यासिताखिलदैत्यसम्पदोऽङ्गुलीस्फोटनर्त्यमानानन्तब्रह्माण्डचक्रायाश्चक्रपाणिहृदयाधिष्ठितमहालक्ष्मीस्वरूपाया भगवत्या विशालाक्ष्याः प्रसादाद् भुवनजनमनोहारिणीं श्रवणसुधानिष्यन्दिनीं मधुरां मधुररसभावसमुज्ज्वलामतिमहतीं कवित्वशक्तिम्। अथवा यस्याः प्रसादात्—

"प्रकाशः श्रीभानावमृतकिरणे चाऽमृतचयः
प्रदीप्तिः सा वह्नौ कुसुमनिकरे वा मधुरसः।
जले जाड्यं वेगा मरुति निनदो व्योमनि तथा
समुत्साहो वीरे कुलभुवि च लज्जा प्रभवति॥"

तस्या एव सर्व्वशक्तिमूलप्रकृतेः सर्व्वेश्वर्य्याः कृपाकटाक्षप्रभावाद्यदि नाम पुराणकविमुखसम्भूतविप्रवंशकरीरस्य चण्डीदासस्य कवित्वशक्तिरुज्जिजृम्भे, किमत्र वैचित्र्यम्। अथवा यस्याः प्रसादात् पर्य्यायापात ऋतूनां, ग्रहाणां निरालम्बे पथि भ्रमणं, पद्मानां सूर्योदयसमुल्लसनं, कुमुदानां शशिनि भावानुबन्धश्चक्रवाकमिथुनानां दिवसेषु संयोगो निशासु विघटनञ्च, कोकिलानां पञ्चमस्वरो, मयूरपिच्छानां वैचित्र्यं, भ्रमराणां कलगुञ्जनं, मृगाणां मौग्ध्यं, सिंहानां विक्रमः, किञ्च जलधरपटलेषु तडितां विलसनं, सागरनिकरेषूत्तालोर्मिमालाकल्लोलः, काननभूमिषु प्रफुल्लपुष्पहासिनीनां लतानां ललितचेष्टनानि,

विलसन्त्येवमुबावचास्ते ते भावा भुवनेषु, सिद्धविद्यायाः सिद्धेश्वर-हृदयवासिन्याः, सिद्धदातृप्रसविन्याः प्रसादाच्चण्डीदासस्य कवित्वशक्ति-सिद्धेरुल्लासं प्रति किं नाम चित्रमसम्भवो वा। सा पुनः परमवैष्णवी चण्डीदासायैवं लोकोत्तरचमत्कारिणीं काव्यनिर्म्माणशक्तिं समर्प्य विष्णोः पूर्णावतारस्य भगवतो वासुदेवस्य मधुररसललितामशेषवैष्णवप्रीतिकरीं वृन्दावनलीलां कवयितुमादिदेशेत्यपि प्रचरति किंवदन्ती।

श्रूयते च चण्डीदासो नाम अन्त्यजागमनस्य कौलाभिमत-सिद्धिलाभाऽसाधारणसाधनतया वा, प्रेम्ण उच्चनीचजातिविवेकापहरणसमर्थतया वा, धैर्य्यापहरणनिपुण-पुष्पबाण-बाणपातजनितघोरमोहान्धकारकरणातितीव्रोत्तेजनया वा, रूपैकपक्षपातियौवनसुलभानुराग-प्रबलतया वाऽनवरतमद्यपानोत्पादितगुरून्मदतया वा, स्वप्रणयास्पदीभूत-रजक-तनयाया दृष्टिमात्रचित्तोन्मादकासाधारणरूपलावण्य-सम्पदा वाऽप्रतिरोध्यनियतिनियोगदुरुल्लङ्घ्यतया वा केनाप्यपरेणानिर्व्वचनीयेनाव्यक्तेन मनुजबुद्धिदुर्ब्बोधेन कारणेन वा कस्याश्चिद् रामीत्यभिधायां रजकयोषिति जातानुरागो वंशमर्य्यादामगणयन् गुरुजनमर्य्यादामनपेक्षमाणः समाजनियमेषु चरणाघातं कुर्व्वन्, बन्धुजनवचनान्यवधीरयन्, शास्त्रोपदेशमशृण्वन्; हितवचनान्यनाद्रियमाणः कौलीन्यादबिभ्यदवधीर्य्य सहृदनुरोधमुच्छिद्य समाजबन्धनं समुन्मूल्य जातिभेदव्यवस्थामनादृत्य सदाचारं, धर्म्माय जलाञ्जलिं दत्वा, स्वगृहं स्वजातिं, पितरौ, बान्धवान्, बालमित्राणि कुटुम्बकान्यन्यांश्चाबाल्यसंस्तुतान् स्वजनानेकपदे परिहाय तामेव चिरसङ्गिनीं प्रणयिनीं चकार। पुनः पुनर्बहुशोऽनुरुध्यमानोऽपि न स्व-

जातीयां कामपि कन्यकामुपयेमे। रात्रिन्दिनं तस्या एवावासे तिष्ठन् तदन्नमुपभुञ्जानः कालमतिवाहयामासेति।

इत्थं रजकीसंसर्गदूषितस्याधःपतितस्य जातिभ्रष्टस्य समाजच्युतस्यापि तस्य मुखादनर्गलं सुरधुनीव निखिलजनपावनी कलिकलुषहारिणी, सुरसोल्लासिनी निर्म्मला च; कुलकामिनीव विशुद्धभावा निरवद्यपदन्यासा, सुमधुरवचना, महाजनसमादृता च; वृन्दावनगोपकामिनीव कृतहरिप्रेमा, कृष्णचरितादरवती, सदा हरिगुणगानपरायणा च; ओजस्विनी, माधुर्य्यवती, प्रसादबहुला, प्रकृतिरिव समत्रिगुणा; ज्योत्स्नेव सुधासारवर्षिणी निरवद्या समुज्ज्वलरूपा, गम्भीराशया कवितावली प्रत्यहं निःसृत्य निःसृत्योपरञ्जयामास जनानां चेतांसि। या खल्वद्यापि चण्डीदासस्यामरलोकारोहणसोपानपरम्परेव, समुन्नतकविलोकविजयवैजयन्तीवानश्वरपवित्रमूर्त्तिमत्कीर्त्तिराशिरिव वरीवर्त्ति, चरीकर्त्ति चामृतमयीव सुधाकरद्रवधारेव, श्रवणयुगलेषु सुधासारवर्षणम्। प्राचीनतमाऽपि, समयकृतानेकावयवविकृतिरपि च या नवीनेव सरभसमाकर्षति नभ्यसभ्यजनानामपि हृदयानि। किम्बहुना प्रशस्तिवादेन समुचिततालल्याश्रितमधुरस्वरसंयोगेनेदानीमपि गीयमानां यामुपश्रुत्यातिकर्कशान्तःकरणानां दुरात्मनामपि द्रवीभवति हृदयं, विगलति चानर्गलं प्रेमाश्रुधारा।

ततस्तत्कविता-रसाकृष्टचेतसो बान्धवाः स्वजातयश्च तं पुनः स्वगृहमानेतुं तत्पितरावनुरुरुधुः।

अथ मात्रा बहुप्रार्थनया स्वगृहमानीतश्चण्डीदासः स्वजातीयैः सादरं गृहीतोऽभवत्।



## यमं प्रति सम्भाषणम्

अयि भो विवस्वत्कुल-पुण्यसरसी-पुण्डरीक, पुण्डरीकाक्ष, प्राणप्रियातिथे, भगवन्, वैवस्वत, यम ! नमस्ते ।

भगवन् यथा यथा मे वयसः परिणतिर्भवति, सम्पूर्य्यंते च कर्णमूलादारभ्य क्रमेणालिपटलश्यामलमसृणकुन्तलकलापमुन्मूल्य्य समूलं प्रफुल्लकाशकुसुमस्तबकसहोदरैर्मूर्त्तैरिव युवजनकृतोपहसितैर्ग्रासायतास्यासन्नमृत्युरदप्रभोपचितधावल्यैरिव पलितैर्निखिलः शिरोभागः, समाकीर्यन्ते च दुर्भेद्यमृत्युपाशरज्जुभिरिव स्थूलस्थूलशिराभिः सर्व्वाङ्गानि, दृश्यन्ते चाजन्मकृतासंख्यमहापातकगणनाबिन्दव इव च तिलकान्यवयवेषु, शुष्यति प्रतिदिनं वार्द्धक्यपीतसारमिव शरीरं, नश्यति बलं, भ्रंसते दृष्टिः, श्रंसन्ते शरीरबन्धनानि, क्लिश्यति च दुःसहाधिव्याधिजनितयन्त्रणाभिरन्तःकरणं, तथा तथा त्वामेव परमं मित्रं, चरमञ्च विश्रामस्थानन्तथाऽनुपमनिर्व्वाणनिकेतनं जानामि। यतो भवदायत्तीकृतानां जीवानामेकपद एव विरमन्त्याजन्मानुभूतान्यशेषसंसारदुःखानि, शान्तिमुपैति निरयानलवन्निरन्तरं जाज्वल्यमाना दारुणान्तस्तापकरी विषयतृष्णा, निवर्त्तन्ते निखिलापमानपराभवादिप्रभवाः क्लेशाः, विश्राम्यत्यतिदुर्द्दमः शोकावेगः, विलीयतेऽतिदुःसहा पीडाव्यथा, शाम्यन्ति क्षुत्पिपासादयोऽशेषयन्त्रणाहेतवः शरीरधर्म्माः, शान्तिमायान्ति नितान्तखेदकारणानि शारीरचेष्टितानि, तिरोधानं प्राप्नुवन्ति च कामादयो दुर्ज्जेया रिपवः।

सुधानिष्यन्दिनीभिश्चन्द्रिकाभिः, सुशीतलधीरसञ्चारिसुगन्धिसमी-

रगैरनवरततुषारासारसेवनैः, सचन्दनोशीररसार्द्रनलिनीदलव्यजनैश्च यस्य रात्रिन्दिवं समं प्रज्वलतोऽन्तस्तापस्य नांशतोऽपि निर्व्वापणं भवति, भवत्सुकोमलकरकमलस्पर्शमात्रेणैव तत्क्षणमन्तर्द्धत्ते सोऽत्युग्रोऽप्रतिकार्य्योऽन्तस्तापः। सुविज्ञभिषग्वरानवरतचिकित्सनेन, नानाविधवीर्य्यवद्रसायनाद्युपसेवनेनानेकप्रकारमुष्टियोगप्रयोगेण च यस्य रोगस्य नोपशमो भवति, तथाविधात्युत्कटस्यातिमहतो दुःसाध्यस्य रोगस्य भवानेक एव प्रशमयिता। यस्य खलु कामस्याविरताभीप्सितवस्तूपभोगेन न प्रशमो हविषा कृष्णवर्त्मन इव प्रत्युतोपचयो जायते, भवति सन्निहिते, न जाने, कुत्रासौ विलीयते कामः। एवमन्ये च क्रोधादयो दुष्प्रतिकारा दुःसाध्या दुरायत्ता नित्यक्लेशहेतवो रिपवो भवत्सन्दर्शनव्यतिकरमात्रत एव सम्यगन्तर्हिता भवन्ति, निवर्त्तन्ते च हिंसाद्वेषेर्ष्यासूयाप्रमुखा बहुक्लेशकारिण्यो वृत्तयो भवतो भीषणकवलव्यादानमालोक्यैव स्वस्वव्यापारेभ्यः। किम्बहुनोक्तेन येषां खलु क्लेशानामुपशमाय न मन्त्रो नौषधं, न नयवेदिनां कौशलं न भिषग्वर्य्याणां बुद्धिनैपुण्यं, न गुरूपदेशो, न सुहृदां हितसम्भाषणं, न शान्तिक्रिया, न स्वस्त्ययनं, न मङ्गलानुष्ठानं, न वा शास्त्रविधानं प्रभवति, तेषामनिर्व्वार्य्याणामपरिहार्य्याणामप्रतिविधेयानां क्लेशानां त्वमेव सद्यः प्रशमयिता। ततस्त्वमेव मे परमो बन्धुः, परमं विश्वासपात्रं; नास्ति भवादृशः कोऽप्यपरो यो ह्येवं हितं विदधाति, यस्मिन् वा हृदयस्यैवं प्रेम, विश्वासो वा जायते। अथवा न केवलं मम, किन्तु सर्वेषां जगतां सुरासुरनरकिन्नरगन्धर्व्वाप्सरोविद्याधरप्रमुखाणां यावतामेव प्राणिनां सर्व्वक्लेशप्रशमनहेतुः, चरम आश्रयः, परमो बन्धुश्च। तत एव जनाः

पितरं, मातरं, भ्रातरं, पुत्रं, कलत्रं, मित्रं, पतिं, स्वामिनं, सुहृदो, बान्धवान्, स्वजनान्, सर्वंश्यानन्यानपि प्राणेभ्योऽपि प्रियतमाना-बाल्यसंस्तुतानात्मीयजनान् भवदन्तिकं संप्रेष्य निश्चिन्ता निराकुला-स्तिष्ठन्ति।

तथाहि येन सहाबाल्यमेकविधोपभोगेनैक्यं हृदयस्य सञ्जातं, यस्य चरणतले कण्टकाग्रसूचीविद्धेऽपि मर्म्मणि मे तीक्ष्णायसशंकुरोपण्यथा बभूव, यस्य स्वल्पायामपि शिरोवेदनायां जातायां मम मृत्युयन्त्रणैवो-पतिष्ठतेस्म, यस्य क्षणमप्यदर्शनेन हृदयं बहुविधामङ्गलचिन्तनैरधिकृतं, भृशं कातरं, नितान्तमधीरमेकान्ततो व्याकुलश्चाभवत्, येन समं क्षणार्धमात्रं वियोगोऽपि महायासकरो दुर्विषहक्लेशहेतुरभूत्, सर्व्वञ्च तन्मयमभवज्जगत्। यस्मिन् केनाप्यनिवार्य्यकारणेन स्थानान्तरं प्रस्थिते, दृष्टिः केवलन्तदागमनपथमुदीक्षमाणा निमेषपातमपि महान्तं क्लेशकरममन्यत, हृदयन्तु सर्व्वात्मना तेनैव सह प्रस्थानमकरोत्। यश्च विदेशप्रत्यागतस्य मम सर्व्वप्रथमाभिकांक्षितदर्शन आसीत्। किम्बहुना योऽस्मिन् जगति रमणीयतमेभ्योऽपि रमणीयतमः, प्रियतमेभ्योऽपि प्रियतमः, प्राणानां प्राणाः, हृदयस्य हृदयं, इन्द्रियाणामिन्द्रियं, द्रष्टव्यानां सारभूतश्चासीत्। यस्य तृप्तौ मनसः परमा तृप्तिरानन्दे परमानन्दः, स्वल्पमात्रानिष्टापातशङ्कायामपि जगच्छून्यं, दिशश्चातिघोरतमसा संवृता बभूवुः। यस्मिन्नशेषस्वजनपरिवृते, मातृक्रोडमधिष्ठितेऽपि कार्य्यवशात् प्रोषितस्य मम मनसि प्रतिक्षणं गरीयसी पापाशङ्का प्रादुर-भूदीदृशं कनीयांसं ( सोदर्यं ) भवद्धस्ते यावत् समर्पितवान्, तावदेव निवृत्ता तद्विषयिणी सर्व्वविधाऽनिष्टशङ्का, नास्य क्लेशैरन्तःकरणं

क्लिश्यति, नास्य वृथानिष्टपातं परिकल्प्य व्याकुलीभवति हृदयं, तेन किं भुक्तं, किं पीतं, कथमेतावन्तं कालमभुक्त्वैव तिष्ठत्यसौ, कथं न मां सम्भाषते, कथमस्य मुखच्छविर्मलिना विभाव्यते, किमपराद्धमस्य मयाऽन्येन वा, किंस्विदस्य कापि पीडा संवृत्ता, अथवाऽन्यत् किमप्याधिकारणं संवृत्तं; कथमसौ स्नानार्थं निर्गतोऽद्यापि चिरयति; कथमद्यापि विद्यालयान्न प्रत्यावृत्त इत्येवं प्रकारैरपरविधैश्च चिन्ताशतैर्न चित्तमधिक्रियते, नापि तदागमनपथमुदीक्षते निर्निमेषं कातरा दृष्टिः।

एवञ्च या स्नेहमयी, वात्सल्यमयी, मङ्गलमयी, दयामयी जननी निरन्तरं ममैवाधन्यस्य शुभकाम्ययाऽतिदुष्करकठोरव्रतोपवासनियमपरिचर्य्यया शरीरशोषमकरोदनवरतमाविर्भूतदैवततया प्रसिद्धेषु देवतायतनेषु, मदर्थमुपयाचितकं कुर्व्वाणा विमुक्तस्नानाहाराद्यशेषव्यापाराऽगणितशरीरपाताऽविदितदुःसहायासा, निर्व्विकारा, निरावरणभूमितलेषु निषण्णाऽनन्यहृदया दिनान्यनैषीत्। या कुतोऽपि विचलिते खलु मदीयकेशाग्रे विषण्णा, दीनाऽश्रुप्लुतनयना, नानानिष्टान्याशङ्कमानाऽनेकविधैरुपचारैर्देवानर्च्चितवती, समर्पितवती च तेभ्यः स्वहृदयं विदार्य्य रुधिरधाराः। या स्वादूनि मिष्टानि च भोज्यानि स्वयमभुक्त्वैव मदर्थं यत्नतो ररक्ष। मद्भोजनार्थं या स्वयमभुञ्जानाऽतिष्ठन्मम समुन्नतिहेतोर्या सर्वदा देवतानां पुरतः प्रणनाम, मदीयसुखसाधनार्थं या दुःखशतानि सेहे, मत्क्लेशपरिहाराय या क्लेशबहुलानि कर्म्माणि चकार। मज्जीवनार्थं यात्मजीवनं तृणाय मत्वा परित्यक्तुमुद्यतासीत्। किम्बहुना, या हि वक्षःस्थलस्थितमपि मां सुगाढमाश्लिष्याधिशाय्येऽप्यालब्धमपि करतलेन मुहुः संस्पृश्यावलोकितवती, सुखनिद्रितस्यापि मम-

नन्यमना निश्वासानां गतीः परीक्षाञ्चकार। अयि भोः कालिन्दी-प्रियसहोदर महानुभव यम! ईदृशीं स्निग्धां, मधुरां, मदेक-हितां, गुरूणां प्रथमां, कल्याणानां मूलं, मातरं तव हस्ते समर्प्य सुखं जीवामि, निश्चिन्तं निद्रामि, सर्व्वथा तां विस्मृत्य स्थितोऽस्मि।

इत्थं ज्ञातयः, कुटुम्बकानि, शैशवादारभ्य यैः सहाऽऽहारविहारादीनकरवं, ते पि, चिरसंस्तुता अभिन्नहृदया बाल्यसुहृदो बान्धवा मित्राणि, प्रतिवेशिनः सर्वे एव परमात्मीया यथा यथा क्रमेण भवदन्तिकं प्रस्थितास्तथा तथैवाऽहं तेषु निश्चिन्तः संवृत्तः। अथवा न केवलमहमेकः सर्वे जना भवद्धस्ते स्वजनान् समर्प्य सर्व्वथा निश्चिन्ता भवन्ति। पितरौ पुत्रं, स्वामी कलत्रं, भार्य्या पतिं, पुत्रः पितरौ, सुहृदो बान्धवान्, मित्रं मित्राणि, तव भवनं संप्रेष्य तान् प्रति निश्चिन्तास्तिष्ठन्ति। तत एवोक्तं भवान् सर्व्वेषां सर्वचिन्तापहारी, सर्व्वक्लेशनिवारकः परमं मित्रमिति। यं प्राणाधिकप्रियतममात्मजं जनयिता कुत्राप्यन्यत्र संस्थाप्य न चिरं स्थिरो भवति, व्याकुलहृदयेनाशङ्कते चास्य बहुविधानि पापानि, तस्मिन्नात्मजे भवदन्तिकं गते नासौ तदर्थं चिन्तयति, नाशङ्कते चास्याशुभानि। यां रूपलावण्यसमुज्ज्वलां, सर्व्वावयवनिरवद्यां मितभाषिणीं स्मितमुखीं लज्जोज्ज्वलभूषणां कुलपावनीं गृहलक्ष्मीरूपां भार्य्यां स्वपितृगृहेऽपि संप्रेष्य भर्त्ता वीतधैर्य्यो व्याकुलहृदयस्तस्या बहुविधानि, सम्भाव्यासम्भाव्यान्यप्यशुभानि चिन्तयन् दुःखदुःखेनैव समयमतिवाहयामास। तां प्राणेभ्योऽपि गरीयसीं महनीयचरितां परमौदार्य्यशालिनीं प्रेममयीमनुरागमयीं छायामिव स्ववृत्तानुसारिणीं द्वितीयजीवितस्वरूपां

पत्नीं तव करकमले विसृज्य सर्वथा निश्चिन्तो भवति स्वामी। ततोऽभिहितं मया भवानेव प्राणिनां परमं विश्वासभाजन मिति।

भवान् परमो बन्धुः, परमं निर्वृतिस्थानमित्यत एव सर्व्वे भवन्मन्दिरं प्रस्थातुमुद्युक्तास्तिष्ठन्ति; प्रयान्ति चाहरहरहंपूर्विकया सङ्ख्यशः कोटिशो जन्तवः। तदेकमात्रालम्बनौ वात्सल्यात्तन्मयजीवितौ स्नेहार्द्रौ वृद्धौ मातापितरावगाधदुस्तरशोकसागरे निक्षिप्य तयोः करुणार्त्तपरिदेवितान्यनपेक्षमाण आजन्मनस्तयोः सर्व्वप्रयत्नोपलालितान्यगणयन् स्वसंवर्द्धने तयोः प्राणपणप्रयत्नायासक्लेशान जानन् स्वच्छन्दं भवन्मन्दिरं प्रयाति पुत्रः। तथा स्वहृदयरहस्यप्रकाशैकपात्रीं निरन्तरं मनोवाक्कायकर्म्मभिस्तदेकशर्म्मविधात्रीं निरवद्यगात्रीं साध्वीनामादर्शभूतामनन्यहृदयामनन्यशरणां पत्नीं दुःसहशोकविधुरां कुर्व्वन्तो भवदन्तिकं परमाग्रहेण गच्छन्ति भर्त्तारः। इत्थं स्वजनान् स्वबान्धवान्, स्वासक्तजीवितान्, परिजनानाबाल्योपचितासीमप्रेमपात्राणि, मित्राणि, चिरप्रयत्नैः सञ्चितानि धनानि, बहुप्रयत्ननिर्मितानि हर्म्याणि सर्वाणि च सौख्यकारणानि वस्तुजातान्येकपदे तृणवत् परिहृत्य भवत्पार्श्वमभिप्रतिष्ठन्ते मानवाः। गत्वा च तत्र न प्रत्यावर्त्तनस्य नामापि कुर्वन्ति। तत् कथय कीदृशं लोकोत्तरचमत्कारास्पदं भवनमन्दिरम्? कीदृशं मधुरं हृदयाकर्षि वा भवत्सम्भाषणं? ययोर्दर्शनश्रवणविमोहितमनसो मानवाः सर्व्वमेकपदे विस्मृत्य भवत्सकाशमधिवसन्तीत्यलम्। नमस्ते—



# परिशिष्टम् *

## यमराज-विचार-प्रहसनस्य

### नान्दी

"जनानां रोगादिप्रभवमशुभं हन्तुमिव यः
स्वयं नासाबद्धो नगरपरिषच्छासकबलात् ।
अमेध्यान् दुर्गन्धान् वहति मलभारान् स भवता-
मशेषं कल्याणं दिशतु सततं धर्मवृषभः ॥"

### प्रस्तावना —

सूत्रधारः—अलमतिविस्तरेण, आदिष्टोस्मि खलु नानादिग्-देशसमागतैस्तत्रभवद्भिः सामाजिकैरार्य्यमिश्रैर्यदद्य किल 'विद्योदय'-जन्मदिन-महोत्सवसमवेतानामस्माकमध्वखेदविनोदाय नयनयोः प्रीतिप्रदं किमप्यभिनवं प्रहसनमभिनीयतामिति । तत्किमत्रानुष्ठेयम् ? (स्मृतिमभिनीय) आं ज्ञातम्, अस्ति खलु "यमराजविचारं" नाम किमप्यभिनवं गभीर-हास्यरसोल्लासितञ्च प्रहसनं, तदेवात्र प्रयोक्तव्यम् । (नेपथ्ये कलकलः) श्रुतिमभिनीय—अये ! क नु खल्वेते पौरजानपदाः समवेताः परस्परमुखैः किमपि मन्त्रयन्तः प्रतिष्ठन्ते ।

---

* विद्योदय-प्राचीनाङ्केषु क्रमशः प्रकाशितानां पठनीयानां कतिपय-प्रबन्धानामंशविशेषास्तत्तत्प्रबन्धसौष्ठव-प्रदर्शनार्थं दिङ्मात्रमत्रोदाहृताः । सति सम्भवे प्रबन्धमञ्जर्या द्वितीयखण्डे यथोपलब्धान् कात्स्न्येन तान् प्रकाशयितुमभिलषामः । (सम्पादकः)

भवतु, पृच्छामि तावत् ( आकाशे ) अयि भोः भवन्तः पौरजानपदाः ! कुत्रैवं समवेताः प्रस्थिता यूयम् ? ( पुनराकाशे कर्णं दत्वा ) किं कथयत, अद्यारभ्य दिनचतुष्कं यावत् कालिकाता-राजधान्या-महिफेन-सेवनविरोधिनां क्वापि महती सभा भविष्यति, तत्परिदर्शनार्थमिति। तद् गच्छन्तु भवन्तः, ममापि तत्र जिगमिषा वर्त्तते। ( पुनर्नेपथ्याभिमुखमवलोक्य ) अये अपरावेतौ नगरवासिपुरुषौ मिथः किमपि मन्त्रयन्तावित एवाभिवर्तेते। तदेकान्ते भूत्वा शृणोमि तावदेतयोः प्रजल्पनमिति तथा करोति। ( प्रस्तावना )

× × × ×

वैतरणी-तीरम्

( प्रविश्य नारदः ) अये ! एषा सा वैतरणी ! तथाहि—

"घोरावर्त्तविवर्त्तनव्यतिकराघूर्णत्प्रवाहोच्छलद्-
व्यात्तास्योग्रगजाभनक्रमकर-श्वासाग्निसन्धुक्षणैः।
तप्तोत्ताल-तरङ्ग-रिङ्गित-महाकल्लोल-भीतिप्रदा
दुष्पारातिगभीरविस्तृततनुः क्षारोष्णनीराकुला ॥"

नास्त्यस्यास्तरणे कोऽप्युपायः। यतः—

"होम्मिला-प्रमुखैरस्या जलयानोपजीविभिः।
तरणे शक्यते नैव कर्त्तुं किमपि साधनम् ॥"

किञ्च

शतद्रुश्चन्द्रभागा च विपाशाऽन्याः सरिद्वराः।
बद्धा यैः सेतुभिस्तेऽपि नात्र कर्त्तुं किमप्यलम् ॥"

( परितः सदृष्टिक्षेपम् ) अहो एते स्वल्पसंख्याः पातकिनोऽस्याः

पारं गन्तुं कमप्युपायमलभमाना दश दिशः शून्या इव पश्यन्तोऽविरलगलदश्रुधाराप्लावितभूमिभागा दीनाननाः पुलिनभूमौ दण्डायमाना यमभटैर्निर्दयन्ताड्यन्ते तीव्रकशाभिरन्ये च वैतरण्याः स्वरूपं दूरतोऽवलोक्यैव सत्रासं सोत्कम्पं, सकरुणं रोरुद्यमानाः पलायितुमिच्छन्तो बध्यस्थानं पशव इव नीयन्ते सबलात्कारं यमदूतनिकरैस्तदभिमुखम्। अपरे तप्तबालुकाकीर्णतीक्ष्णाग्रकण्टकिवन-परीतकान्ताराक्रमण-परिश्रमशुष्कतालवो दुःसहपिपासाक्षामकण्ठा दूरात् सरितमिमामालोक्य सवेगं, ससम्भ्रमं, सोत्साहं, सानन्दं समेत्य च यावदञ्जलिभिः पयांस्यस्याः पिबन्ति, दूरेऽस्तु तावत्तृप्तिलेशोऽपि क्लेशांस्तु सहस्रगुणाननुभवन्ति, समुद्वमन्ति च तत्क्षणमेव पूर्वजन्मसहस्रपीतमातृस्तन्यावध्युदरान्तर्गतयावद्वस्तुजातम्। अन्ये चैते त्रासविकम्पितसर्वावयवाः "त्राहि त्राहीति" सकरुणमुच्चैराभाषमाणाः सर्वविधमनुनयं कुर्वाणा अपि यमभटै रज्वा दृढं बद्ध्वा बलादाकृष्य वैतरणीस्रोतसि निपात्य च पारं नीयन्ते; अहो! नैवंविधानां संख्यापि तावद्विरला, तथाहि मत्स्यपूर्णह्रदजलानि कृमिभिरिव व्याप्तान्यमीभिर्वैतरणीसलिलानि न स्वरूपतो विभाव्यन्ते! (दूरतो दृष्टिं निक्षिप्य) अये! एतानि पुनः सधूमजलयानानीव कान्यप्यसंख्यानि प्रवहणानि निरन्तरं वैतरणीमुत्तरन्ति, किमिदम्? अपि किं वैतरण्या अप्युत्तरणे यानानि परिकल्पितानि? तत्किमेते पातकिनो यमभटैः सलिले निपात्य बलादाकृष्य नीयन्ते? भवतु, पृच्छामि तावत्। (आकाशे) अयि भो भद्रमुखाः! कुतोऽत्र जलयानाविर्भावः? अपि च सद्भावेऽप्यमीषां कथं वा भवद्भिरेते पातकिनो वैतरणीसलिले निपात्य बलादाकृष्य नीयन्ते? (श्रुति-

मभिनीय ) किं कथयत, कलिकालसम्भूतानामभिनवाभूतपूर्वमहापाप-कारिणां कृते वैतरणीसलिलादपि क्लेशप्रदानि तप्तायःपरिकल्पितानि प्रवहणानुकल्पानि खल्वेतानि ; येषां पातकानि नेयत्तयाऽवच्छिद्यन्ते, येषां शरीरसम्पर्कात् वैतरणीसलिलस्यापि दूषणाशङ्का भवति, त एवात्रारोप्य नीयन्ते इति। युज्यते, अहो एषां संख्यापि नाल्पीयसी, सत्यमेव कलौ यमराजस्य महीयसी समृद्धिः सञ्जाता, यदा वैतरण्यामेवंविधा जनता, न जाने तदा यमपुरीमध्ये कीदृक् सम्मर्दः सञ्जातो यतः प्रत्यहमेव तत्रैवंविधो जनसमागमो भवति, न चैकस्यापि निष्क्रमणम्। भवतु, द्रक्ष्यामि तावत्।"  ×  ×  ×

×  ×  ×  ×  ×



दुर्गानन्दस्वामिन

# आत्मवायोरुद्गारः

## ( Auto-biography of Durgananda Swami )

### ( कथं नाहमवतारः )

सम्प्रति बहवो निजजन्मभूमिसमुज्ज्वलरत्नभूता महान्तः परकल्पितेषु स्वचरितेष्वङ्गहानीः सम्भाव्य स्वयमेव मानवमण्डलेषु कृपापरवशाः स्वचरितानि लिखित्वा प्रकाशयन्ति। इत्थं स्वलिखितं स्वचरितनिबन्धं खलु इङ्ग्लण्डीयाः 'आटो-वायोग्राफि'-माचक्षते। 'आत्मवायोरुद्गार' इति यस्य संस्कृतः प्रतिशब्दः।

मूढाः खलु शास्त्रप्रणेतारः पुराणमहर्षयो ये स्वनाम्नोऽपि स्वयं प्रख्यापनं पाप्मानं मेनिरे। सर्वदा महारण्यवासजडधियस्ते न विजानन्ति स्मात्मनात्मनाम यादृक् सगौरवं प्रकाश्यते, न तथाऽन्येति महत् संसाररहस्यम्। तथाह्युक्तं श्रीमद्भगवद्गीतायां—

"आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः।
उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ॥"

---

* शब्दशास्त्राण्यालोच्य विज्ञातं मया Auto-biography इति वैदेशिकशब्दस्य 'आत्मवायोरुद्गार' इत्येव न्याय्यः प्रतिशब्दो भवितु मर्हति। अत 'आत्म' इत्यस्य 'अत्त' इति प्राकृतं रूपं, ततश्च 'अत्त' इत्यस्य (Auto) इति वैदेशिक-विकृतिः। तथा biography इति वायोरुद्गार इत्यस्यापभ्रंश एवेति स्पष्टं ज्ञायते, यतो वायुप्रकोपं विना न कोऽपि स्वचरितं स्वयं कथयितुं प्रभूतो भवति। ( इति टीका )

संसारेऽस्मिन्नात्मतुल्यमात्मीयं मित्रं नान्यदस्ति, तत आत्मनिर्म्मितात्मचरितप्रख्यापनं यथा सम्पूर्णं, विशुद्धञ्च सम्भवति, न तथान्यकृतम्। विशेषतः सर्व्वो हि मानवः स्वमेवोपहसितवाचस्पतिबुद्धिविभवं कुशाग्रतीक्ष्णबुद्धिसम्पन्नमत एव बुद्धिमत्तमं जानाति। इह खलु मनुजैरात्मनो धनदारिद्र्यं प्रायः सर्व्वैः सर्व्वदा मुक्तकण्ठं स्वीक्रियते, यतस्तत्रादृष्टस्यैवापराधः। बहुभिः स्वशरीरसौन्दर्य्यदारिद्र्यमपि कथमप्यङ्गीक्रियते, यतस्तत्र विधातुः पक्षपातितैवैकमात्रो हेतुः, परमात्मनो बुद्धिदारिद्र्यन्तु न केनापि कदापि कथमपि स्वीकृतं भवति। पात्रे समितोऽपि कुरूपाणां धुरि स्थितोऽपि मानवो न जातु "निर्बुद्धिरसी"त्यधिक्षेपं सहेत। एवं स्थिते आत्मानं विहायात्मनो बुद्धिमत्तायाः समुचितप्रख्यापको न कदाचिदन्यो भवितुमर्हति; ततश्चापरलिखितस्यात्मचरितस्य न कथमपि सम्पूर्णता सम्भाव्यते। इति विचार्य महान्तस्तथा प्रवर्त्तन्ते। ममाप्यसाधारणं महत्त्वमस्ति; नाहं विद्वत्तया कुलीनतया वा कस्मादप्यात्मनः स्तोकमपि न्यूनत्वं पश्यामि; बुद्धिमत्तया तु सर्वेभ्यः समुत्कर्षं जानामि। ततश्चैवंविधस्यापूर्व्वरत्नभूतस्य स्वदेशोज्ज्वलशिरोरत्नस्य जन्मभूमिमहोदधेर्महागौरवास्पदकौस्तुभायमानस्य मम स्वकृतमात्मचरितं यदि न प्रख्यापितं भवेत् तदा मनुजानां साहित्यमपूर्णमेव विलयमेष्यति, सुचिरमेवेतिहासस्याङ्गवैकल्यं स्थास्यति न कदापि तथाविधातिमहल्लोकशिक्षाविधायकजीवनरहस्यं प्रकाशितं भविष्यत्येवमादि बहु विचारयन् विद्योदयसम्पादकेन च मुहुः साग्रहमनुरुध्यमानश्च स्वचरितं रचयितुं प्रवृत्तोऽस्मि। तत् सर्वे सावधानाः श्रोत्रयुगलस्य मनुष्यजन्मनश्च साफल्यं विदधतु।

अथ स्वचरितप्रख्यापने प्रवृत्तस्य मे मनसि प्रथममेव "कथमहं नावतारः ?" इत्येव चिन्ता समुदिता। सम्प्रति बहवः खलु पश्यतामेवास्माकमेकदैव पूर्णावताराः संवृत्तास्तदस्ति किम्ममैतेभ्यः किञ्चिदपि न्यूनत्वं, येनाहमपि तथा न भवेयमिति विमृशता मया वर्त्तमानाभिनवावतारेभ्य आत्मनस्तत्तद्विषयेष्वाधिक्यमेवानुभूतं, ततश्चाहमपि सम्पूर्ण-पूर्णावतार इत्यत्र कः सन्देहस्तथाहि विचार्य्यते। मत्स्य-कूर्म्म-वराहास्तु मया बहुश उदरसात् कृताः। अहमपि यदा क्रुद्धो भूत्वा गृहे नर्द्दनं करोमि, तदा गृहिणी सस्मितं मां पुरुष-सिंहं कथयति। ततो मे नृसिंहत्वे नास्ति कोऽपि संशयः। वामनेन वलि-सकाशात् सकृदेवाभ्यर्थना कृता; अहन्तु बलवन्तं वा दुर्बलं वा यं कञ्चित् सभ्यवेषं पश्यामि, तमेवाभ्यर्थयामि, नास्ति कोपि वारनियमः। ततश्च तस्मान्ममाधिक्यं न केऽनापि निह्नोतुं शक्यते। अथ परशुरामस्यावसरः, सोऽपि न मां स्पर्द्धितुमीष्टे। पितुराज्ञामधिगत्य जनन्याः शिरश्छेदं कृतवानित्येव तस्य श्लाघ्यताहेतुः, मया तु न कस्याप्याज्ञा लभ्यते किन्तु प्रत्यहं प्रतिक्षणं तथाविधानि कर्म्माणि क्रियन्ते, येषामेकैकेन कर्म्मणा पितुर्मातुर्वंशस्य स्वजनानामात्मीयवर्गस्यापि मस्तकच्छेदो भवति। तत् कथं परशुधरोपि नाम मया सह स्पर्द्धां कर्त्तुमुत्सहेत। रामस्य तु दाशरथेरवतारत्वं कथमङ्गीकृतमिति तु बहु विचारयताऽपि मया न निर्णेतुं शक्यते, यतोऽस्य न किञ्चिदप्यमानुषमाचरितं दृश्यते। यत् तु पित्राज्ञापरिपालनं नाम तद्धि सर्व्वथा बुद्धिराहित्यस्यैव परिचयः। वृद्धस्य स्त्रीवशस्य हिताहितविवेकशून्यस्य पितुर्वाङ्मात्रेणैव को नाम बुद्धिमान् ससागराधरणीराज्यं परिहाय वनं व्रजेत्।

उक्तञ्च—

"गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥" इति,

भवतु, साम्प्रतं हालिक-वाहीकानामपि यतो निर्व्वाधमवतारत्वमङ्गीक्रियते ततः सूर्य्यवंशीयराजन्यपोतस्य तस्य तथात्वस्वीकारे का हानिः । तस्य प्रधानचरितं सर्व्वथा निर्दोषायाः स्वधर्म्मपत्न्या जनापवादभयात् परिवर्ज्जनम् । तत् तु न कथमपि मदीयं कर्म्मातिवर्त्तते । मयाऽपि निर्दोषाणां स्वदाराणां जनापवादभयमन्तरैव परित्यागः कृतः । किंवानेकविस्तृतवागाडम्बरेण, एकैकाऽवतारकथोपन्यासेन । अवताराणां सर्व्वेषां साधारणधर्म्मो हि पितृभ्यामशेषक्लेशार्पणम् । अतः पूर्व्वं ये खलु अवतारा: सञ्जातास्तैः सर्वैरेव पितरावामरणं क्लेशितौ पीडितावन्ततो जीवितं परित्याजितौ च । स्मर्य्यतां तावत् परशुधरस्य जामदग्न्यस्य, दाशरथेर्वा रामस्य, वार्ष्णेयस्य वा वासुदेवस्य । ते सर्व्व एव पितरौ भृशं क्लेशितवन्तः । सत्यं, किन्तु नैतेऽत्र मामकीं शतकलामर्हन्ति । मया तु गर्भवासादारभ्यैव पित्रोरशेषः क्लेश उत्पादितः ।

बाल्ये बालचापल्यलोलं सर्व्वदैवाभिनवदुर्लभद्रव्यलाभदुर्लब्धितमजस्रमुच्चैरोरुद्यमानं क्षणमपि मातृक्रोडमपहायान्यत्रावस्थातुमनिच्छन्तमन्तरान्तरा चोत्कटव्याधिसंशयितजीवितं मां तावगणितात्मक्लेशपरम्परौ, परिहृतस्नानाहाराद्युचितावश्यकव्यापारौ, मन्मङ्गलकाम्ययाऽनवरतमनुष्ठितानेकविधदेवतोपासनामूलकव्रतोपवासकृशशरीरौ निरन्तरमदीयनानाविधानिष्टशङ्काव्याकुलान्तरौ हि पितरौ भीत-भीताविव सावधानं प्रयतमानौ, मुहुः श्लिष्यन्तौ कदाचिद्वक्षसि, कदाचिदङ्के

कदाचिच्च सन्निहितकोमलशयनीयतले निधाय विभराम्बभूवतुः। मदर्थं सर्व्वदैव तौ चिन्तानिमग्नौ शङ्कमानौ प्रायो देवतायतनेषूपयाचितकं कुर्व्वाणौ दुःख-दुःखेनैव समयमतिवाहयामासतुः। एवं यथा यथा मे संवर्द्धनमायुषः पुष्टिश्च शरीरस्याभवत् तथा तथा तयोर्दुःखमपि वेद-वृक्ष इव बहुशाखमनन्तञ्च भवितुमारेभे। ततश्च मे कैशोरे, तदनु यौवने च तेषां दुःखस्य क्रमश एव परिवृद्धिरभवत्ततस्तौ यदा जराजीर्णौ शिथिलाङ्गबन्धनौ वार्द्धक्यपीतसारतया क्षामक्षामावयवौ, भृशपरिदुर्ब-लौ, पदात् पदमपि न चलितुं समर्थौ न किमपि कर्त्तुं शक्तौ ततश्च सर्व्वथा मे गलग्रहभूतौ संवृत्तौ, तदा सनिकारं मया गृहाद् बहिष्कृतौ प्रहृतौ च। अहो! तयोः प्राणानां वज्रसारता यत् तथाविधं प्रहारं लब्ध्वापि न ते निष्क्रान्ताः। इत्थं गते साम्प्रतं तौ मध्याह्ने प्रतिवेशिनां गृहेषु पात्रेसमिततां प्राप्य जीवितशेषमतिवाहयतः। तथाऽपि तयो-र्हृदयान्न मे मङ्गलकाम्या न्यवर्त्तत। इदानीमपि मदर्थं महान्तं क्लेशम-नुभवति तयोश्चित्तं स्निह्यति चात्यर्थं मयि। यदि कश्चित्ताभ्यां दयया किमपि मिष्टमन्नं समर्पयति, तौ तु तत् स्वयमभुक्त्वा गूढं मह्यमर्पय-तः। अहन्तु तयोर्मुखदर्शनमपि न करोमि, नापि बहुशः प्रार्थ्यमानोऽपि निजमुखसन्दर्शनेन तयोरानन्दं संवर्धयामि, किं बहुना सर्व्वेषामेवाधु-नातनानां पुरातनानां वाऽवताराणां पितरौ प्रत्येवमेव व्यवहारे सत्यपि मदीयस्तु सर्व्वेभ्य एव तेभ्य उत्कर्षं नीतस्ततश्चाहमात्मनः पूर्णावतार-त्वमनुमिनोमि।

किञ्चेदानीमवतारत्वप्राप्तिरतिसुलभैव दृश्यते। जन्मावधिविषय-व्यावृत्तैकतानचित्तानुष्ठित-भगवन्नारायणचरणारविन्दनिर्व्विकल्पसमाधि-

साक्षात्कृतपरब्रह्मस्वरूपा जीवन्मुक्ततामधिगता अधिगतपरमैश्वर्य्या अपि भगवन्तः शुकनारदप्रभृतयो महर्षयो देवर्षयश्च न स्वप्नेऽप्यात्मनोऽवतारत्वं चिन्तयामासुर्नाप्यन्ये तदानीन्तनाः स्वधर्म्मादविचलितविश्वासजुषः शास्त्रवचनैकप्रमाणाः केचन मनुजास्तान् तथा कल्पितवन्तः। का कथा व्यासवाल्मीकिवसिष्ठप्रमुखशिष्टाचारप्रवर्त्तकधर्म्मशास्त्रप्रणेतॄणां करतलस्थितामलकवदखिलचराचरभूतभव्यवर्त्तमानावस्थामवलोकयतां निरन्तरतपश्चर्य्याज्जितमहौजःसम्पन्नानां महर्षि-वृन्दारकाणाम्। ये खलु सर्व्वथा परार्थसम्पादनमेव स्वार्थसिद्धिं, स्वार्थविस्मृतिमेव परमपुरुषार्थं मेनिरे। येषां चित्तं केवलं परब्रह्मणि, न वित्तार्ज्जने, वचनं नारायणगुणसंकीर्त्तने, न सामाजिकचित्तरञ्जने, शरीरचेष्टनञ्च केवलं धर्म्माचरणे, न वृथादेशपर्य्यटने संसक्तमासीत्। ये च मानवसमाजं भीषणश्वापदाकीर्णमहारण्यमिव शङ्कास्पदं, निर्ज्जनातिगहनारण्यस्थलीञ्च सुखमयीं शान्तिमयीं तथा जनसङ्गं महोद्वेगकरं, सर्व्वथा निसङ्गञ्च निरापदं विजानन्ति स्म। स्वयं परमेशोऽपि येषामभीप्सितार्थं सम्पादितवान्, येषां यथेच्छोच्चारितापि वाग् जात्वन्यथाऽनाभवत्तादृशामप्यघटनघटनापटीयसां ललाटे नाऽवतारत्वलाभोऽभवत्। ते स्वयमपि साधारणमानववदात्मानं प्रदर्शयामासुर्नावतारत्वलाभदुराशापरिचालिताः कदापीतरेभ्य आकारेङ्गितचेष्टाविशेषैः स्वस्य किमपि वैशिष्ट्यं सूचितवन्तः। शोचामि तान् दग्धभागधेयान्, यतस्ते तथाविधाभ्यसूयेर्ष्याकषायितसमये जन्मग्रहं कृत्वा वृथैव नीतवन्तौ दुष्करतपश्चरणजन्यासीमसिद्धिलाभादिकाः क्रियाः। साम्प्रतन्तु माञ्जिष्ठकषायवस्त्रमात्रधारणपुरःसर-प्रलापभूयिष्ठवचनाडम्बरेण वावतारत्वलाभो भवति। इदानीं यस्मै यो

रोचते स तस्यावतारत्वं प्रख्यापयति। असावप्यनाविष्कृतभुजद्वयमात्मानं साक्षाच्चतुर्भुजमेव मन्यमानः सर्व्वदा सर्व्वत्र तदनुरूपमेव वाग्वेषचेष्टाविशेषान् प्रकटयति। शास्त्रवचनानामात्ममतानुमोदितमभिनवमर्थं प्रदर्श्य प्राचीनव्याख्यातॄणामज्ञत्वं, स्वाचरणविरुद्धं चिरपरम्पराप्रचलितमपि शिष्टाचारमशिष्टाचारतया प्रख्यापयति, स्वमतविरोधिनो ब्राह्मणानप्यवमन्यते, पूर्व्वाचारपरिपालनपरान् पण्डितानप्युपहसति, धर्म्मोपदेशव्याजेनाधर्म्ममुपदिशति, सनातनधर्म्मसंस्थापनमिषेणाभिनवं धर्मं प्रवर्त्तयति। एवमेवं निःशङ्कं निर्भयमनिर्व्वाधं यदृच्छाचरणमेव कुरुते, सत्ययुगप्रशंसनेन कलेरेव साहायकमाचरति। किंवातिविस्तरेण, पश्यतामेवास्माकमित्थं बहव एवावताराः संवृत्तास्तत् कथमहमेवं स्वावसरं परित्यजामि, सन्ति च ममावतारत्वसम्पादनयोग्याः सर्व्वा एव सामग्र्यः। विशेषतः साम्प्रतं जीविकासम्पादनयोग्यानां वृत्तीनां मध्ये स्वावतारत्वप्रख्यापनमेव प्रधानां वृत्तिं सम्भावयामि; यतोऽत्र बहुधनार्ज्जनेन समं ससम्मानमक्लेशञ्च संसारयात्रा निर्व्वहति, न विद्यावत्तापेक्ष्यते। अत्र हि केवलं धार्ष्ट्यं शाठ्यञ्चैतद् द्वयमपेक्षितमस्ति, अस्ति चोभयमपि बाहुल्येनैव मयि। किञ्चाबाल्यान् मम चेष्टितान्यालोक्य सर्व्वे खलु प्रतिवेशिन ऐकमत्येनायमेकोऽवतार इति कथितवन्तस्ततश्च सर्व्ववादिसम्मतमेव ममावतारत्वं स्वतःसिद्धं, न तु स्वकपोलकल्पितमिति दिक्।



( २ )

## जन्म-भूमिः

"यच्चिन्तितं तदिह दूरतरं प्रयाति यच्चेतसा न गणितं तदिहाभ्युपैति ।"

अस्मिन् प्रतिक्षणविचित्रघटनासङ्घटनचमत्कारकारिणि संसारे मनुष्या नाम केवलमविश्रान्तदुःखानलकरालज्वालादाहमनुभवितुं भगवता विसृष्टाः । एषां खलु जीवनं दुःख-दुःखेनैवात्येति । एते खलु सुखमरीचिका प्रलोभ्यमाना यथा यथाग्रतः प्रधावन्ति, तथा तथैव प्रचण्डोज्ज्वलज्वालामालिनि दुःखानलकुण्डे निपत्यातिदुःसहदाहज्वरमाप्नुवन्ति । सत्यमुक्तं केनापि—

"अयं रत्नाकरोम्भोधिरित्यसेवि धनाशया ।
धनं दूरेऽस्तु वदनमपूरि क्षार-वारिभिः ।"

आत्मनः सुखचिकीर्षया मानवा यत्किञ्चनानुतिष्ठन्ति, तदेव सहस्रगुणदुःखरूपेण परिणमद्विषमक्लेशकारणं भवति । मनुष्येषु दुर्लभा एव तादृगखण्डसुकृतिमन्तो येषां जीवनम्—

"असेवितेश्वरद्वारमदृष्टविरहव्यथम् ;
रोगतापविहीनञ्च धन्यं सदतिवर्तते ।"

एते चिन्तयन्त्यन्यदन्यदेव परिणमति । सुन्दरदेवप्रतिमां निर्मातुमिच्छन्ति विकटमर्कटाकृतिर्निर्मिता भवति ।

तथाहि मया खल्वस्मिन् परिणते वयसि जराजीर्णकलेवरतया शरीरश्रमसाध्येष्वाजीवनेष्वशक्तेनात्मवायोरुद्गारापदेशेन बहूपदेशप्रदमनन्यसाधारणतया मर्त्यलोकदुर्लभरत्नभूतं तथा संस्कृतभाषायामदृष्टपूर्वालङ्करणरूपं संस्कृतसाहित्यस्य च चिरदारिद्र्यमोचनक्षममात्मचरितं

प्रकाश्य धनार्जनं चिकीर्षितं, चिन्तितञ्च ममैतेन कर्मणाऽनायासेन स्थविरस्य मे जीविकानिर्वाहो भविष्यति, तथा भारतेस्मिन्नेकमात्रस्य वर्षीयसोपि विद्योदयाख्यस्य संस्कृतपत्रस्य गौरवञ्च वर्त्स्यतीति।

उक्तञ्च—

"या लोकद्वयसाधनी तनुभृतां सा चातुरी चातुरी" इति।

किञ्च देहिनां संकल्पः कदा साफल्यं लभते, मम दुरपनेयदुरदृष्ट-प्रभावाद्वा संस्कृतगौरव-पराङ्मुखस्य हतविधातुरभिलाषस्यावश्यम्भावितया वा, भारताधःपतनबद्धपरिकरस्य कालस्याप्रतिहतप्रयत्नप्रभावाद्वा, मुद्रायन्त्राधिदैवतस्य विषमविसंष्ठुलाचरणपरस्य भीषणपिशाचस्यानुल्लङ्घ्यशासनप्राबल्याद्वा मया यदाऽऽलिखितमन्यथैव मुद्रयित्वा सम्पादकेन प्रकाशितन्तत्! ततश्चामूलाद्भग्ना सा दुरारोहिणी आशा-लता।

मुद्रायन्त्रेणास्मद्देशस्य महानपकार एव साधितो न स्तोकोप्युपकारः। प्रायो वर्षशतं यावन्मुद्रायन्त्रस्यात्र प्रचारोऽभवत्, किन्त्वेतातावत्पर्यन्तं नैकमपि विशुद्धं पुस्तकं प्रकाशितमभवत्। विशेषतो बङ्गदेशे महामहोपाध्यायैरपि मुद्रितानां पुस्तकानां पुस्तकपत्रापेक्षया शुद्धिपत्राणामाधिक्येऽपि नाशुद्धीनां निःशेषतो निराकृतिर्भवति। चित्रमेतद् भोश्चित्रमेतत्! इंग्लण्डप्रमुखम्लेच्छदेशेषु म्लेच्छजातीयैर्मुद्रितेष्वपि संस्कृतपुस्तकेषु नैकस्याप्यक्षरस्य विपर्य्यासो दृश्यते। भागीरथीपूतप्रवाहपाविते कलिकातानगरे संस्कृताभिज्ञान-विकत्थनापूरितदिङ्मुखैर्ब्राह्मणजातीयैरपि पण्डितम्मन्यैः प्रकाशितानि संस्कृतपुस्तकानि सर्वविधाशुद्धिपूर्णानि दृश्यन्ते !!!

"वरमेको गुणी पुत्रो न च मूर्खशतान्यपि"

प्रतिवर्षमेवमशुद्धिबहुलपुस्तकराशिप्रकाशनापेक्षया वर्षशतैरप्येकस्य विशुद्धपुस्तकस्य प्रकाशनं श्रेयः।

अन्ये यथेच्छं कुर्वन्तु; अयि भो विद्योदयसम्पादक! भवांस्तु जगत्यात्मनोऽनन्यसाधारणं संस्कृतानुरागित्वमुच्चैरुद्घोषयति, तत्कथं भवानप्यशुद्धप्रकाशनरूपेण कर्मणात्मनोऽनृतशीलत्वं प्रख्यापयति? यदि प्रकृत एव तव संस्कृतानुरागः संस्कृतभाषायाः पुनरुज्जीवने प्राण-पण-प्रयत्नश्च, तदा प्रथमं सर्वप्रयत्नेन विशुद्धं पुस्तकं मुद्रयितुं बद्धपरिकरो भव; अन्यथा पुच्छं संक्षिप्य स्वविवरे निश्चिन्तस्तूष्णीं तिष्ठ। अशुद्धपुस्तकप्रकाशकाः किलात्र बहवः सन्ति, अलं तेषां संख्यापरिवर्धनेन। किं दृष्टं भवता मया यल्लिखितं भवता च यथा प्रकाशितं तदिति! अथवा किं गतस्य शोचनया, भविष्यति भवता सावधानेन भवितव्यमन्यथाऽनामिका-वचनं स्पष्टं प्रमाणीकृतं भवेत्।

भवतु, मया पुनर्लिख्यते, किन्तु लेखनात्पूर्वं भवता समं कश्चित् समयोऽवधारणीयः। यतः समय एव करोति बलाबलं शरीरिणाम्। अस्मिन् संसारे यावन्तः खल्ववयविनः सञ्चरन्ति, तेषां सर्वेषां सृष्टि-स्थिति-विलयं प्रति समयस्यैव सर्वतोमुखी प्रभुता। समयवशेनैव रविरुदेत्यस्तमेति च। समयप्रभावादेव राशिचक्रस्य प्रतिवर्षं सकृत् परिभ्रमणं भवति। किंबहुनोक्तेन, देहिनां सर्वविधावस्थापरिणमनं प्रति समयस्यैव बलवत्ता दृश्यते। समयबलादेव मादृशामपि लेखककुलधुरन्धराणां विद्योदय-लेखोपजीवित्वं संवृत्तम्। अतएव लेखनात्पूर्वमावाभ्यां परस्परं कश्चित् समयः करणीयः। यतस्तादृक्समयपरिपालनमन्तरा सर्वं विश्रृङ्खलं भवति। पश्य समन्तादुच्चावचानि स्थावर-

जङ्गमात्मकानि यावन्ति वस्तूनि दृश्यन्ते तानि सर्वाणि समयपरिपालनैकव्रतानीव विभाव्यन्ते। न समयात् प्राक् तृणस्याप्यङ्कुरोद्गमो भवति, नापि समयेऽतीते सुमहान् भूमिधरोऽप्यवतिष्ठते। अन्तरा च समयपरिपालनमस्मद्देशीयानामेतादृशी दुर्गतिरत एवोच्यते, व्यवहारात्पूर्वं मावाभ्यां परस्परं कश्चित् समयः करणीय इति।

अथ स कीदृश इति पृच्छ्यते चेत् तदपि कथ्यते, सावधानं शृणोतु भवान्। जानात्येव भवानहं परमहंसो जलचरः संन्यासी; प्रथमं यथाविधिप्रतिपालनासामर्थ्यात् पुत्रान् दारांश्च परित्यज्य गृहान्निष्क्रम्य प्रव्रज्यावेषं स्वीकृत्य च केवलमात्मोदरपूरणव्रतं गृहीतवान्। न तु मनसा क्षणमपि विरक्तो ऽभवम्। कृतवांश्च स्त्री-पुत्र-प्रतिपालनवर्ज्यं निखिलान्येव गृहस्थकर्माणि।

इत्थं कियत्तिथे कालेऽतीते महती मे प्रतिष्ठा जाताऽभवञ्च तया समं सुमहानर्थागमः। पुनः समाश्रितवन्तश्च मां ते पूर्वाश्रमकुटुम्बिनः। अहमपि तान् स्थानान्तरे संस्थाप्य गूढं तैः सह संगत्य च तेषां पोषणं कर्तुमारेभे। इत्थं पुत्राः कृतिनोऽर्थार्ज्जनक्षमाः संवृत्ताः। अहञ्च जराविकलाङ्गो देशान्तरपर्यटनाऽक्षमः सुमहान् वर्षीयान्। अथ ते मामेवमवस्थं दृष्ट्वा सर्वथा मत्सङ्गं परिहृत्य स्थिताः। ममापि तान् प्रति कोपि विरागः संवृत्तः। ततोहमपि तेषां सम्बन्धं परिहृत्येदानीं सर्वथैकान्ते स्थितवानस्मि, नास्ति पुनस्तेषां प्रतिपालनचिन्ता स्वल्पापि। स्वोदरपूरणञ्चास्माकं भिक्षयैव भवति। एवमपि किञ्चिदर्थापेक्षा वर्तते। प्रतिष्ठा-समये मया तान्त्रिकक्रियाकलापैः सहजत एव जनानां चित्तमाक्रष्टुं कौलावधूतव्रतं गृहीतं, ततश्च मद्यसेवनाभ्यासः

संवृत्तः। मद्यसेवनञ्चार्थागमादृते न सम्भवति। स्वदेशीयेनैव मद्येनास्माकं तृप्तिर्भवति। अत एव मद्यसेवनार्थं भवान् मह्यं प्रतिमासं दश मुद्रा दास्यति चेत् तदैवाऽहमपि मासि मासि भवत्समीपे सुदीर्घं प्रबन्धमेकं प्रेषयिष्यामि। विशेषतस्तु सम्यङ् मद्यसेवनमन्तरेण न मे लेखनी प्रसरति, नापि चित्तस्यैकाग्र्यं सम्पद्यते। यदि मां नियमेन लेखयितुं भवत आग्रहातिशयस्तदैवमेव समयः प्रतिपालनीयः। अन्यथा तूष्णीं तिष्ठतु भवान्। 'मित्रं स्वच्छतयेति' नीतिवचनात् मया सर्वं सुव्यक्तमुपन्यस्तम्। इदानीं भवान् प्रमाणम्।

अथ लिखामि, किं लिखामि? आं ज्ञातम्। आत्मनोऽवतारत्वप्रतिपत्तये प्रवृत्तोऽहम्। तच्च प्रतिपादितप्रायं किन्त्वाधुनिकावतारा यथाऽनिश्चितपितृका अथवा तेषामनिश्चितपितृकत्वमेव यथा सगौरवमवतारत्वप्रख्यापनायोदाह्रियते नाहं तथा, नाऽहमनिश्चितपितृकत्वं सगौरवमवतारत्वप्रतिपादकत्वेनोदाहरामि। पश्यास्मच्छास्त्रसम्मताः सर्व एव प्राचीनमानवावतारा वामन-परशुराम-दाशरथि-प्रभृतयः सपितृकाः सद्वंशप्रसूताश्च, नैकोऽप्यमीषां केवलं मातुरुदरात् प्रसूतः। प्रत्युत परशुधरो जामदग्न्य इति, रामो दाशरथिरिति, कृष्णो वासुदेव इति, बुद्धः शौद्धोदनिरिति च सर्व एव ते पितृनाम्ना प्रसिद्धाः।

आधुनिकावताराणान्तु पिता, पितृनाम, तदन्वयश्चेत्यादि किमपि न ज्ञायते; तथाविधाज्ञानञ्च तेषां देवत्वसूचकपक्षे गण्यते! पितृसम्पर्कमन्तरा तेषामुत्पत्तिरभवदिति तत्तदवतारभक्तैः सगौरवमुदाह्रियते च। अहो वैचित्र्यं रुचीनाम्!! मद्यन्तु न तद्रोचते, प्रत्युतातीव त्रपाकरत्वेन सम्भाव्यते, अत एवोच्यते सममभिनवावतारस्यापि मम न पित्राद्यनि-

श्रयः। न चाप्यहं 'शचीतनया'-दिवन्मातृनाम्ना प्रसिद्धो भवितुमिच्छामि। इत्थं ममावतात्वे सम्यक् प्रतिपादितेऽतःपरमाबाल्यादात्मनः सुचरितं लिखितुमिच्छामि।

अस्ति खलु कपिलरोषानलज्वालाजालकवलितभस्मावशेषीकृत-सगरसन्तति-परम्परोद्धरणप्रवृत्तभगीरथ-तपःपताकायमानायाः करालकलिकल्मषनाशनतीक्ष्णासिधारारूपाया भारतधरावक्षोविशोभि-तारहारायमाणामलप्रवाहाया यमुनासरस्वतीसमागमसंवर्धितप्रभावाया हिमगिरेः पूर्वसागरमभिसरन्त्याः सुरसरितः शङ्खेन्दुकुन्दोज्ज्वलजलधाराक्षालिताशेषकल्मषे, साल-ताल-तमाल-रसाल-हिन्तालादिविविधाविरलघनच्छायवनस्पतिच्छायाच्छादिताहस्करकिरणमाले, निरन्तरप्रफुल्लवनकुसुमामोदभरमन्थरामरधुनीतरङ्गसङ्गसंवर्धितजडिमसमीरणधीरसञ्चारसुभगे, सुमधुरशब्दायमानानेकविधविहगे विविधसुगन्धि-सुमनोविराजिताभोगतया भूमिस्वर्गायमाणे, चतुर्वर्गप्रसवक्षेत्रे रोधसि, चतुर्वर्णनिवासभूमिश्चतुरुदधिप्रान्तदेशसमागतागण्यपण्यजीविजननिरन्तरापणशोभी, चतुरनरपरम्परावर्धितोदारकीर्त्तिः पूर्त्तकर्मनिपुणजनाश्रयः, निकषायमाणोऽखिलजनपदानां, शेखरायमाणः समृद्धग्रामाणामवतंसायमानो वङ्गदेशस्याशेषविद्याभ्यासोपहसितसुराचार्यभट्टाचार्याजस्रविचार्यमाणशास्त्रनिचयोऽनेकमहामहोपाध्यायाध्युषितोऽभिन्नस्थितिरावासो गुणिनामाश्रयः सज्जनानामाधारः कलानां शरणं विकलानां, वसतिः सम्पदां, प्रवसतिर्विपदां, निवसतिस्तेजसां, स्वर्ग इवानेकदेवमन्दिरशोभमानो बहुविबुधाश्रितश्च, पार्वणशशधर इव निखिलकलाश्रयो लोचनानन्दहेतुश्च, कैलास इव विचित्रशिवालयकृतशोभः सौध-

धवलश्च, सूर्योदय इव सदासन्निहितबुधः कविसेवितश्च, नागलोक इवानेकभुजङ्गाधिष्ठितः सुरक्षितवलिश्चानेकविशालवर्त्मपरिशोभितो विविधविद्यालयभूषितो सुसमृद्धो....नाम जनपदः।

यत्र च वादः शास्त्रेषु, निर्णयो दुरूहतत्त्वेषु, स्पर्द्धा पाण्डित्योत्कर्षे, लिप्सा यशसि, तृष्णा पारलौकिकसुखे, शुश्रूषा शास्त्रकथासु, प्रवृत्तिर्ज्ञानार्जने, निवृत्तिः पापकर्मणि; श्रद्धा धर्मे, जुगुप्सा चाधर्म्मे, द्वेषो परनिन्दासु, आसक्तिः सत्ये चादृश्यत जनानाम्। तस्यैवं-प्रसिद्धस्यातिमहतो जनपदस्यान्तर्वर्त्ती....ग्रामो हि मम श्रीपीठ आविर्भवनस्थानमिति यावत्, जन्मभूमिरिति यस्य भाषा।

अस्मिन् खलु संसारे सर्वेषामेव प्राणिनामाकीटदेवाधीशपर्य्यन्तानां दृश्यते खलु स्वकीयजन्मभूमिं प्रति सुमहान् स्नेहः।

उक्तञ्च :—

"जननी जन्मभूमिश्च स्वर्गादपि गरीयसी।" इति

एवं जन्मभूमेर्माहात्म्यं सर्वदेशीयेष्वेव काव्येष्वितिहासेषु, पुराणकथासु चोच्चैर्गीतमस्ति। सर्वदेशीयाः सर्वविधा ज्ञानिनोऽज्ञाना विद्वांसो मूढतमाः साधवो दुर्जना एवमन्ये च परस्परं भिन्नप्रकृतयोऽपि मनुष्या जन्मभूमौ परममनुरागं दधते। अतिकठोरा वज्रसारहृदया निर्दयनिपीडिताशेषनिर्दोषमानवा दस्यवोऽपि जन्मभूमिसमीपे कुसुमादपि सुकुमारं हृदयं भजन्ते। श्रूयते च प्रचण्डदोर्दण्डाखण्डप्रतापकम्पितक्ष्मातलाः क्षत्रियवंशावतंसा अन्यदेशीया अपि वीरपुङ्गवाः प्रियपुत्रादिस्वजनगणप्राणोपहारेणापि बहुशो जन्मभूमेरर्चनां कृतवन्तोऽर्पितवन्तश्चानेके ऽनेकशो रुधिराक्तमात्ममस्तकमपि रक्तपुष्पमिव जन्मभू-

मेश्वरणोपरीति। अपि च जन्मभूमेर्गौरवरक्षार्थमसूर्य्यम्पश्याः कुसुम-सुकुमाराकाराः कति कति कुलललना अपि सर्वं ललनोचितधर्म्मं लज्जा-सौकुमार्यादिकमेकपदे विसृज्य रणोन्मत्ताः सरभसम्मृत्योर्लास्यक्षेत्रमिव भीषणरणाङ्गनं प्रविश्य भयङ्करीं रणचण्डी-लीलां प्रदर्शयामासुरित्यत्रापि सर्वदेशीयेतिहासाः साक्षिणः। जन्मभूमेर्यशोऽक्षुण्णं कर्तुं दुग्धपोष्यशिशवोऽपि महावीरवन्महोल्लासेन समरभुवमवतीर्य्य महान्त्यद्भुतानि कर्म्माणि कृतवन्तः। जराजीर्णकलेवराः प्रवयसोऽपि युवान इव परमलोमहर्षजननहेतुं भुजबलं प्रकाशयामासुः। क्षीणबला हीनौजसो रोगिणोऽपि मृत्युशय्यां परिहाय जन्मभूमे रक्षणाय प्रचण्डदानवताण्डवमकार्षुरिति च पुराणकथाः प्रकटयन्ति। निरन्तरोपचीयमानसान्द्रजलधरायमाण-नीरन्ध्रतुषारराशिचिरसमाच्छादितदिवाकरे, शीतर्त्तुप्रियावास इव सर्वदा समुदितविषमशीतज्वरे, तुषारमय इव हिममय इव नियतनिपतद्धिमकणाजनितदुर्दिने, ग्रीष्मसमयमध्यन्दिनेऽपि शिशिरप्रत्यूषायमाणे मनुज-भोग्योच्चावच-भोगशून्ये चोत्तरकेन्द्रसन्निहितभूमिभागे मनुजा यथा स्वजन्मभूमिं सर्वसुखप्रसविनी मनुपमाञ्च मन्यन्ते; सततात्युष्णदिनकरकिरणोपतप्ते समुत्तप्तसैकतसमाच्छन्नोषरक्षेत्रबहुले निरक्षरेखातलस्थितभूमिभागे कृतनिवासा अपि मनुजा निजां जन्मभूमिं तथैव सर्वोत्कृष्टां जानन्तीत्यपि कवयः सोल्लासमालपन्ति। परं ममैतत् सर्वं वृथाडम्बरमलीकं प्रतिभाति। यतः

"उदारचरितानान्तु वसुधैव कुटुम्बकम्।"

तथाहि—सर्वविधगुणग्रामभूषितस्यादर्शपुरुषस्यापि मे नास्ति जन्म-भूमिं प्रति स्वल्पोपि स्नेहोऽनुरागो वा, प्रत्युत सुमहान् विद्वेष एवानुभू-

यते। यतः सुचिरमेव तां परित्यज्य निर्गतोस्मि नाद्यापि तांद् सकृ द्रष्टुमपि चेतः कामयते। अथ कदाचित् तत्र गन्तुमीप्सा समुदेति तत् केवलमस्यै निजप्रतिष्ठागौरवप्रदर्शनायैव, नतु तदुपरि श्रद्धया। यतो यावन्तं कालं मया वृथामोहमायाविमुग्धचेतसा जन्मभूमिमधिकृत्य स्थितं ततः पदमेकमपि बहिर्गमनमसह्यतापहेतुत्वेनाशङ्कितञ्च तावान् कालः केवलं दुःखदुःखेनातिवाहितोऽभूत्। तात्कालिकदुःखेष्वद्यापि स्मृतिमारूढेषु भृशमाकुलीभवति हृदयं, दूरमपसरति धैर्यं, शान्तिश्च सद्यो विनश्यत्येव।

मूढाः खलु जन्मभूमिमायाक्रान्तहृदया विषकीटवद्विषमयन्त्रणाजालमनुभवन्तस्तत्रैव जीवितमतिवाहयन्तस्तिष्ठन्तीति च बुद्धिरुत्पद्यते। तत्रावस्थानसमये ह्यहं सर्वेषामवज्ञापात्रमासम्। स्वजना अपि न मामाद्रियन्ते स्म। पितरावपि स्वाभीप्सितार्थार्जनमन्थरं मां निरन्तरं सक्रोधं साभ्यसूयं सावज्ञञ्च पश्यतामकुर्वताञ्च यत्र तत्रैव बहुशोऽलीकनिन्दावादान् मे। स्वकलत्रमपि मत्तो यथेप्सितं वसनाभरणादिकमप्राप्य सदा शृगाल-कुक्कुरेभ्य इव मह्यं सम्मार्जनीमदर्शयदतर्जयच्चातिकर्कशाभिः कशाभिरिवाकथ्यवचनपरम्पराभिः। सहोदरा अपि सेर्ष्याः समत्सरा अन्तराऽपि कारणं स्वेच्छया छद्मान्युद्भाव्य प्रतिक्षणं समं मया विषमं विवादमवतारयन्ति स्म। बाल्यसुहृदोप्यर्थ-प्रार्थन-शङ्कया नर्मव्यवहारेष्वपि परमौदासीन्यं प्रदर्शयामासुः। यदा स्वजनानामियं वार्ता, तदा किं ब्रवीम्यपरेषां सर्वथा सम्बन्धशून्यानामाचरितेषु।

जन्मभूमौ सम्पदि मोदकाभ्यवहारव्यापारे बहवो बान्धवा लभ्यन्ते, कस्मिंश्चिदुत्सवे समापतिते स्वजनानामेतादृक् संबाधो

भवति, यद् गृहाभ्यन्तस्तिलधारणस्याप्यवकाशो न लभ्यते। परमनर्थापते तु 'कः कोऽत्रः भोः !' इत्युच्चैराहूतस्यापि न कस्यापि मुखं दृश्यते। विपदि तु सर्वं शून्यं भवति, न कश्चित् कस्यचिन्मित्रं, प्रत्युत विपद एव साहाय्यं कुरुते, दुस्तरापदर्णव-निमग्नं न कोप्युद्धर्तुं हस्ताग्रं प्रसारयति, किन्त्वस्य चिरनिमज्जन एव सर्वेषां प्रयत्नो दृश्यते। सर्व एव सर्वमात्मपदानतं कर्तुं प्रयतते, न कोपि कस्यचिदप्युत्कर्षं स्वीकरोति। ततश्च न गुणेष्वनुरागो विगुणेषु विरागो विद्यायाः सम्मानं, न वृद्धे रादरो न वयोधिकेषु गौरवं नापि च न्यूनवयस्केषु स्नेहः, सर्वाः खलु वृत्तयः स्वार्थ एव पर्यवस्यन्ति। ततश्च तत् साधूनां परमनिग्रहस्थानमसताञ्च परमप्रभुतास्पदम्। तत्र सर्व एव सम्प्रदायाधिपतयः, सर्व एव स्वेच्छाचारिणः। सर्व एव परस्परं निन्दन्ति, परस्परमुपहसन्ति, परस्परं लक्षीकृत्य सोत्प्रासमाभाषन्ते, परस्परमलीकं विद्विषन्ति च। न कश्चित् कस्यचिदुन्नति मुत्कर्षं वा द्रष्टुमपि समर्थो भवति। न कश्चित् कस्यचिद्वचनं करोति, न चापि कश्चित्कस्मैचिद्धितमुपदिशति, तत्र नैकोपि न्यायमनुवर्तते, नाप्यन्यायस्य शान्तिं करोति, एवमादिहेतुभिर्जन्मभूमिर्मे महारौरवकल्पाऽशेषक्लेशप्रदा च समजनि। ततोहं प्रदीप्तवैराग्यः कथमपि तामत्यनर्थकरीं जन्मभूमिगतां मायामुत्सृज्य दूरदेशं प्रस्थितः। प्रखरदिवाकरकिरणप्रतप्तस्य शीतं गुहास्थानमिव प्रबलदाहज्वर-बाधितस्य सुशीतलतुषारखण्डमिव निरय-निर्मुक्तस्य नन्दनकाननमिव प्रवासो मे सद्य एव परमतृप्तिकरो बभूव।



( ३ )

जन्मभूमिः

( ख )

मया खल्वद्य यावत् पत्रद्वयं प्रेषितम्। भवता तु न किञ्चिदपि; न जाने किं विचारितं भवता मत्प्रस्तुतं समयं प्रति! किं तूष्णीमवाश्रित्येच्छति भवान् मामभिसन्धातुं ? नाहं सन्न्यास्यप्युदासीनो लौकिकतत्त्वेषु, प्रत्युत साक्षादीश्वरावतारोऽपि मनुष्यलीलाप्रदर्शनपरस्ततश्च नाऽहं भवद्विधैर्ऋजुबुद्धिभिः सहसाभिसन्धातुं शक्यः। पूर्व्वपत्रे प्रारब्ध-प्रबन्धस्यासम्पूर्णतयाऽद्य केवलं तत्सम्पूर्त्तिविधित्सयाऽभिलिख्यते ऽतः परन्तु दक्षिणामन्तरा नैकाक्षरमपि भवदर्थे लिखिष्यामीति निश्चिनोतु भवान्।

वस्तुतो मद्विधानां महतां सर्व्वतत्त्वदर्शिनां समीपे जन्मभूमिस्नेहो नाम सर्वथा स्वप्नोपमः कविकल्पित एव वा विभाति। ये खल्वत्र जगति महत्त्वस्य यशसः सम्पदश्चोत्कर्षं लब्धा मानवमण्डलस्यावतंसीभूताः, जन्मभूमेश्चिरसुदूरावस्थितिरेव तेषां तत्तदुत्कर्षलाभहेतुः। किं न पश्यति भवान्, यः किलेतः पूर्व्वं कश्मीरजनपदे सर्व्वतोमुखीं प्रभुतां लेभे, राजानमप्यसाधारणगुणवत्तया वशीकृत्य क्रीडापुत्तलिकावत् स्वेच्छया परिचालयामास; अर्जितवांश्च राजप्रसादान्महान्तमर्थराशिं, उपहसितवांश्चाऽमरगुरुमपि स्वबुद्धिकौशलेन, बभूव च विद्वत्तया प्रतिद्वन्द्विशून्यः, विस्तारयामास च शारदपार्व्वणशर्व्वरीशज्योत्स्नाराशिमिव दिगन्तेषु विमलं यशः। स एव साम्प्रतं जन्मभूमिमधिवसन् जन्मान्तरमधिगत इव दुर्ग्रहग्रस्त इव, ब्रह्मशापाक्रा-

न्त इव, स्वर्गलोकभ्रष्ट इव च कीदृगवस्थान्तरं प्राप्त इति। अन्यच्च यः पुरा जन्मभूमौ विंशतिमुद्रार्ज्जनमपि महत्सौभाग्यविलसितं मत्वा परमपरितोषं प्राप, तदेव चात्मविद्याबुद्धिमत्तायाश्चरमफलं जानाति स्म, स एवेदानीं जन्मभूमिं परित्यज्य देशान्तरमधिवसन् राजसाचिव्यं कुरुते, यत्तु जन्मभूमौ स्वप्नेऽपि दुष्प्रापमासीत्। अथवाऽलमन्यदीयकथया; स्वमेव पश्यतु भवान्, लवपुरावस्थितिकाले च भवतः कीदृशी दशा जाता, साम्प्रतं जन्मभूमौ तिष्ठतस्तस्यैव भवतः कीदृश्यवस्था संवृत्ता चेति। अतएव साधूक्तं केनापि "प्रवासे चण्डिकाकृपा स्वदेशे न किञ्चिदिति।" एतेनैव कारणेन भट्टमोक्षमूलरसदृशाः विदुषां प्रवरा अपि स्वजन्मभूमिं परित्यज्य देशान्तरमाश्रितवन्त इति च मे प्रतिभाति।

जन्मभूमौ हि समुचितसमादरमन्तरा न सम्यग्विकाशं लभन्ते मानवानां गुणाः, न वृद्धिमेत्युत्साहः, न प्रसरति बुद्धिर्नोत्पद्यते कौशलम्, प्रत्युतानादरेणैवैतत्सर्वं क्रमेण विलयं प्राप्नोत्येव, चित्तञ्चोत्तरोत्तरं मालिन्यं प्रतिपद्यते। येन सर्व्व एव बुद्धिमन्तो महान्तश्च पुरुषा वृथा जन्मभूमिस्नेहं विस्मृत्य यावज्जीवं प्रवास एव प्रतिवसन्ति। मूढा दुर्दैवग्रस्ता अपरिणामद्रष्टार एव मानवा जन्मभूमिमायया समाकृष्टहृदयाः कूपमण्डूकवत्तत्रैव चिरं निवसन्तः कृष्णसर्पाणामिव सततं प्रवञ्चनपरायणानां खलानामायत्तीभूता अकाल एव शमनसदनातिथ्यं लभन्ते।

अथवा का नाम जन्मभूमिः? अस्ति जन्मभूमिनाम किमपि वस्तु? यत्परिभाषया लक्षयितुं शक्यते? नैव, मम मते नैव काचिज्जन्मभूमेर्निरूढा परिभाषा वर्त्तते। आत्मनो जन्मस्थानं नाम जन्मभूमिनाम्नाऽ-

भिधातुमुचितमिति चेन्न, बहवः खलु इंराजजातीयाः स्वजन्मना भारतभूमिमलंकृत्यापि दीर्घकालं भारतीयधात्रीस्तन्यामृतमास्वाद्याऽपि लज्जन्त एव भारतमात्मजन्मभूमितया निर्देष्टुं, न जातु ते भ्रमेणापि भारतमात्मजन्मक्षेत्रं कथयन्ति। न वा भारतं प्रति तेषां स्नेहलेशोऽपि वर्त्तते, नापि स्तोकोऽप्यादरः, प्रत्युत सर्व्वदैव भारतमिदं निर्दयमुत्पीडयितुं सर्व्वविधाश्चेष्टाश्चरन्ति। भारतस्य पिशितान्यप्यशेषतो निपीय वर्षीयसीमपि तां भारतभूमिमस्थिशेषां कुर्व्वन्ति। तस्या जराजीर्णे वक्षसि सगर्व्वचरणनिपातेन प्लीहाः स्फोटयन्ति, भारतहृदयशोषणलब्धेन चार्थेन इङ्गलण्डदेशस्य समृद्धिं वर्द्धयितुमभिलषन्ति। *

* तिष्ठन्तु इंग्लण्डदेशसमृद्धिसंवर्धनपरा इंग्लिशजातीयाः पुरुषधौरेया नाम। इसलामधर्मावलम्बिनो महम्मदीया हि भारतभुवि सहस्राधिकवर्षाणि यावत् निवसन्तोऽपि भारतभूमि-जनन्याः स्तन्येन सह निःशेषं रक्तमाकण्ठमापीय बलिनो भूत्वा सर्वस्मिन्नेव शासनाद्यधिकारे सर्वाधिकमनन्यसाधारणं स्वाधिकारं सकण्ठशोषं सततमुच्चैरुद्घोषयन्तः स्वकीयं जातिमहत्त्वञ्च बाह्वास्फोटपुरःसरं प्रतिपदं प्रतिपादयन्तोऽपि स्वात्मना भारतीयत्वस्वीकारं धर्मविरुद्धं महत्त्रपाकरं मन्यमानाः स्वराज्यप्राप्तिकामुकैर्गान्धिमहात्मप्रभृतिभिर्देशभक्तैर्नेतृभिः सबहुमानं प्रणिपातपुरःसरं मुहुः प्रार्थिता अपि शतशो बहुविधमनुनीता अपि 'भारतीये'-तिपदव्यपदेशेन नात्मानमधःपातयितुमिच्छन्ति, सगौरवमुदाहरन्ति च 'वयमादि-मध्या-वसानेषु, सर्वथा सर्वदा सर्वात्मना च केवलं मुसलिमा एव, न नखाग्रेणापि भारतीया' इति।

दृष्टान्तोऽयं देशभक्तेर्जन्मभूमिस्नेहस्य वा माहात्म्यं यथा प्रकटयति, न तथोदाहरणान्तराणि स्वदेशीयानि विदेशीयानि वा जन्मभूमिमहत्त्वं स्पष्टीकर्तुमलम् अतः सत्यमेवोक्तं श्रीदुर्गानन्दस्वामिपादैर्जन्मभूमिस्नेहो नाम महत्त्वशालिनां मते स्वर्गोपमः कविकल्पितो वेति ; सप्तकोटिसंख्याका भारतीया मुसलिमा एवात्र निदर्शनम् !!

( सम्पादकः )

अथ वैश्या यत्र तत्रैव जन्मग्रहं कुर्व्वन्तु नाम; तेषामादिपुरुषजन्मभूमिरेव तेषां जन्मस्थानमिति चेत् न। आदिपुरुषवासस्यानिश्चेयत्वात्; निखिलमानवानामादिपुरुषः खलु कुत्र जातः, क्व न्युवासेत्यादिकं सर्वं विस्मृतमेवेदानीम्। वस्तुतः पैतृकजन्मभूमेरुपर्यपि न मनुष्याणां स्नेहलेशो दृश्यते। दृश्यते हि बहवो निजसौख्यस्वास्थ्यादिकमपेक्षमाणाः पैतृकजन्मभूमिं तृणवत् परिहृत्य यत्र कुत्रैव निवसन्ति। किञ्च बहूनां पूर्व्वपुरुषाः किलारण्यवृत्तयः पशुपालनपराः पशुभिः सममेव प्रत्यहं नवं नवं स्थानान्तरं परिभ्रमन्तिस्म। ततश्च वङ्गीयकुलीनब्राह्मणानामिव एकत्र पितुरन्यत्र पुत्रस्य, परत्र पौत्रस्य च जन्म बभूवेति पैतृकपुरुषाणां जन्मभूमिरप्यनिश्चितैव। तदनिश्चितवस्तुनि कथं नाम स्नेहः सम्भवितुमर्हति। दृश्यते हि बहवः खलु युरोपीयाः स्वच्छन्दतालाभाय प्रत्यहं प्रतिक्षणं स्वदेशाय जलाञ्जलिं दत्वा सङ्घशो निर्गताः पारेसमुद्रं आमेरिकाप्रभृति देशान्तरमधिवस्तुं यतन्ते। वङ्गीयकुलीनतनयास्तु कन्यामात्रलाभप्रत्याशया जन्मभूमिं परित्यजन्ति। इत्येतत् सर्व्वं मनसिकृत्य जन्मभूमिस्तद्गतस्नेहश्चालीक एवाभाति, अमूलक एव प्रतीयते, विशेषतो भारते वर्षे जन्मभूमिवृत्तान्तश्चालीक एव। श्रूयते हि राजन्यवर्गाः शौनिका गृहशकुन्तकानिव महीमिमामनेकशो वैदेशिकैर्हारयामासुः।

न वयं देशान्तरवृत्तान्तेषु सम्यगभिज्ञाः। भारतवर्षे तु जन्मभूमेर्गौरवक्षणं नामाश्रुतपूर्वमननुष्ठितचरं किमप्यभिनवालीककल्पनाक्लृप्तमिव प्रतिभाति। यावदत्र वैदेशिकानां सङ्घर्षो नाभवत् तावदत्रत्या राजानः स्वस्वगौरवरक्षार्थमेव परस्परं निरन्तरं तुमुलं विग्रहमकार्षुः।

सर्व्वे एव जन्मभूमिमात्मपदानतां कर्त्तुमभिलषन्तिस्म, न कोऽपि तस्या गौरवरक्षां प्रति दृष्टिक्षेपञ्चकार। प्रत्युत स्वगौरवविवर्द्धिषयैव निरन्तरं प्रबलसमरानलमुज्ज्वाल्य प्रज्ज्वलिते तस्मिन् स्वपरपक्षीयान् वीरभटा-नाहुतीकृत्य जन्मभूमेर्महान्तमपकारमकुर्वन्। तेषां दिग्विजयव्यापारोऽपि स्वदेशीयनृपतिकुलक्षय एव पर्य्यवसितोभूत्। विचार्य्यतां जामदग्न्यो रामः स्वपितृवचोगौरवरक्षार्थमेव त्रिःसप्तकृत्वोऽखिलं राजन्यकुलं समूल-मुन्मूलय्य कीदृशमपकारं कृतवान् जन्मभूमेरिति। कुरुपाण्डवा अप्यकि-ञ्चित्करदायहेतोः परस्परं विगृह्य प्रज्वलितसमरानले न केवलं निजकुलं किन्तु सर्व्वानेव वीरपुङ्गवानेकपदे आहुत्य भारतोर्व्वीतलं चिराय निर्व्वीरं कृतवन्तः। अथ यदा वैदेशिकवीरा भारतगोपुरद्वारि ससैन्याः समेत्य विजयदुन्दुभिमघोषयन् तदानीमपि तेषां केचित् परस्परं विवदमाना जन्मभूमिस्वातन्त्र्यसंरक्षणे माध्यस्थमवलम्ब्य स्थिताः। अपरे च सुजाताः स्वदेशीयस्य कस्यचित् प्रभुत्वं सोढुमशक्नुवाना स्वयं वैदेशि-कमाहूय तस्य हस्ते जन्मभूमिं समर्प्य निश्चिन्ता सुखं निदद्रुः। अत एवोच्यते जन्मभूमिस्नेहो नाम सर्वथाऽलीकः कविकल्पित इति।

यथा जन्मभूमिर्न कस्योपरि स्निह्यति। उदरान्नमदत्त्वैव मादृशः सर्वगुणसम्पन्नानपि सुतान् कदाचिद् दुर्गमकान्तारे कदाचित् सुभीष-णारण्यस्थलीषु, कदाचित्तरङ्गसहस्राकुलार्णवगर्भे, कदाचिदुत्तप्तसैकत-विषमोषरक्षेत्रेषु, कदाचिन् निर्ज्जनगिरिकन्दरेषु निर्वासयति, तथा जन्मभूमेरुपर्य्यपि विवेकिनां न स्वल्पोऽपि स्नेहरस उत्पद्यते। एत-त्तत्वानभिज्ञा मूढा जन्मभूमिनाम्ना द्रवीभूतहृदया यातनासहस्रमनु-भवन्तोऽपि स्वर्गसुखमास्वादयन्ति तत्र। इत्यलम्!

---

( ४ )

**पत्रावगमः**

ग्रीष्मे मध्यन्दिने पिपासा-क्षाम-कण्ठेन चातकेन सकरुणं चिरमुच्चैः सकण्ठशोषमाक्रुश्य यथा कदाचिन् नवमेघोज्झिता वारिकणा लभ्यन्ते, तथा मयापि सुचिरं युगपदुभयमैत्रीप्रदर्शनपुरःसरसविनयबहुप्रार्थनां कृताऽद्य समुद्रं भवत्पत्रमेकमधिगतम्। प्रथमं पत्रहस्तं लेखहरं दूरत एव मदाऽऽलयाभिमुखमापतन्तमवलोक्य मया समुद्वेलितहृदयेनोच्चैरसावाहूतः, "अये भ्रातरस्ति किमपि मम नामाङ्कितं पत्रम् ?" स विहस्याब्रवीन्न केवलं रिक्तपत्रं समुद्रमिदमस्ति, निष्कासय पारितोषिकं, श्रीमत्स्वामिमहाराजेनाद्य वर्षद्वयं नवरात्रोत्सवसमयेऽपि न किञ्चित्प्रदत्तमद्य तु सकुसीदं सर्वं प्रदातव्यमित्यभिधायोच्चैर्विहस्य च स मम हस्ते समर्पितवान् पत्रमेकम्।

मया तु शिरोनामावलोक्यैवान्यत्र कुत्राप्यदृष्टाऽश्रुतपूर्वा तथाविधा नागर-द्राविडोड्र-वङ्गाक्षरसमूहालम्बनात्मिका नातिह्रस्वा नातिदीर्घा स्पष्टास्पष्टप्रकारा भवल्लिपिरेवेयमिति निर्धार्य, श्रीमते जगदीश्वरायागण्य-धन्यवादान् वितीर्य भवते च श्रीमते शुभाशिषः समर्प्य, पत्रन्तदुद्घाटयितुं प्रवृत्तिरकारि। ततो लेखहराय बहुविधशुभाशीर्वचनपरम्पराभिः सन्तोष्याप्यस्य सनिर्बन्धप्रार्थनाभङ्गायाक्षमोऽन्ततस्ताम्रपणमेकं प्रदाय विसृज्य च रहोगतः पत्रन्तत् सावधानमुद्घाटितवान्। समुद्घाट्य च तदन्तः पञ्चमुद्राङ्कितं राजकीयशासनपत्रं दृष्ट्वा सहसान्तरितो मे तथाविधोद्वेल-हृदयाह्लादः केनापि सहसोद्गतेन रोषावेशेन, सुदूरमपगतश्च भृशमुद्रिक्तः समुत्साहो भग्नाऽभव पत्राधि-

गमसम्भूता मुकुलितप्राया आशालता। अथ भग्नोत्साहो भग्नमनोरथो भृशं हताशो रोषकलुषितान्तःकरणश्चाचिन्तयम्।

"अहो वञ्चनाचातुर्यं विद्योदयसम्पादकस्य, अहो दुर्विनीतता तस्य सम्पादकापसदस्य, मयाऽद्य यावत् त्रयः प्रबन्धाः प्रेषिताः, पत्राणि च पञ्चषाणि, समयश्च मासत्रयमतीतम्। तेन तु जडधियैतावन्तं समयं तूष्णीं स्थित्वाऽद्य पञ्च मुद्राः प्रेरिताः! धिक् तं क्षुद्राशयं दुर्वृत्तं, धिक् च मां क्षुद्रसेविनं मोघवृत्तम्।

यद्येतावन्तं कालं पाषाणदेहस्य काशीनाथश्रीविश्वेश्वरस्य भक्त्या समाराधनमकरिष्यं तदाऽसंशयं तस्याशुतोषस्य भगवतः प्रसादाद् धर्मार्थकामेतित्रिवर्गमलभिष्ये। न पुनर्लिखिष्यामि, सबहुमानं बह्वनुरुध्यमानोपि न लिखिष्यामि" –

इत्येवं रोषकषायितलोचनेन बहु विलप्य दुर्दमक्रोधभराविर्भावाद् दूरे निक्षिप्तं मुद्रासहितं भवत्पत्रम्। निक्षिप्तवांश्च विद्योदयखण्डान् कूपमध्ये। ततश्चिरप्रवृद्धक्रोधवेगेन समुद्धतं परिभ्रमति मयि, सहसा शौण्डिकः (मद्यविक्रयी) समुपसृत्य प्रणम्य च सविनयमवदत्—स्वामिन्! किमेतत्; कथमकाण्डे परिणतसन्ध्यारुणाताम्रे स्फारतामुपगते चक्षुषी प्रलयानलज्वालावलीरिव क्षणे क्षणे समन्तान्निक्षिपतोऽति भयङ्करीर्दृष्टीः, कथं वा विषमरोषोद्गमसमुद्भूतविकटभ्रुकुटीभङ्गकुटिलं दृष्टमात्रमेव भयमादधाति भवदाननम्। तत्कस्य नाम दग्धभागधेयस्यायुषः शेषः संवृत्तः, शनैश्चरो भगवान् कस्य रन्ध्रमभिवर्तते! कस्य वा भौमोऽष्टमं प्रवेष्टुमिच्छति, कस्योपरि सुदारुणदैवहतकस्य रोषारुणा दृष्टिर्निपतिता, चित्रगुप्तेन वा सहसा कस्य नामाङ्कितं पत्रमुद्घाटितं? को

नाम भगवतो महाब्रह्मवर्चससम्पन्नस्य नैष्ठिकब्रह्मचारिण एवमत्युल्बणं क्रोधमुद्दीपयामास। प्रसीद भगवन्! क्रोधं संहर, गृहाणाभिनवं पुराण-सुराभाण्डम्। इति स्वकक्षात् सुराभाण्डमेकं निष्कास्य मदग्रतः स्थापितवान्।

अहञ्च तथाविधेऽवसरे सुराया निसर्गमधुरां मनोहारिणीं काचाच्छादनबहिःप्रस्फुरन्तीं पाटलां कान्तिमवलोक्य मन्त्रमुग्ध इव, औषधहृतवीर्यो महाभुजङ्ग इव सहसा शान्तमन्युः संवृत्तः। क्वापि विलीनं तत्सर्वं सुभृशमाविर्भूतं भ्रुकुट्यादिकं कोपचिह्नं, शान्तिमुपागतश्च रोषाऽऽवेगः। अथ परमादरेणताममृतसहोदरामत्यमृतास्वादां समुद्रमन्थनोद्गतसर्वरत्नसारभूतां मनोहारिणीं सुरामाकण्ठमापीयापीय तदाक्रान्तहृदयः पुनः पुनर्निपीय निमेषमध्य एव भाण्डं शून्यं विधाय पुनर्जन्मनो निष्कृतिं लब्ध्वा चार्धनिमीलिताक्षो ऽर्धास्फुटाशीर्वचनैस्तस्मै साहतनयाय महेन्द्रपदवीं वितीर्य तं मार्कण्डेयप्रतिद्वन्द्विनं विधाय सन्तोष्य च विसर्जयामास। अथ निर्गते तस्मिन् परमानन्ददोलामधिरोहता मया पुनरेव चिन्तितम्। 'अहो किमनुष्ठितं क्रोधवशं गतेन मया मम परमसुहृदो विद्योदय-सम्पादकस्य पत्रं सर्वमवाचयित्वा तस्योपरि दारुणं क्रोधं कुर्वता, भवत्विदानीं पत्रं वाचयामि

श्रीश्रीरामः शरणम्

"ओं स्वस्ति सर्वोपमायोग्यसर्वविद्याविलासिनी-भुजङ्ग-भुजङ्गाधीशोपमामलयशःसलिलक्षालितदिङ्मालिन्यानन्यसाधारण-कौलीन्य-वदान्यगुणिगणाग्रगण्य-सर्वजनमान्यधन्यतैकधामाभिरामगुणग्राममण्डितपण्डितपूवरश्रीलश्रीपञ्चभाजन-सज्जनमहाजनसर्वजनरञ्जन-परमानन्द-

सन्दोहप्रदानदक्ष-मदेकपक्षपातनिरत-दुर्गानन्दस्वामिमहोदय-महादय-सदोदय-सदादय-सदाश्रयेषु ।

भवच्चरणकमलभृङ्गायमाणचेतसोऽकिञ्चनदासजनस्य भूम्यवलुण्ठिताष्टाङ्गप्रणामपुरःसरसविनयविज्ञापनवचनानि विलसन्तुतराम् ।

स्वामिन् ! भवतामस्मिन् निराश्रये दासजनेऽकारणकारुण्यरसप्रवर्षणेन मनोरथस्याप्यगोचरमानन्दमनुभवन्नात्मानं विद्योदयञ्च धन्यम्मन्यमानो वारं वारमम्भोरुहगर्वखर्वकारिणोर्भवच्चरणयोः प्रणतोऽस्मि । तत्रभवतां महामहिमशालिनां महात्मनामित्थमाकस्मिकपक्षपातसमुद्दितात्मगौरवोऽहं यत्किञ्चिद् विज्ञापयितुं प्रवृत्तः ।

तथाविधायाः प्रवृत्तेर्निदानन्त्वप्रार्थनोपनीतभवदनुग्रहजनितधृष्टत्वमेव । सर्वथा प्रयोजनरहितानां संन्यासधर्ममनुकुर्वतां जगति प्रख्यातमहिम्नां भवादृशां मादृशि प्रत्युपकारवन्ध्ये शक्तिपौरुषहीने दीनजने कृपावितरणं नाम नैसर्गिकमेव । यतः संसारेऽस्मिन् समर्थानामर्थशालिनां साहाय्यकाय बहव एव स्वतः प्रवर्तन्ते । भवल्लेखनमत्यधिकरसवत्तया सचेतसामन्तःकरणं बलादिवाकर्षति । एवंविधलेखनैपुण्यमधुनातनपण्डितम्मन्येषु विरलमेव । किं बहुना भवल्लिखितप्रबन्धेन न केवलं भूषितोऽद्य विद्योदयो यावदस्य गौरवमपि परिवर्धितमभूत् । भवादृशांल्लेखकपुङ्गवानन्तरा को नामैवमुपपत्तिमदूर्जितमसङ्कीर्णं च वचनं यथेच्छं विन्यस्तुं क्षमेत । विद्वद्गोष्ठीषु दुर्लभा एव भवादृशाः कविवृषभाः । लिपिरियममूल्या, विद्योदय-सम्पादकस्यात्मविक्रयेणाप्यस्याः समुचितमूल्यं न लभ्यते, तदेतस्या मूल्योल्लेखनं लघूकरणमात्रम् । धन्योऽयं विद्योदयो यस्येयं विचित्रा लिपिर्लला-

टदेशमलङ्करोति, धन्यश्चाहं, यस्य भवादृशाः कौलीन्यशून्याः पुण्यश्लोका नामाकारणमित्राणि संवृत्ताः ।

अथ तत्रभवद्भिः श्रीमद्भिः समयमधिकृत्य यदभिहितं साम्प्रतं तत्र किञ्चिदुच्यते । विद्योदयोयं त्रयोविंशतिवर्षाणि यावत् स्वानुकूलं समयं संप्रतीक्षमाणस्तिष्ठति, परमस्य भागधेयदोषान्नाद्यापि समायातः सः । अथैतावद्दिवसापगमे श्रीमद्भिस्तत्रभवद्भिरनुकूलैः सद्भिर्यः समयः प्रदर्शितो नासावप्यस्यानुकूलतया प्रतिभाति । किन्नाद्यापि विदितमेतत् स्वामिचरणैराहिमालयादाकुमारिकान्तरीपाच्च विस्तृतेऽस्मिन् भारते वर्षे, एकमात्रस्य संस्कृतमासिकपत्रस्य विद्योदयस्य विद्यमानता हि वैदेशिकमहानुभाव-श्रीमड्डाक्टर-'लाइटनर'-महोदयस्य केवलामनुकम्पामाश्रित्योपजायते; इति । संस्कृतभाषाप्रसवक्षेत्रेऽप्यत्रैकमात्रस्य संस्कृत-मासिकपत्रस्य सत्वं वैदेशिक-सहृदय-दयामात्रमुपजीव्य प्रवर्तत इत्यतः परं त्रपाकरं किमन्यत् सम्भवति । अत्र ये संस्कृतभाषायामादरवन्तस्ते प्रायो निर्धनास्ततश्च सत्यपि तेषां बलवत्यभिलाषे न विद्योदयं ग्रहीतुं पारयन्ति, किञ्च येषां सामर्थ्यमस्ति न तेषां विद्योदयं प्रत्यादरलेशोपि दृश्यते । धनिनो भूम्यधिकारिणो राजमहाराजप्रभृतयस्तु वर्तमानसम्राट्-कृपाकटाक्ष-लाभाशामन्तरा न कपर्दकमात्रं स्वदेशहितार्थं विसृजन्ति । ते हि राजपुरुषसमाजे स्वनामप्रथनाय निष्फलेपि महाडम्बरशालिनि कर्मण्यकातरमपरिमितमर्थं वितरन्ति, किन्तु विद्योदस्योत्साहवर्धनार्थं वत्सरान्ते रौप्यमुद्राद्वयमात्रमपि प्रदातुं सुमहत् कार्पण्यं प्रदर्शयन्ति । श्रीमता डाक्टरलाइटनरमहोदयेनास्य मुद्रणव्ययनिर्वाहक्षमोऽर्थः प्रतिमासं प्रदीयते । सन्ति केचिदपरेपि संस्कृतानुरागिणो

महात्मानो येषामनुग्रहेण विद्योदय-बन्धन-प्रेषणव्ययादीन्यन्यान्यर्थसाध्यानि कर्माणि संसाधितानि भवन्ति। ततः परमेतत्संश्लिष्टानि यावन्ति कार्याणि मयैकेनैव सम्पाद्यन्ते। निरन्तरं, तत्तदुच्चावचव्यापारपरम्परानिरतत्वाद् ब्रह्मणो वेदजडत्वमिव ममापि विद्योदयजाड्यं संवृत्तं, येन हेतुना नाहमन्यविधेऽर्थागमोपायभूते कर्मण्यात्मानं नियोक्तुं शक्नोमि, प्रत्युत विद्योदयस्य कृते शरीरस्य समयस्यान्योपायलब्धस्यार्थस्यापि संक्षयं करोमि। एवं स्थिते प्रतिमासं श्रीमच्चरणकमलेभ्यो दशमुद्रार्पणं कथङ्कारं संभवेदितिचिन्ताकुलस्य मे मासद्वयं यावद् हृदयस्य सुमहत्युद्वेलता समुत्पन्ना, न क्षणमपि शान्तिरुदेति। तेनैतावन्तं कालं नाहाराय स्पृहयामि, नाऽपि सुखं निद्रामि, न यथेच्छं विहरामि, न सुहृद्भिः सह नर्म्मालापसुखमनुभवामि किंकर्तव्यविमूढश्च जडवत् समयं नयामि। अथ वारंवारं श्रीमतां तीव्रतरपत्रनिकरमधिगत्यातःपरं जोषावलम्बनमनुचितमिति विचार्य्य च सुरामूल्यकल्पं यत् किञ्चित् प्रेरयामि।

"सर्वनाशे समुत्पन्ने ह्यर्धं त्यजति पण्डितः।"

इति न्यायमनुस्मृत्य श्रीमद्भिः सन्तोषः करणीय इति सविनयं प्रार्थये।

वस्तुतो भवतां प्रयत्न एष सम्यगस्थाननिहित एव। इदानीं संस्कृतभाषां न कोऽप्याद्रियते, महामहोपाध्यायवंशधरा राजकीयामर्थकरीं विद्यामभ्यस्यन्ति। ततश्चेदं विचित्रं भवल्लेखनं विद्योदयगौरववर्द्धनमपि तद्रसास्वादकर्त्तुरत्यन्ताभावाद्भस्मनि हुतमिवारण्ये रुदितमिव च सर्वथा निष्फलमेव प्रतीयते। तथाप्यामन्त्रये भवतः, संभवश्चे-

दर्थलिप्सावृत्तिमन्यत्रान्यविधेनोपायेन चरितार्थां कृत्वा स्वगृहे भुञ्जानस्य वन्यमहिषसञ्चारणमिवाऽवसरे विद्योदयहितचिकीर्षां चरितार्थयितुमित्यलम् ।"—

पत्रमिदं वाचयित्वा युगपच्छोक-विस्मय-लज्जानामुदयान्मयाऽप्रतिपत्तिमूढमनसा द्वित्रा नाडिकाः स्थितं, चिन्तितञ्च किमिदानीं करणीयं, किन्तु वा युक्तरूपमेतस्यामवस्थायां भविता, तत् किमिदानीं संस्कृतविद्यायै स्वधर्माय च जलाञ्जलिं दत्वैतावति वृद्धे वयसि राजकीयामर्थकरीं विद्यामनुशीलयामि ! या नामैहिकहितसाधनाय सर्वविषयनिस्पृहस्यापि मम यत्किञ्चिदभावमात्रपरिपूरणाय लोकमनोरञ्जनाय च नालमस्ति, किं तया विद्यया ! यत्र निखिलजनानां विरागो धनिनाञ्चानादरो यस्या विधात्रैवागौरवं विहितं, तस्या गौरवरक्षणप्रयासो हि महामूर्खताविलसनम् । यदा सर्व एव भारतीयाः संस्कृतानुशीलनविमुखा गड्डलिकाप्रवाहेण राजविद्यां परमाग्रहेणाभ्यस्तुं प्रवृत्तास्तदा संस्कृतगौरवरक्षणे को नामाहं कीटाणुः क्षुद्रादपि क्षुद्रतमो जीवः । विशेषतः साम्प्रतं राजभाषानुशीलनमन्तरा संस्कृतगौरवरक्षणमपि न केवलमसम्भवि यावत् सुदुष्करमपि । राजभाषया संस्कृतशास्त्रीयवचनानां स्वकल्पितवैज्ञानिकव्याख्याप्रकाशनं विना संस्कृतभाषाया गौरवरक्षाप्रयत्नो हि प्रांशुगम्ये फले वामनस्य हस्तोद्गम इवोपहासताहेतुर्भवति । संस्कृतस्य गौरवं तदैव सुरक्षितं भवति, यदा कश्चिद्—'भारतभूमिरियं पूर्वं कोल-भिल्लप्रमुखासभ्यजनावासभूमिरासीद्, वेदाः कृषक-संगीतकान्येव, त्रयः शास्त्रस्य कर्तारो भण्ड-धूर्त-निशाचराः'—इत्यादीन्यन्यान्यपि मतानि युक्तियुक्तया राजभाषया सम्यग्

विवरीतुं शक्नोति। धर्मस्य मस्तके तु मया सुचिरमेव लगुडाघातः कृतः। अत इंग्लण्डीयभाषाभ्यसनमेव सर्वथा साधीयः। अथवा इंग्लण्डीयभाषानुशीलनेनापीदानीं किं लभ्येत; दृश्यन्ते हि बहव इंग्लण्डीयभाषोच्चतमपरीक्षोत्तीर्णा अपि युवान उदरमात्रपूर्त्तावप्यसमर्था ग्राम्यसारमेया इव समन्तात् क्षुधातुराः शीर्णकलेवराः परिभ्रमन्ति। अथ यदि कदाचित् कुत्रचित् स्ववृत्तिलाभगन्धं पश्यन्ति तदा मुहुस्ताडिता अपि बहवः पुनः पुनः समवेताः परस्परं दन्तादन्ति, हस्ताहस्ति केशाकेशि चैवमादि बहुविधं कलहं कुर्वन्ति। तेहीतो भ्रष्टास्ततो नष्टा न पैतृकवृत्तिमनुष्ठातुं पारयन्ति, नाप्यभिमतां राजसेवां लभन्ते, केवलं दुःखोत्तरमेव जीवनभारं वहन्ति। भवतु, तथाप्याध्यात्मिकव्याख्यासहितानि बहुविधानि पुस्तकानि रचयित्वा सुराममूल्यमर्जयामि किमु, तदपि न युक्तियुक्तं, मूल्यमन्तरा प्रदत्तेऽपि तथाविधे पुस्तके न कोपि पाठमात्रश्रमस्वीकरणेन समयस्य वृथापहरणं करिष्यति! क्रयवार्ता तावद् दूरेस्तु। यतः साम्प्रतं सर्व एव ग्रन्थकर्त्तारः पाठकास्तु विरला अथवा नैकोपि दृश्यते; प्रवक्तृ-यशःप्रार्थिनः सर्वे, श्रोतृलाघवमङ्गीकर्त्तुं नैकस्यापि प्रवृत्तिर्भवति; सर्व एव स्वगौरवप्रख्यापनाय प्रयतमाना न कश्चिच्छिष्यो भवितुमिच्छति; विशेषत इदानीं मुद्रायन्त्रबहुलप्रचारेण पुस्तकनिर्माणाऽऽजीविनां महती दलपुष्टिर्दृश्यते। ये खलु विद्यामर्जयितुं न पारयन्ति, नापि बुद्धिचातुर्यं प्रदर्शयितुं समर्था भवन्ति, न चापि सांसारिककर्मक्षमत्वं प्रख्यापयितुमलं भवन्त्यर्थाद् यदृच्छाशब्दवद् येषां केवलं संज्ञायै जन्म, सुतरां समयातिवाहनायोपायान्तरं नास्ति, ते सर्व एव पुस्तकरचनाकर्मणि

व्यापृता भवन्ति। तेषु च बहवः स्तेयकर्मनिरता दृश्यन्ते। अहो कालवशाद् विद्यारत्नस्यापि चौर्यभयमुपस्थितम्!। यदि कश्चित् सुविद्वान् बहु विचिन्त्य जगतामुपकाराय पुस्तकमेकं निर्माय प्रकाशयति तदा ते विद्याचौरास्तत्क्षणमेव नामान्तरेण तत्पुस्तकमाच्छाद्य क्वचित क्वचिदवयवस्य च विकृतिं विधाय स्वकृतितया प्रख्याप्य प्रकाशयन्ति, तदपेक्षयाऽल्पमूल्येन च विक्रीणते। अस्मिन् वार्धके कां वाऽपरां वृत्तिमाश्रयामि। अथवा सर्वास्वेव वृत्तिषु सुमहान् सम्मर्दो दृश्यते। महाकुलप्रसूता ब्राह्मणा अपि वृत्त्यन्तरमपश्यन्त आपणेषु निःशङ्कं घृतं तैलं किमन्यत् पादुकामपि विक्रीणते नचोदरं पूरयितुं समर्था भवन्ति। एवमादि बहु विचिन्त्यैव मया 'विद्योदये' स्वचरितलेखने प्रवृत्तिः कृता। आशंसितञ्च तेनाऽनायासमपेक्षितदशमुद्रालाभो भविष्यतीति। यतो विद्योदयोऽयमेकमात्रं संस्कृतपत्रम्। नूनमसौ भारते सर्वत्रैव प्रदेशे सादरं गृह्यते। किञ्च विशिष्टलाभमन्तरा कथं भवानेतावन्तं कालमनन्यकर्मा पत्रमिदं परमादरेण प्रकाशयति। वस्तुतो न स्वप्नेऽपि चिन्तितं मया यद् भवानियन्तं कालं केवलमनामिकावचनं प्रत्यक्षरं सफलयतीति! धिक् त्वामेवमफलव्यापारनिरतं, धिक् संस्कृतभाषां, या खल्वेवं शोच्यदशामुपेता नाद्याप्यन्तर्हिता भवति, धिक् सनातनधर्मानुरक्तान् धर्मध्वजिनो ये संस्कृतमनादृत्य स्वधर्मस्योज्जीवनमाकाङ्क्षन्ति, धिक् च मां संस्कृतमुपजीव्यार्थार्जन शसनवन्तम्। भवतु कालस्य कुटिला गतिरेकदा प्रतिश्लोकं ब्राह्मणैर्लक्षमुद्रा लब्धाः। अद्य तु सुदीर्घं प्रबन्धत्रयं रचयित्वाहं पञ्च मुद्राः प्राप्तवान्। अतः परं भवता निश्चिन्तेन स्थीयतां, अहं सुरामूल्यं केनचिदुपायान्तरेण संगृह्य विद्योदये

प्रतिमासं लिखिष्यामि । अत्र तु स्वचरितस्याप्रस्तुतत्वाद् विज्ञापनमेकं प्रेषयामि ।

दृश्यताम् ! दृश्यताम् !! दृश्यताम् !!!

अनादरेणापि सकृद् दृग्गोचरीकृत्य सफलयन्तु चर्मचक्षूंषि भवन्तः, सार्थकं कुर्वन्तु दुर्लभं मनुष्यजन्म । अदृष्टपूर्वोऽश्रुतचरोऽमानुषगोचरोऽत्यैशसामर्थ्यः सुमहान् व्यापारः । आश्चर्यमाश्चर्यमाश्चर्यमद्भुतमद्भुतमद्भुतम् !!! सृष्टि-स्थिति-प्रलयैककारणेन परमेश्वरेणातिप्रयत्नेन पिनद्धमप्यदृष्टद्वारमुद्घाटितमद्य । नातः परमदृष्टस्यादृष्टत्वं स्थास्यति । दृष्टवददृष्टमपि सर्वेषामक्षिगोचरं भविष्यति । त्वर्यतां त्वर्यतां, सम्प्रति हि भूत-भविष्यद्-वर्तमान-घटनावलि-सङ्कलनपटीयान् भाग्यघटित-कूटप्रश्नोद्घाटनपटुरघटनीयघटनाप्रकटनैकवीरो ज्योतिर्विदामग्रणीः परमकारुणिकः परमेश्वरावतारः श्रीलश्रीपञ्चलाञ्छितसर्वजनवाञ्छितचरणदीनोद्धरणव्रतानाथैक-शरण-दुर्गानन्दस्वामि-महोदयो ऽविमुक्तक्षेत्रे काशीनगरे कालभैरवसमीपे नवसंख्यकभवने निवसति । स हि परमहंसः संन्यासी नास्त्यस्यार्थप्रयोजनं किमपि । स्वाश्रितदीनाऽनाथप्रतिपालनहेतोर्यत् किञ्चित् काञ्चनमूल्यं गहीत्वा जनानां शुभाशुभगणनां करोति परन्तस्य कटाक्षक्षेपमात्रेणाशुभान्यपि शुभरूपतां दधते । भूतजन्मशतानां भाविजन्मसहस्राणामपि वृत्तान्यनायासेन कथयति । अलमतिविस्तरेण ।

---

(५)

अहो ! नु खलु जगति श्रेयसां बहव एवान्तराया दृश्यन्ते । तथा-ह्यशेषमङ्गलास्पदस्य पावनानामपि पावनस्य मज्जीवनवृत्तस्य पदे पदे प्रत्यूहनिवहा आपद्यन्ते । अद्य प्रातःकृत्यं समाप्य कथमपि मनःस्थैर्यं-सम्पाद्य लेखितुं प्रवृत्ते मयि 'डाक'-पदातिरागत्य मह्यं पत्रमेकम-र्पितवान् । तदुद्घाट्य वाचयित्वा ज्ञातं मया, केनचिच्छिष्येण मद्दर्शना-र्थमुदरदर्शनं नाम कश्चिदभिनवो निबन्धः प्रेषित इति । लिखितञ्च तेन संशोध्यासौ विद्योदये प्रकाशनार्थं प्रेरयितव्य इति । ततश्च तद-नुरोधेन मयाऽसौ निबन्धो भवदन्तिके प्रेष्यते । ततः परं भवान् प्रमाणम् । मारयतु, कुट्टयतु वा ।

## उदर-दर्शनम्

(सवृत्ति)

### अथातो ब्रह्मजिज्ञासा ॥ १ ॥

'अथ' शब्दोऽयं ग्रन्थादौ प्रयुज्यमानो मङ्गलं विदधाति; आनन्त-र्यं व्यनक्ति च । वेदवेदाङ्गादिषु चतुर्दशविद्यानां यथाविध्यध्ययनतोऽपि तत्त्वतो ब्रह्मरूपाविज्ञानाद् शिष्यस्य तदनन्तरमपि ब्रह्मविषयिणी जिज्ञासा प्रवर्त्तत इत्यर्थः । किन्तद् ब्रह्मेति जिज्ञासायामाह—

### उदरं तत् ॥ २ ॥

अस्मिन् संसारे ब्रह्म नाम किमपि वस्तु वेदितव्यमस्ति चेत्तदुदर-मेव ।

व्यापकत्वात् ॥ ३ ॥

तत्र हेतुमाह—व्यापकत्वादिति । व्यापकं ब्रह्मेति श्रुते रुदरस्याकीटमाकैटभारि सर्वजगद्व्यापकत्वात् ब्रह्मत्वमव्याहतमेव । उदरं विना चेतनानां क्षणमात्रमपि श्वसनाभावादचेतनेष्वप्युदरस्य सत्त्वमवलोक्यते । यथा घटोदरं, जलदोदरं, पातालोदरं; किं बहुनाऽवस्तुनः शून्यात्मकस्याकाशस्याप्युदरमस्ति । 'ब्रह्माण्डभाण्डोदरं ब्रह्मेति' पुराणादौ सुप्रसिद्धमेव ।

अनाद्यनन्तत्वात् ॥ ४ ॥

पुनश्च हेतुं दर्शयति—अनाद्यनन्तत्वादिति । अनाद्यनन्तं ब्रह्मेति श्रुतेरुदरस्यापि तथात्वात्तदेव ब्रह्मेत्युपपन्नम् । उदरस्याद्यन्तताविरहितत्वञ्च प्रत्यक्षसिद्धमेव ।

औदासीन्याच्च ॥ ५ ॥

हेत्वन्तरमुपन्यस्यति—औदासीन्याच्चेति । 'उदासीनः पुरुष' इति श्रुतेरुदरस्य सर्वथौदासीन्यदर्शनाच्च तदेव ब्रह्मेत्युपपन्नमित्यर्थः । उदरं सर्वदा मध्यस्थं, निश्चेष्टं च वर्तते, न कदापि कस्मिन्नपि व्यापारे प्रवर्त्तमानं भवति, ततश्च तदेव ब्रह्मेत्यायातम् ।

सान्निध्यमात्रेण प्रयोजककर्तृत्वात् ॥६॥

अन्यं हेतुमुपन्यस्यति—सान्निध्यमात्रेणेति । उदरं हि स्वयमुदासीनमपि स्वसान्निध्यवशादेव सर्वाणीन्द्रियाणि, सर्वानवयवान, सर्वांश्च जीवान् स्व-स्व-कर्मणि प्रयोजयति । जगत्यस्मिन्नाकीटमाकैटभारि

यावतां प्राणिनां यावत्यः प्रवृत्तयो दृश्यन्ते, ताः सर्वाः प्रति उदरसत्त्वमेव कारणम्। द्वेषो, हिंसा, शत्रुत्वं, मैत्रीत्येवमाद्याः सर्वा वृत्तयश्चोदरहेतोरेवोत्पद्यन्ते। उदरकारणादेव पितरौ पुत्रमितरवस्तुवद्विक्रीणाते, पुत्रः पितरं निहन्ति, सहोदरः सहोदरं घातयति, दायादा दायादानां प्राणानपहरन्ति, स्त्री स्वामिनं परित्यजति, पतिश्च धर्मपत्नीमन्यस्मै समर्पयति, बान्धवाः परस्परं विवदन्ते, राजानः प्रजाः पीडयन्ति, प्रजा राज्ञे द्रुह्यन्ति। इत्येवमादीनि सर्वविधान्येव विचेष्टितान्युदरकारणकान्येव। यद्युदरं न स्यात् तदा कापि क्रिया न प्रवर्त्तेत। अत एव यावतां कर्म्मणामुपर्य्युदरस्यैवाध्यक्षत्वं सिद्धम्। ब्रह्मणश्च "मयाध्यक्षेण प्रकृतिः सूयते सचराचर"-मित्यादिभगवद्वाक्येन तथाविधाध्यक्षत्वमेवेति द्वयोरैक्यमापतितम्।

अपरिच्छेद्यत्वात्॥ ७॥

हेत्वन्तरं दर्शयति—अपरिच्छेद्यत्वादिति। उदरं ब्रह्मेति शेषः। उदरं हि नेयत्तया परिच्छेत्तुं शक्यते। कस्यचिदुदरं सूक्ष्मादपि सूक्ष्मतमं, कस्यचिच्च महाभाण्डमिव महास्थूलं; विशेषतः स्त्रीणान्तु कस्याश्चिदुदरं सदसत्संशयगोचरमपरस्या द्व्यणुकसदृशमन्यस्या मुष्टिमेयमपरस्याः कुम्भोपमम्। पुंसामपि लम्बोदर-वृकोदराद्यनेकभेददर्शनात्। कस्यचिदुदरमल्पेनैव पूर्णं भवति; अपरस्य पृथिव्या यावता व्रीहियवेनापि न पूर्य्यते। एकस्योदरं लघुप्रकारमन्यस्य तु सुगौरवसम्पन्नमित्याद्यनेकप्रकारमेव, तन्नेयत्तया नेदृक्तया च परिच्छेत्तुं शक्यते। ब्रह्मापि तथाविधमेव, तथाहि भगवान् कालिदासः—

"द्रवः सङ्घातकठिनः स्थूलः सूक्ष्मो लघुर्गुरु" रिति।

सर्ग-स्थिति-प्रत्यवहार-हेतुत्वात् ॥ ८ ॥

कारणान्तरमुपन्यस्यति—सर्गस्थितीत्यादि । सर्गः सृष्टिः, स्थितिः प्रतिपालनं, प्रत्यवहारः प्रलयस्तेषां कारणत्वात् उदरं ब्रह्मेति शेषः । संसारे ऽस्मिन् प्रत्यहं प्रतिक्षणं यद्यदभिनवं वस्तु सृज्यते, आविष्क्रियते, आविर्भाव्यते वा, तत्सर्वं प्रत्युदरस्यैव हेतुत्वम् । उदरकारणादेव जनाः प्राणान् पणीकृत्य प्रयासं कुर्वाणाः प्रतिक्षणं पूर्वसृष्टेभ्यो विलक्षणं किमप्यदृष्टपूर्वमश्रुतचरं वस्तु स्रष्टुं प्रयतन्ते । केचिच्च पूर्वसृष्टानां वस्तुविशेषाणामवयवविशेषस्य विकृतिमुत्पाद्याऽपूर्वतया प्रख्यापयन्ति तत् । ग्रन्थकर्तृणां—विशेषत आधुनिकग्रन्थकर्तृणां मध्ये रीतेरस्याः प्राबल्यं दृश्यते । वर्त्तमानग्रन्थकर्तारो हि प्रायोऽपर-बहु-चिन्ताप्रयत्न-प्रसूतानां निबन्धानामवयवविशेषेष्वनायासेन विकृतिमुत्पाद्य स्वकृतित्वेन प्रकटयन्ति; अन्ये च केवलमावरणपत्रस्य परिवृत्तिं विधाय तदेवात्मकृतित्वेनाख्यापयन्ति । इत्थमुदरकारणात् पृथिव्यामस्यां कति कति ह्यदृष्टचराऽश्रुतपूर्व-च्छल-कापट्य-शाठ्य-चातुर्य्य-प्रवञ्चना-प्रतारणान्यनुष्ठीयन्ते, को वेत्ति ? उदरकारणादेव जना जननीं जन्मभूमिञ्च परिहृत्याबाल्यबान्धवान् परित्यज्य दूराद् दूरतरान् देशान्, द्वीपान्तराणि, दुस्तरजलनिधीन् , अत्युच्चपर्वतशिखराणि, दुर्गमकान्तारांश्च परिभ्रम्य कत्यद्भुतवस्तून्याविष्कृत्य लोकेऽस्मिन्नद्भुतरसस्याविर्भावं कुर्वन्ति ।

लोकेऽस्मिन् या काचिदभिनवा निर्मिति राविष्कृति राविर्भूतिर्वा दृश्यते, तां सर्वां प्रत्युदरस्यैव कारणत्वं प्रतिभाति । उदरार्थमेव लौहवर्त्मनां, वाष्पीयार्णवपोतानाञ्च निर्माणमभवत्, उदरार्थमेव

वैद्युतवार्त्तावहयन्त्राणां ताडितालोकव्यतिकरस्य, बाष्पीयदीपमालानां व्योमयानव्यापारस्य च सृष्टिर्बभूव। उदरकारणादेवाशेषविधानां शिल्पानां नृत्यगीतप्रमुखाणां कलानाञ्च प्रकाशोऽजायत। उदरहेतोरेवायुर्वेदधनुर्वेदनीतिशास्त्रवार्त्तादण्डनीत्यान्वीक्षिकीपुराणेतिहासकाव्यव्याकरणाद्यशेषशास्त्राणां, मुद्रायन्त्रस्य च सृजनं सञ्जातं; संवादपत्राण्यप्युदरार्थं निर्मितानि, किंबहुनाऽधुनातनपरीक्षासृष्टिं प्रत्यप्युदरस्यैव हेतुता।

यथा सृष्टिं प्रति, तथा पालनं प्रत्यप्युदरं कारणं; तथाह्युदरनिमित्तमेव राज्ञा प्रजाः, पितृभिः पुत्राः, पतिभिश्च दाराः परिपाल्यन्ते। पण्डितानां शास्त्रपालनं, पुरोधसां धर्मपालनं, प्रजानां राजनियमपरिपालनञ्चोदरार्थमेव। उदरार्थमेव हस्तिपकाः करिणो मन्दुरापालास्तुरङ्गमानुद्यानपाला उद्यानानि, गोपाला गाः; मेषपालाश्च मेषान् परिपालयन्ति। इत्थं सर्वविधाः पालनक्रियाः प्रत्युदरस्यैव हेतुत्वं सुप्रसिद्धमेव। उदरकारणादेव भृत्याः स्वामिन आदेशान्, स्त्रियो भर्तृवचनानि, सत्पुत्राश्च पित्रुपदेशान् प्रतिपालयन्ति। उदरार्थमेव धनिनो धनानि, वेश्या यौवनं, बलिनो बाहुबलं, श्वपचाः श्वानञ्च परिपालयन्ति। सर्वेषां जीवानां, स्वशरीरप्रतिपालनं प्रति तूदरस्य साक्षादेव हेतुत्वम्। उदरमन्तरा न कस्यापि शरीरं संरक्षितं भवेत्। उदरार्थमेव जना जगति पाण्डित्यं, शिल्पकौशलं, कवित्वं, वाग्मितां, धर्मञ्च सुचिरं परिपालयन्ति। उदरनिमित्तञ्च मानवा आचारविनयादीन् सद्गुणान् परिपोषयन्ति।

अथ लयं प्रत्यप्युदरस्यैवमेव हेतुत्वम्। जगत्यत्र समान्ताद्या-न्युच्चावचानि वस्तुजातानि दृश्यन्ते, तानि सर्वाण्युदर एव प्रलीनानि भविष्यन्ति। लीयन्ते च प्रत्यहं प्रतिक्षणं कति नाम पशवः पक्षिणः फलानि मूलानि सस्यपङ्क्तयः घृतकलसा दुग्धकलसा नवनीतपिण्डा दधिभाण्डानि, चान्यान्यप्यनेकविधानि वस्तुजातानि प्राणिनामुदरेषु, को नाम तानीयत्तया परिच्छेत्तुं शक्नोति। कति नाम महार्घाणि पुस्तकानि कीटानामुदरे प्रलीनानि कस्तावद्वेत्ति, कति वा बहुमूल्यानि वस्त्राणि मूषकैरुदरसात् कृतानि को गणयितुं शक्नोति। बहुभिः पितृपैतामहानि समृद्धानि राज्यान्येव प्रदीप्तोदरानले समाहुतानि। अपरैः पूर्वपुरुषपरम्पराक्लेशार्जितान्यपरिमितानि धनान्युदराभ्यन्तरीकृतानि। अन्यैश्च पैतृकवासभवनान्यप्युदरार्थं क्षपितानि। गृहस्थैर्यावन्ति वित्तान्यर्ज्यन्ते तेषु कानिचिद् भृत्यानामुदरे, कानिचिच्च चिकित्सकानामुदरे, कानिचिच्च स्वर्णकाराणामन्यानि स्वपुत्राध्यापकानामपराणि पुरोहितानामवशिष्टानि स्वकुटुम्बानामात्मनश्चोदरे प्रलयं प्राप्नुवन्ति। आपाततो वस्तूनां यथा तथा प्रकाशो भवतु, परिणामे तु सर्वेषामुदराभ्यन्तर्लयो भविष्यतीत्यत्र कोऽपि सन्देहो नास्ति। यथा पतङ्गाः प्रदीप्तमनलमभिद्रवन्ति, तथा सर्वाणि सृष्टवस्तूनि समिद्धमुदरानलमनुधावन्ति। एकैकस्मिन् नगरे प्रत्यहं प्रातः कतिविधानि नाम वस्तूनि कतिविधैश्चोपायैर्लौहवर्त्मनार्णवपोतैर्नौभिः शकटैर्भारवाहिकैश्च समाह्रियन्ते, किन्तु सूर्यस्य मध्येरेखाविलङ्घनात् पूर्वमेव तानि सर्वाण्युदरमध्यलीनानि भवन्ति। इत्थमुदरस्य सृष्टिस्थितिलयहेतुत्वमवेक्ष्य तदेव ब्रह्मेत्युपपन्नमेव।

सर्वसेव्यत्वात् ।।९।।

सर्वैर्विभिन्नजातीयैर्विभिन्नदेशीयैः परस्परं पृथग्रूपैः, पृथक्शीलैः पृथक्चेष्टितैः पृथग्विधधर्म्मानुष्ठाननिरतैरपि मनुजैः सेव्यत्वात् "एकमेवाद्वितीयरूपस्य" परब्रह्मणः सेवायां न कस्यचिद्विमतिरन्यासु देवतासु विवादपराणां हि तेषां परब्रह्मसत्तायां सर्वथा निर्वाद एव। उदरमपि सर्वैर्हस्तपादाद्यवयवैः, सर्वविधैर्वा मानवैरपरैश्च जन्तुनिवहैः सदा सेव्यते। उदरसेवार्थमेव चरणावितस्ततः परिभ्रमतः। न दुरारोहपर्वताग्राक्रमणे, न वा दुस्तरकान्तारपथपरिभ्रमणे भीतिं भजेते, कण्टकक्षतिमपि न जानीतः, लोष्ट्रव्यथामपि नानुभवतः, सूचिवेधमपि न गणयतः, न श्रमं क्लान्तिं वा विचारयतः, न क्षतानि पश्यतः, न वा तत्क्षतस्थानाद् धाराप्रवाहेण क्षरन्तं रुधिरौघमपेक्षेते। एवं हस्तद्वयमप्युदरसेवार्थं निरन्तरं यतते, प्रवर्तते चासाध्यमपि साधयितुं, न निवर्त्ततेऽकार्य्येभ्यः। उदरसेवार्थमेव वीराणां बाहुबल-प्रकाशनं, तदर्थमेव धन्विनां हस्तलाघवं च श्रूयते। न सन्त्यत्रैवंविधानि पापकार्य्याणि यानि खलु मनुजहस्तैर्नोदरार्थमनुष्ठितानि, पितृभ्रातृज्ञातिबान्धवगुरुवधप्रभृतीन्यसंख्यान्यनेकविधान्यपि पापकर्माण्युदरार्थं मानवहस्ताभ्यां संपाद्यन्ते। श्रीकृष्णचरणानुगतैः साक्षाद्धर्मपुत्रपुरः सर्वधर्मधनैः पाण्डवैरप्युदरार्थं स्वहस्तेन गुरोर्वधः कृतः। पितामहेन भीष्मेण धर्मज्ञानां प्रवरेणाप्य"र्थस्य पुरुषो दास" इति वदतोदरार्थमेव स्वहस्तेन स्वाश्रितानां बलं क्षपितम्। इत्थं स्वपरदेशीयेतिहासेष्वसंख्यान्युदाहरणानि लभ्यन्ते। यथा पापानि, तथा पुण्यकर्माण्यपि मानवहस्ताभ्यामुदरार्थमनुष्ठीयन्ते। शिल्पिनां शिल्पेषु यद्धस्तपाटवं, द्यूतकराणामक्षपातेषु च यद्धस्तदाक्ष्यं दृश्यते, तत्सर्वमुद-

रसेवार्थमेवाभ्यस्यते। किं बहुना संसारेऽस्मिन् यावन्तो हस्तव्यापारा वर्त्तन्ते, तेषां सर्वेषामुदरसेवार्थमेव प्रवृत्तिरिति तत्त्वतः समालोच्यैव विभाव्यते। उदरार्थमेव वागिन्द्रियस्य सृष्टिरिति धर्माधिकरणेषु व्यवहारोपजीविनां प्रतिभुवां मिथ्यावागाडम्बरेण, तथा शिक्षकाणां च स्वशक्त्यधिकतारस्वरोच्चार्यमाणोपदेशवचनेन च साक्षादनुभूयते। उदरसेवार्थमेव वागियं कदाचिद् गीतिरूपेण, कदाचित् स्तुत्याकारेण, कदाचिच्चाटुतया, कदाचिदाशीराकारेण, कदाचिद् धर्मोपदेशच्छलेन, कदाचिच्च विचित्रव्याख्यानमिषेण यत्र तत्रैव, स्थानास्थाने, पात्रापात्रे अविचार्य्यैव निर्गच्छति। उदरसेवार्थमेव कदाचिदियं मिथ्या सत्यपि सत्यस्वरूपं दधाति, कदाचिन्माधुर्य्यं विस्तार्य्य श्रोतृवर्गाणां हृदयमाकर्षति, कदाचिच्च दुःसहकार्कश्यमुद्गीर्य जनानामुद्वेगमुत्पादयति। किं बहुना, इह संसारे यावन्ति वाग्वैचित्र्याणि लक्ष्यन्ते, तानि सर्वाण्युदरार्थमेवाविर्भूतानि। रसनेन्द्रियस्य तु साक्षादुदरसेवार्थं जन्मेत्यपि किमु वक्तव्यम्। विभावसोर्वात्येव, जन्मान्धस्य यष्टिरिवाऽऽद्यूनस्य साध्वी गृहिणीव, रसना खलूदरस्य परममवलम्बनं; रसना च साध्वी भार्य्येव सर्वात्मनैवोदरस्य सेवां कुरुते, यत् किञ्चिदिष्टमनिष्टं वा वस्तु लभ्यते, तत् सर्वं स्वयमगृहीत्वैवोदराय यथायथं समर्पयति। दर्शनेन्द्रियमप्येवमेवोदरं सेवते। तद्ध्युदरार्थमेव दूराद्दूरतरं दृष्टिं विस्तारयति, भूमेरधस्तात्, पर्वतस्य शिखरे, समुद्रस्य गर्भे समवस्थितानि रत्नजातान्यवलोकयति। क्षुद्रात् क्षुद्रतराण्यप्यपरस्य छिद्राणि निरीक्षते, परमुखमपेक्षते, प्रमुहृदयं साभिनिवेशमन्वीक्षते, परीक्षते चादृष्टविलसितानि।

श्रूयते हि कदाचिद्धस्तपादाद्यवयवा उदरस्य प्रभुत्वमसहमाना अमर्षाकुलाः स्वस्वव्यापारेभ्यो विरता अतिष्ठन्, परं स्वल्पेनैव कालेन ते स्वयमेव क्षामक्षामाः मुमूर्षव इव निश्चेष्टाः सञ्जाताः, ततः प्रभृत्युदरस्य महिमानं सम्यग् विज्ञातवन्तः। आरब्धवन्तश्च सर्वप्रयत्नेन तस्य शुश्रूषणमिति। इत्थं सर्वसेव्यत्वरूपसाधारणधर्म्माध्यासादुदर-ब्रह्मणोः परमैक्यमापतितम्। किन्तु चेतनावद्भिरेव जीवैर्ब्रह्मेत्यवाङ्मनसगोचरं किमपि वस्तु परिकल्प्य तस्योपासना क्रियते। उदरसेवा पुनश्चेतनाचेतनजीवसमुदायैरनुष्ठीयते। कीटाणुत आरभ्य कैटभारिपर्य्यन्ता यावन्तो जीवाः संसारेऽस्मिन् विचरन्ति, ते सर्व एवोदरसेवायामविशेषाः। भोजनसमयापगमे पिपीलिकाया यादृक् चाञ्चल्यमुपजायते, सर्वजगत्प्रभविष्णोः श्रीविष्णोरपि तथैव। सदसज्ज्ञानविरहितानां महामूढानामपि जन्तूनामुदरज्ञानसद्भावश्च सर्वानुभवसिद्ध एवेति ब्रह्मतोऽप्युदरस्याधिक्यं मन्यामहे।

सर्वध्येयत्वात् ॥१०॥

ब्रह्म यथा ध्यानैकगम्यमिति, आत्मारामाः सर्वे योगिनो निर्विकल्पं समाधिमास्थाय तद् ध्यायन्ति, तथा सर्वे खलु संसारिण एकाग्रचेतसोदरमपि परिध्यायन्तीत्युदर-ब्रह्मणोरैक्यम्। किञ्च संसारेऽस्मिन्नुदरचिन्ताया गरीयस्त्वं परिभाव्यते। अस्मिन् सर्व एव क्षुद्रेभ्योऽपि क्षुद्रतमा महद्भ्योऽपि महत्तमा जीवा उदरचिन्तापरायणाः परिलक्ष्यन्ते, देवा यक्षा नागा गन्धर्वा अप्सरसोऽसुरा विद्याधरा मानवाः पशवः सरीसृपाः सर्वजीवा एवोदरध्याननिमग्नाः कालमतिवाहयन्ति। संसारे पुत्रकलत्रादिविषयिणीर्विषमचिन्ताः परित्यज्य वनमाश्रिता अपि

कति संन्यासिन उदरचिन्तां न परित्यक्तुं शक्नुवन्ति। श्रूयते हि महायोगिनोऽपि परमेश्वरचिन्तनान्निवर्त्तमाना उदरचिन्तायां प्रवर्त्तन्ते। तथा साक्षात्कृतपरतत्त्वानां त्रिकालज्ञानां सिद्धपुरुषाणामपि चेतांस्युदरचिन्तां कुर्वन्तीति। किञ्च सन्त्यत्र बहवो ये खलु स्वप्नेऽपि परमेश्वरचिन्तां न कुर्वन्ति, बहवश्च परमेश्वरचिन्ताया नामप्रकारमपि न विजानन्ति नापि श्रुतवन्तो वा; किन्तूदरचिन्ताविरहितस्तु नैकोऽपि दृश्यते। धनिनो निर्धना; बलिनो दुर्बलाः पण्डिता मूर्खा वृद्धा बाला युवानः शिशवः पुमांसः स्त्रियश्च सर्व एवोदरचिन्तायां निमग्नाः समयं नयन्ति। मानवाः प्रायः स्नेहं दयां सौख्यं स्त्रियं पुत्रांश्चानायासेन परित्यज्य स्वोदरचिन्तायां निमज्जन्ति, धर्माधर्मौ हिताहिते विस्मृत्यापि जना उदरचिन्तायां प्रवर्त्तमाना भवन्ति। उदरचिन्तायां निमग्ना हि मानवा न भद्राण्यभद्राणि वा विचारयन्ति, नात्मनो बलाबले विगणयन्ति, न कालाकालौ पश्यन्ति, न जातिभेदं गणयन्ति, न समाजशासनाद् बिभ्यति, न शिष्टाचारानाद्रियन्ते, न वंशमर्य्यादां वीक्षन्ते, न कौलीन्यमपेक्षन्ते, न वा लोकस्थितिं सम्मानयन्ति। संसारस्थिता अपि उदासीना इव, सर्वसम्बद्धा अपि निर्लिप्ता इव, समाजमध्यस्थिता अप्यगणितसमाजशासना इव, सर्वजनपरिवृता अप्येकाकिन इवात्मानं मन्यन्ते। योगिन इव बाह्यज्ञानशून्या भवन्ति; एते न चात्मपरभेदं विजानन्ति। अपरैर्बहुयत्नाहृतमप्यात्मोदरसात् कर्तुमीहन्ते वस्तु। अन्येषां कवलगतमपि भक्ष्यं कथमपि स्वयमाहर्त्तुं यतन्ते। उदरध्यायिनां न कदाचिदपि तद्ध्यानाद्विरतिर्भवति, ततस्ते सर्वदा जन्मान्धा इव चक्षुषी निमी-

ल्यैव तिष्ठन्ति, न पार्श्वस्थितान् सुचिरसंस्तुतानपि जनान् विजानन्ति, तेन हि स्वकर्मजनितानि तेषां दुःखशतानि न पर्यवेक्ष्यन्ते। ते हि बधिरा इव कर्णौ पिधाय वर्त्तन्ते, ततश्च स्वव्यवहारजन्यः परेषामार्त्तनादो जनापवादो वा तेषां न श्रुतिगोचरो भवति। नियतात्मोदरचिन्तनैकतानतया नान्येषां मर्मवेदनाः किञ्चिदपि प्रतिबुध्यन्ते। अपि चोदरध्यायिनां सिद्धिलाभश्चानायाससिद्ध एव। तथाहि समयोचितमाचरितुमीशते, कपटमधुरव्यवहारेण सर्वानेव वशीकुर्वन्ति, यद्यदभिलषन्ति सर्वप्रयत्नेन तत् तत् साधयन्त्येव, न च केनापि हेतुना तेषामिच्छा विहन्यते। तेषां गतिस्त्वप्रतिहता सर्वत्रैव भवति, चाण्डालगृहे, पण्डितवेश्मनि, अन्यत्रापि सतामगम्येऽशक्यगमने तेऽवहेलयैव विशन्ति। ते दातॄणामग्रतस्तृणादपि लघुतां प्राप्नुवन्ति। अधमर्णानां याचकानां च समीपे महद्गौरवमाश्रित्य तूष्णीं तिष्ठन्ति। ते ह्यन्येषां का कथा शरीरेषु, मनःस्वपि प्रवेशं लभन्ते। इत्थमुदरचिन्तकानां नाना विभूतयः संपद्यन्ते। इतरेषामपि जन्तूनामुदरचिन्ता मानवैस्तुल्यरूपैव। बकानामुदरध्यानपरता—"पश्य लक्ष्मण पम्पायां बकः परमधार्मिक" इत्यादिवचनैः सुप्रसिद्धैव। बिडालानामुदरध्यानैकतानता च प्रत्यक्षसिद्धैव। गोमहिषादयः पशवस्तु भोजनान्तरमेवामीलितनयना रोमन्थच्छलेनोदरचिन्तायां पुनर्निमज्जन्तीव। इत्थं सर्वैः सर्वदा चिन्त्यमानत्वादुदरमेव ब्रह्मेति पर्य्यवसितम्।

सदसज्ज्ञानगोचरत्वात् ॥ ११ ॥

उदरं ब्रह्मेति शेषः। यथा खलु ब्रह्म कैश्चिदास्तिकैः सदिति

ज्ञायते; अपरैश्च नास्तिकैरसदिति निश्चीयते। तथा च श्रीमद्भगवद्गीता—"न सत्तन्नासदुच्यते" इति; उदरमपि तथैव। तथा च "सदसत्संशयगोचरोदरी"ति श्रीहर्षः। किञ्च केषाञ्चिदुदरं ब्रह्माण्डान्तर्गततत्तदशेषवस्तुभिरापूर्यमाणमपि तृप्तिमलभमानं पुनः पुनस्ततोप्यधिकमाकाङ्क्षत् स्वसत्तायाः सम्यक् प्रख्यापनं करोति; येनान्ये मुग्धस्वभावास्तस्य तथाविधसर्वङ्कषत्वमविजानन्तस्तदन्तःपतिताः पुनः पुनश्चेष्टमाना अपि ततो निर्गन्तुमक्षमा अवशास्तत्रैव क्रमेण विलयं प्रपद्यन्ते। चतुरजनास्तु तदन्तःप्रवेशशङ्कयेव कृतप्रणामा दूरत एव तत्सङ्गं परिजिहीर्षन्ति। सन्तोषामृततृप्तानामतिविरलानामेव कतिपयानां करगतेऽपि वस्तून्यनाद्रियमाणानां पुनरुदरस्यासत्तैव प्रतीयते, येन जना अकुतोभयास्तेषां परितः सञ्चरन्ति। इत्थं सदसज्ज्ञानगोचरमुदरमेव ब्रह्मेत्यवदातं सर्वम्॥

( इति श्रीमत्पूज्यपादपरिव्राजकमहाराजश्रीदुर्गानन्दस्वाम्यन्तेवासिश्रीज्ञानान्दसरस्वतीकृतौ सर्वस्युदरदर्शने प्रथमाध्यायस्य प्रथमाह्निकं समाप्तम्। )



( प्राप्तपत्रम् )

( २ )

# पुंसामविमृश्यकारिता

"वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ।"

इतः पूर्वं मया विद्योदयपत्रे पत्रमेकं प्रेषितम् । तद्धि महारण्ये रुदितमिव, भस्मनि चाहुतमिव सर्वथा निष्फलमेव संवृत्तम् । सारग्रहणपराङ्मुखा अन्तःसारशून्या अस्मद्देशीयपण्डितम्मन्यास्तन्नाम स्त्रीलेखनीनिर्गतं न भवितुमर्हतीत्येवमाद्यलीकमनर्थकञ्च तर्कजालमातन्वानाः स्थिताः । न च किमुद्दिश्य नैसर्गिकशालीनताजडीकृता भारतकुलललनाहृदयकन्दरान्तर्निरन्तरनिरुद्धाऽविज्ञातकण्ठपथबहिर्गमनकौशला, सखीजनश्रुतिपथावधिसञ्चरणभीता मादृशां वाणी निरर्गलं सर्वजनसमक्षं निश्चक्राम ? कथं वा मयाऽपि वाचा समं रमणीजनानुचितं प्रागल्भ्यमाविष्कृतम् , कस्माद्वाऽकस्मात्तत्रभवतां भवतामुपरि सुदुःसहवज्रसारमिव वाक्शल्यमहमारोपितवतीत्यादिके वस्तुनि न समुदितो नाम कस्यापि कोऽपि तर्कः ! दूरेऽस्तु तावदाशङ्कितापत्-प्रतीकारचिन्ता । अहो धिगस्मान् भारतकुलयोषितो यासां सकरुणार्त्तनादस्य श्रोतारोऽपि दुर्लभा एव ।

न ज्ञायते कतमेन जन्मान्तरीणदुष्कृतकर्मणा सांप्रतं भारते वर्णाश्रमिणां गृहे जन्म भवति; तत्रापि नारीकुले ! भारतीयरमणीनां दुःखानि खलु नेयत्तया निगदितुं शक्यन्तेऽथवा केवलं दुःखानामनुभवायैव

तासु चैतन्यमारोपितम् । किं ब्रवीमि साम्प्रतमस्मद्-दुःखदर्शनदयार्द्र हृदयैः कति नाम पुण्यश्लोकैः कृतविद्यैर्भारतीयरमणीकुलक्लेशापहरणाय यो यो यत्नः क्रियतेऽप्रतिहतरयेण सलिलप्रवाहेण सैकतः सेतुरिवातिप्राबल्यमापन्नेनास्मद्-दुर्भाग्यचयेन सर्व एवाऽसौ विफलीक्रियतेतराम् । ऊषरभूमिपतितं स्वादुफलबीजमिवास्मद्धितानुष्ठानं न केवलं शोच्यं भवति प्रत्युत विषवृक्षसंसृष्टं सहकारफलमिवास्मद्-दुरदृष्टसांसर्गाद् विषमयमिवातिविषममास्वादं जनयति च । तथाहि तैः खल्वस्मदज्ञानतमःप्रध्वंसाय सुशिक्षा प्रवर्तिता, सा त्वस्मद्धन्यतया विषमविपाका संजातेति पूर्वपत्रे संसूचितमेव मया । किञ्च तैरस्मासु बालविधवानामतिदुःसहचिरवैधव्यक्लेशोपशान्तये विधवाविवाह-प्रचारार्थमुद्यमः क्रियते परमस्मासु तद्विपरीतैव शिक्षा वितन्यते तथा ह्याबाल्यं वयमुपदिश्यामहे स्वजनैरध्यापकैश्च सीतासावित्रीप्रमुखा इव पातिव्रत्यमवलम्बितुम् । पठ्यन्तेऽस्माभिस्तथाविधान्येव पुस्तकानि विद्यालयेषु । अहो असामञ्जस्यं चेष्टानाम् ! मरणान्तं यावदेकैकपत्युपरमे पत्यन्तरग्रहणविधिर्विधीयते, उपदेशः क्रियते च यावज्जीवमेकपतिव्रतानां चरितमालम्बितुम् ! दुर्मतिविलासः खल्वेषः । न तैर्मनागपि विचार्यते कथमेकत्र सुदृढबद्धरागाभिस्तदुपरमक्षण एवान्यत्र तथाविधोऽनुरागो विधेय इति । सीतादीनां पातिव्रत्यं नाम जन्मान्तरसहस्रेष्वपि तदेकपतिलिप्सानुकूलाचरणम्—"सती च योषित् प्रकृतिश्च निश्चला पुमांसमभ्येति भवान्तरेष्वपी"-त्येवंविधदृढप्रत्ययमूलकं हि तत् । यदि तादृक् पातिव्रत्यमेव जगति श्रेयस्तयाऽनुमतं, तदा कथं तदनादृत्य बहुप-

तिग्रहण-विधिप्रचारार्थमुद्यमः क्रियते, न पुनः सर्वप्रयत्नेन तस्यैव दार्ढ्यं संपाद्यते। उपदेशविरुद्धमाचरणं खलूपदेशस्य सर्वथाऽलीकत्वमाकलयति, येन तथाविधोपदेशं प्रति जनानां स्वत एव वैमत्यमुत्पद्यते। अथ तथाविधपातिव्रतस्याकिञ्चित्करत्वमुपलब्धं, तदास्मत पाठ्यपुस्तकेभ्यः सीतासावित्र्यादिचरितानि निष्कास्य तेषां स्थानेषु मन्दोदरी-मेनका-तारा-प्रमुखाणां सुचरितानि सन्निवेश्यानि, येन शैशवादारभ्यैवास्माकमन्तःकरणं बहुपतिसंग्रहार्थं प्रस्तुतं भवेन् न चैकत्र प्रेम-निबद्धं, तदपगमे क्षणमप्यन्यसंग्रहे पराङ्मुखं स्यात् विलयं प्राप्नुयाच्च जगति क्रमेण महानर्थकरी दम्पत्योः स्थिरसौहार्दवार्ता। अत्र बहूनि वक्तव्यानि सन्ति, न च तादृगवसरो विद्यतेऽतोऽद्यैतावन्मात्रमुक्त्वा विरम्यते। इति शम्।

युष्माकमनामिकादेवी।



# संस्कृत-भाषाया वैशिष्ट्यम्

इह खलु रत्नाकरमेखलापरिवेष्टिते बहुविधद्वीपमण्डल-मण्डितेऽखण्डिते महीमण्डले तत्तत्प्रदेश-प्राकृत-भावभेदसम्भूतप्रभूतभेदवदवयवसम्पन्नेषु मनुजसमाजेषु नियतिकृतनियमवशाद्वा निरन्तरवैचित्र्यदर्शनानुरागिणः परमेशितुरबन्ध्याभिलाषाद्वा, दुर्बोध-कार्यकारणधाराप्राबल्याद्वा मानवानां वाग्यन्त्रगतनैसर्गिकवैषम्यात् समुत्पन्नाः खलु परस्परं विभिन्नरूपा बहुविधा भाषाः ।

यथा यथा देशस्वभावभेदेन समयभेदेन च मनुष्याणां परस्परमाकृतिराचारो धर्मो मनोवृत्तयश्च परस्परं भिद्यन्ते, तथा तथा तेषां भाषा अपि परस्परं भेदमाप्नुवन्ति । किञ्च कस्या अपि भाषायाः कालप्रभावाद् भिन्नदेशसम्पर्काच्च तथा विकृतिः सम्पद्यते यथा सा सर्वथा भिन्नेव प्रतिभाति ।

इत्थं सृष्टेरादित एतावत्समयपर्यन्तं प्रवृत्तासु बहुविधासु भाषासु संस्कृतभाषैवान्याः सर्वा अभिभूय तिष्ठतीति भाषातत्त्वविदः समुदाहरन्ति ।

सन्ति खल्वन्यासु भाषासु काव्य-नाटकदर्शनेतिहासविषयका बहुविधा निबन्धा ये नाम जगतीतले स्व-स्वनिर्मातुरलौकिक-कवित्वचिन्ताशक्त्योरनन्यसाधारणानुसन्धित्सायाश्च परममुत्कर्षं प्रतिपादयन्ति । सन्ति च पुनरन्यत्र महान्तः प्रख्यातनामानः कवयो येषामसाधारणप्रतिभाप्रभावेण कालिदासादीनामपि यशांसि संशयसागरे निमज्जन्ति ।

वस्तुतो यत्र यत्र मनुष्यसमाजस्तस्य च क्रमोत्कर्षो विद्यते, विद्यन्ते च तेन समं दैन्यमुद्दीपना कातर्यमुत्साहप्रभृतयश्च स्फुटतामुपगता मानसभावास्तत्र तत्रैव तत्तद्भावप्रकाशचतुरा भाषाः क्रमशो विकाश-

मीयुः। ततश्च मानवीयमानसभावाभिव्यक्तौ समाना एवान्याः संस्कृतभाषया, न तदर्थं गीर्वाणवाणी प्रशस्यतेऽस्माभिः।

अस्ति हि संस्कृतभाषायाः किमपि लोकोत्तरचमत्कारकारि युगपद्विरुद्धभावप्रकाशनक्षमत्वरूपमन्यद्धि वैशिष्ट्यं, यदभूतपूर्वमैन्द्रजालिककर्मेव समाकर्षति हृदयं, दैवव्यापारपरम्परेव समुत्पादयति विस्मयमन्तस्तत्त्वेषु, येनेयं दैवी वागिति कथ्यते।

रौद्र-माधुर्ययोर्वीरश्रृङ्गारयोर्वैरूप्य-सौन्दर्ययोः काठिन्य-मार्दवयोर्वर्षावसन्तयोः शिशिरघर्मयोश्चैकत्र सुश्लिष्टतया समावेशः केवलं संस्कृत एव दृश्यते।

भीषण-भस्मच्छुरित-जटाजूटघटित-सरसकुसुमस्तबक-शोभिस्निग्ध-धम्मिल्ल-शोभोद्भावितं, भयङ्कराशीविषघटितार्धमौक्तिकसर-समुज्ज्वलं; सद्यःकृत्त-शोणिताक्तशार्दूल-कृत्ति-सामि-घटितविमल-माङ्गल्यक्षौमाच्छादितावयवमर्धनारीश्वररूपं हि केवलं संस्कृतभाषायामेवाविर्भावितमस्ति। युगपदेवं व्यधिकरणभावसामञ्जस्यसंस्थापनमेव संस्कृतभाषाया वैशिष्ट्यं देवभावश्च।

केवलं संस्कृतभाषैवैकस्मिन्नधिकरणे नरकङ्काल-माल्यधारिणीं घनतमालनीलच्छविं प्रत्यग्रनरशोणितोपलिप्तावयवां कृतान्तसहचरीमिव भयङ्कराकारां निशाचरीं ताडकां, समभिसरणकृतोद्यमामभिनवसुरभिकुसुमदामविभूषितां सुरभिचन्दनरसार्द्रीकृतापघनां घनजघनगौरवमन्थरां मूर्तिमतीं रतिमिव लावण्यमयीं सौन्दर्यमयीं लीलामयीं मृदुलतनुलतां तनुमध्यां महिलाकुलललामभूतां कुलललनां दर्शयितुं समर्था भवति। एका संस्कृतभाषैवैकत्र राघव-पाण्डवचरितयोरपूर्वसमावेशं विधातुमलमस्ति; पारयति चैकेनैव वचनविन्यासेन नृपकुमारीं विद्यामादिशक्तिं महाविद्याञ्च प्रशंसितुम्।

* इति *

# विदुषां सम्मतयः

श्रीः

इयं प्रबन्ध-मञ्जरी श्रीमद्-विबुधवरहृषीकेश-स्वान्त-सरसीरुहसरस-किञ्जल्कमञ्जरी-मञ्जुरीति नानाविधरसभावादिमकरन्दनिर्भरा विकास-सौरभविसर-वशीकृत-विविधदिगन्तरालवर्ति-विबुधमनो-मिलिन्द--निवहा विदुषां श्रवणयुगावतंसीकरणार्हा। यस्याः किल मधुरोपदेश-मधुकरविरुतय एव माहात्म्यं ख्यापयन्ति, इति पुनरुक्तिभयविह्वला इव संकुचन्ति, अस्माकं वाक्प्रसराः। एतस्याश्च दर्शनसमधिगम्यो विशेषो न वाचां पदवीमवतरतीति विरम्यते।

*"प्रबन्ध-मञ्जरी सैषा विदुषां श्रवणं गता।*
*महाफलाय भवतात् कल्पद्रोरिव मञ्जरी॥"*

काशी
माघ कृष्णा दशमी
१९८६ वत्सरः

इति मम
पं० काशीनाथशर्मणा आशा।

* * *

( २ )

सम्प्रत्यपि द्वित्राः संस्कृतपत्रिका आयान्त्येव नेत्रगोचरतां विपश्चिताम्। दुर्लभैव पुनरासु सा रसधारा या खल्वासादिता सद्भिस्तत्रभवतो हृषीकेशशास्त्रिणो 'विद्योदये'। सर्वथाऽयं विलक्षण एवासीत्। का नाम संस्कृतपत्रिका विनाकृता हृषीकेशेन अप्पाशास्त्रिणा च। ब्रह्म-

भूयमधिगतवतो स्तयोर्नूनमियमनाथैवेदानीमपि। अभिनव एव कश्चित् प्रदर्शितस्ताभ्यां प्रकारः संस्कृतपत्रिकाप्रचारस्य। यत्सत्यं चिरमेतौ सादरं सगौरवं सबहुमानं च स्मरिष्येते वाचकमुख्यैः। आस्वाद्य एव हि विद्वद्भिस्तयोर्वाग्बन्धः। सर्वथा साधुवादाः परःसहस्रा अस्मन्मित्राय साहित्याचार्याय सुविश्रुतनामधेयाय विद्याविनोदाय श्रीमते पण्डित-पद्मसिंहशर्म्मणे, यदनेन श्रीहृषीकेशशास्त्रिणः कतिचित् सन्दर्भाः संगृह्य 'विद्योदयतः' "प्रबन्धमञ्जरी"त्युपहृताः साम्प्रतमस्मभ्यम्। कामं रसयन्तु रसिकास्तेषां मधुरिमाणमधिगच्छन्तु च सौहित्यमतिमहदिति शिवम्।

विश्वभारती, शान्तिनिकेतनम्
वि० १९८६, मार्गशीर्षशुक्लैकादशी

*विधुशेखरभट्टाचार्यः*
( मित्रगोष्ठी-सम्पादकः )

* * *

( ३ )

श्रीश्रीदुर्गा शरणम्

हरिद्वारज्वालापुरमहाविद्यालयाध्यापकचरेण सुप्रथितकीर्तिना हिन्दी-संसृतौ लब्धप्रतिष्ठाधिनायकेन श्रीमता पद्मसिंहशर्म्मविद्याविनोदमहोदयेन प्रकाश्यमाना प्रबन्धमञ्जरीनाम पुस्तिकाऽस्माभि रधिगता, भागशः समवलोकिता च। पुस्तिकायामस्यां समग्रभारतभूमौ सुगृहीतनामधेयस्य महनीयमहिम्नस्तत्रभवतो हृषीकेशशास्त्रिमहोदयस्य सरसबन्धाः प्रबन्धाः किल सन्निबद्धाः श्रोत्रमनोरमास्तदीयपुण्यजीवनकथाश्च सरस-भाषया सुविन्यस्ताः।

अत्रत्यानां प्रबन्धानां सर्व एव तत्रभवतां शास्त्रिपादानामसाधारण-कृतिनिकषायमाणे संस्कृतभाषयोपनिबद्धे 'विद्योदय'-नाम्नि मासिकपत्रे

बहोः कालात् पूर्वं प्रकाशं गताः। ये नाम तदानीं 'विद्योदय'दर्शन-सौभाग्यं प्राप्ताः, जानन्त्येव ते शास्त्रिपादानां विजातीयप्रतिभाप्रकर्षं प्रबन्ध-निर्माणनैपुण्यं वचनमाधुर्य्यं, द्रव्यप्रथनचातुर्य्यं कियच्चमत्कारि आसी-दिति। ये पुनरिदानीन्तना विद्योदयरसास्वादसौभाग्यरहितास्तेषामपि परितोषकृते वृत्तगन्धपदबन्धसुन्दरी प्रबन्धमञ्जरीयं सफला समजनि।

तदेवमनुमीयते प्रबन्धमञ्जरीयं स्वगुणेन तत्रभवतां शास्त्रिपादानां नामसम्बन्धेन च ध्रुवमचिरात् सचेतसां चेतसामभिनन्दनाय प्रकाशं गमिष्यति।

उपसंहृतौ च श्रीमते गुणग्राहिणे पुस्तकसम्पादकाय प्रागुक्तमहात्मने सन्निबन्धानामेतेषां संग्रहण-प्रकाशनार्थं धन्यवादततयः समर्प्यन्ते, आशास्यते च तदीयसम्पादकत्वेन प्रबन्धमञ्जर्याः पद्मगन्धवत् सौरभं गौरवञ्च वर्द्धिष्यते। इति

भवानीपुरम्
भागवतचतुष्पाठी,
२४-९-१३३६
( वङ्गाब्दाः )

*श्रीदुर्गाचरणशर्म्मणाम्*
( सांख्य-वेदान्ततीर्थ-महामहोपाध्यायानाम् )

* * *

( ४ )

श्रीरस्तु

वङ्गदेशभूषण-पण्डितप्रवरमान्य-श्रीहृषीकेशभट्टाचार्या विद्योदयाख्य-पत्रिकाद्वारा तत्तादृशभावगम्भीरसुललितमधुरपदविन्यासानां बहूनामेव प्रबन्धानां स्वविरचितानां प्रकाशनेन न केवलं वङ्गदेशस्य किन्तु जगती-तलस्यैव संस्कृतभाषाभिमानिन उत्तमर्णा इति वस्तुस्थितिकथनमिदम्।

इमे पण्डितप्रवर-श्रीगदाधरभट्टाचार्य-श्रीआनन्दचन्द्रशिरोमणि-श्रीमधुसूदनस्मृतिरत्न-प्रभृतीनां पण्डितानामेव परम्परामलमकुर्वन्, येषामात्मजा अपि श्रीभवविभूतिविद्याभूषणप्रभृतयोऽद्यापि पाण्डित्यकाष्ठया समलङ्कुर्वन्ति वङ्गदेशं स्वीयेनैव पैतृकेन ग्रन्थविलेखनादिविषयेण समुत्साहेनेति सत्यं पण्डितप्रवरधारैवैतेषां वंशः।

श्रीगदाधरभट्टाचार्याश्चैतदादिपुरुषा न नवद्वीपालङ्कारणन्यायाधिष्ठानदेवताः किन्त्वन्य एव प्रयोगादिनिष्णाताः केचन महात्मान इति वयं श्रीभवविभूतिविद्याभूषणसकाशादवगच्छामः।

शैशवमारभ्य विद्याचर्चैकनिष्ठा प्रबन्धविलेखनैकदृष्टिः संस्कृतभाषायाः सजीवभाषात्वप्रख्यापनैकधुरन्धरता चैषामादर्श एव समासीदितितदीयप्रबन्धानां दर्शनेन नियतमवगम्यते। तदीया हि प्रबन्धास्सर्व एव पुनः पुनः संस्कृतभाषाविद्यार्थिनां तदभिमानिनां पण्डितानामपि समालोचनमर्हन्तीति सत्यं सर्व एव ते पृथक्प्रकाशनमिदानीमपेक्ष्यन्ते। पण्डितप्रवरः श्रीपद्मसिंहशर्मा नु केषाञ्चनान्ततो गत्वा गभीराणां प्रबन्धानां प्रकाशनेन नूनं संस्कृतभाषाभिमानिनामुत्तमर्णः। विद्योदयपत्रिकैषा वङ्गदेशात् सर्वादरपात्रं प्रकाश्यमानासीदिति तदीयानां प्रकाश्यमानानां पत्रिकान्तरेष्वपीदानीन्तनेषु तदीयाः सम्पादका अनुकरिष्यन्तीति सुदृढोऽयमस्माकं विश्वास इति निवेदयति

कलकत्ता-विश्वविद्यालयात्
७—९—३० दिने

सुधीजन-विधेयः
अनन्तकृष्णशास्त्री
( महामहोपाध्यायः )

* * *

( ५ )

अस्मत्-साहित्याध्यापकानां तत्रभवतां गुरुवर्याणां श्री१०८ हृषीकेशशास्त्रिणां गीर्वाणवाणी-रचनाचातुर्यं लोकोत्तरमासीदिति सुप्रसिद्धमेव। तदीयरचनामालाविभूषितेयं 'प्रबन्ध-मञ्जरी' तुलसीमञ्जरीव स्वयं भगवतो नारायणस्यापि प्रीतिमावहति किमुतास्मादृशाम्। विद्यार्थिनां हि स्वल्वियं प्रदीपालिरिव संस्कृतरचनामार्ग-प्रदर्शिका भविष्यतीत्यत्र कः सन्देहावसरः। सर्वथा धन्यवादार्हौ ह्यस्य संग्राहकः प्रकाशकश्च। अस्य संग्रहस्य प्रशंसावचनं सूर्यस्य प्रदीपदर्शनमिव तथापि संग्रहकृतामनुरोधात् अभ्यर्हणबुद्ध्या क्रियते इत्यलं विस्तरेण। इति

कल्पतरु-भवनम्,
कलकत्ता,
२०-२-१९३०

महामहोपाध्यायोपाधिक-
श्रीगणनाथशर्मणाम् (M. A., M. L. S.)

* * *

( ६ )

गुणैकपक्षपातिभिः सहृदयमूर्द्धन्यैर्बहुभाषातत्त्वनिष्णातैः सुगृहीतनामधेयैः श्रीमद्भिः पद्मसिंहशर्म्मभिः संगृहीतामिमां प्रबन्धमञ्जरीमवलोक्य नितरां प्रीता वयम्। तत्रभवद्भिः हृषीकेशशास्त्रिचरणैः सम्पादितायां विद्योदयपत्रिकायां मुद्रितानां प्रायस्तैरेव रचितानां प्रबन्धानामस्मिन् प्रबन्धमञ्जर्याः प्रथमे भागे समावेशो दृश्यते। यद्यपि विविधभाषोपनिबद्धागणित-काव्यरसास्वादसुहितेभ्योऽपि श्रीमद्भ्यः पद्मसिंहशर्मभ्यो रोचमानानां प्रबंधानां सूपादेयत्वं प्रति न किमपि वक्तव्यमपरमवशिष्यत इति दृढं प्रतीमस्तथापि गद्यबन्धासाधारणनैपुण्येनानल्पकवित्वेनानास्वादितपूर्वरीतिसंयोजनेन च प्रबन्धानामुपादेयत्वं सुव्यक्तमेवेति स्वकण्ठरवमपि संयोजयामः।

अनुशीलितेयं मञ्जरी, आधास्यति च नितरां प्रावीण्यं गद्यरचना-रीतिमधिजिगमिषूणां, विनोदयिष्यति च मनांसि सहृदयानां, समुल्लासयिष्यति च यशांसि रचयितृणां, ख्यापयिष्यति च गुणैकपक्षपातित्वं संगृहीतृणामिति मुक्तकण्ठमुद्घोषयामः ।

कलकत्ता-संस्कृतकालेज,
पौष सुदि नवमी
संवत् १९८६

श्रीयोगेन्द्रनाथशर्मणः (दर्शनाध्यापकस्य)
श्रीसकलनारायणशर्मणश्च
( व्याकरणादि-व्याख्यातुः )

* * *

( ७ )

भट्टाचार्य-रसालादुद्भूता मञ्जु मञ्जरी सुरभिः ।
"पद्म-पराग"-परागत-मधुपेन विभूषिता भाति ॥ १ ॥
साहित्य-सिन्धु-मथकैः, श्रीमद्भिः 'पद्मसिंह'-बुधवर्यैः ।
तल-गत-कल्पतरो रिव, मञ्जर्येषा समानीता ॥ २ ॥
या खलु विषमे ग्रीष्मे, तापादलुपन्नु मञ्जरी लोके ।
हन्त ! नितान्तमनेन, प्रकाशिता ऽसौ वसन्तेन ॥ ३ ॥

कस्तूरिका-कलित-मञ्जु-करेण तेन
सिंहेन शासित-मृगेण हृता भवान्यै ।
भो ! भो ! बुधाः ! सरस-सान्द्र-रुचिर्भवद्भि-
र्मञ्जर्यसौ मधुकरैरिव सेवनीया ॥ ४ ॥

उल्लुण्ठ्य कान्तिममलां नु शकुन्तलाया
वेणीनिबन्धदृढताञ्च सभङ्गि नीत्वा ।
कादम्बरी-वदन-सौरभमाशु हृत्वा
'गाङ्गेय'-गेयपदमेति नु मञ्जरीयम् ॥ ५ ॥

गाङ्गेय-भवनम् ,
कलकत्ता,
माघ कृ० ५ । ८६ वि०

गाङ्गेयनरोत्तमशास्त्रिणः

## आसामप्रान्तीय-संस्कृतशिक्षाधिकारिणां वेदान्तशास्त्रि-श्रीवनमालीशर्मणां सम्मतिः

I am very glad to get a copy of a selection of a few pieces from the Sanskrit writings of the late Pandit Hrishikesh Shastri previously published in the old issues of his 'Vidyodaya' the renowned Sanskrit Journal. The present volume—owes its publication to Pt. Padma Singh Sharma, Vidyavinode of Bijnor U. P.—widely known in the Hindi world,—but for whose untiring endeavours the beautiful writings of the late Pandit Hrishikesh,—lucid, humorous and classical in style, would have been extinct. I feel it my first duty, therefore, to accord my best thanks to the erudite editor of this work—who is a devoted admirer of the late Pandit and a true appreciator of the literary merits of his works.

Pt. Hrishikesh Shastri was my colleague in the Calcutta Sanskrit college (1904-1908), where I first saw him. He was a savant of true type,—profoundly learned, sedulously industrious and perfectly unostentatious. I take this opportunity of putting on record my first appreciation of the Revered Pandit when I was a student of the Zilla School, Barisal in the early nineties of the last century. I had learnt that a Sanskrit monthly called the 'Vidyodaya' was in existence. I wrote to its editor Pt. H. K. Shastri to enlist me as subscriber. The good Pandit wrote back to say that the language of the 'Vidyodaya' was too difficult for a

mere school boy and that I had better not incur any expenses for such a purpose. I was charmed by the goodness of the editor-proprietor who could thus say 'no' to an intending subscriber. Here was a real man. I did subscribe to the 'Vidyodaya' (1890) and found it indeed too difficult for me. In each number I found sometimes one paragraph, sometimes more, that I could understand. But the major portion of every number was Greek to me. Still I continued to be a subscriber, for even in those young days I felt that the editor was no sham: no mere hireling such as many men of learning have a tendency to become in these degenerate days.

When later I came in personal contact with the great Pandit in the Calcutta Sanskrit College, my expectations were fully realised. It was a pleasure to have talked with the Pandit Mahasaya, and it was an education to observe him working at his desk on the descriptive Catalogue of Sanskrit MSS in the library of the Sanskrit College.

Bengali Pandits do not practise the art of writing and conversation in Sanskrit. But there are exceptions. M. M. Chandra Kanta Tarkalankar and Pt. Hrishikesh Shastri among the dead and M. M. Gananath Sen (Sastriji's Pupil) among the living are good writers of Sanskrit Prose even in these days of the neglect of Sanskrit.

VANAMALI VEDANTATIRTHA, M. A.
( *President, Assam Sanskrit Board and Senior Professor of Sanskrit, Murarichand College, Sylhet, Assam.* )

# शुद्धिपत्रम्

—:०:—

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| गोत्र-जाल्लम | गोत्रज-मल्लाल | २ | १७ |
| खृष्टाब्दीयपश्च | खृष्टाब्दीयं पश्च | ८ | १२ |
| पुरस्कृतिं | पुरस्कृतिर् | ८ | १७ |
| स्वकर्मानरता | स्वकर्मनिरता | १२ | १६ |
| अस्य | स्वस्य | १२ | २० |
| तद्दशाति | तादृशाति | १३ | ६ |
| तत | ततः | १३ | ७ |
| द्विशतीं | द्विशती | १७ | ७ |
| का नाम | काऽपि | १८ | १० |
| अकस्माकञ्च | अस्माकञ्च | २१ | १५ |
| स्वाच्छन्द | स्वाच्छन्द्य | २२ | ६ |
| यथायथमपि | यथाकथमपि | २७ | ४ |
| कमक्षेत्र··· | कर्मक्षेत्र··· | ३० | २० |
| दिगन्तप्रतिध्वानि | दिगन्तप्रतिध्वानी | ३० | २२ |
| समन्तात | समन्तात् | ३१ | ८ |
| त प्रसूते | न प्रसूते | ३१ | ३ |
| चेतोप्यधि-क्लेश | चेतोप्यधिकक्लेश | ३२ | १६ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| शास्त्राणां: सम्यग | शास्त्राणां सम्यग | ३३ | २० |
| लप्स्येत | लभ्येत | ३७ | ६ |
| मनुवर्त्तध्वम् | मनुवर्त्तन्ताम् | ३७ | ११ |
| किमिवाकर्णयत | किमप्याकर्णयत | ३६ | ३ |
| ष्वकपट प्रेम | ष्वकपटं प्रेम | ४२ | ४ |
| प्रवृत्ति ; | प्रवृत्तिः | ४२ | ५ |
| समाकर्षयन्ति | समाकर्षन्ति | ४२ | ८ |
| सहायकमन्तरेण | साहायकमन्तरेण | ४३ | १० |
| विना अदृष्ट | विनाऽदृष्ट | ४३ | १२ |
| अदृष्टप्रभाभावादेव | अदृष्टप्रभावादेव | ४४ | ४ |
| कश्चित | कश्चित् | ४४ | २२ |
| सृष्टेरकमेव | सृष्टेरेकमेव | ४६ | ६ |
| स्माभि न | स्माभि र्न | ४८ | १४ |
| सर्व: | सर्वैः | ५१ | २० |
| स्फुटमायाताम् | स्फुटमायातम् | ५५ | १३ |
| अभवत् | अभवन् | ५६ | ५ |
| गणनानङ्कान | गणनाङ्कान | ५६ | ८ |
| नाकाङ्क्षन्ति | नाकाङ्क्षन्ति | ५८ | १२ |
| नैकमांसेन | नैवमांसेन | ५८ | १२ |
| अकृतिं | प्रकृतिं | ५८ | २१ |
| विषयासित्तरोत्तर | विषयासेरुत्तरोत्तर | ५६ | ६ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| सद्गुण | सद्गुण | ६१ | १५ |
| दृगगोचरं | दृग्गोचरं | ७० | १८ |
| चाकास्त | चाचकाद् | ७१ | ४ |
| समन्तात | समन्तात् | ७१ | १६ |
| भूमिलुण्ठित | भूमिलुठित | ७४ | १ |
| देवपादानां | देवपादानाम् | ७४ | ३ |
| सम्यगरण्यका | सम्यगारण्यका | ७४ | १२ |
| देवपाादानां | देवपादानां | ७६ | ५ |
| पिबन्निवेकदा | पिबन्निवेकदा | ७७ | ६ |
| पूर्ववत | पूर्ववत् | ७८ | १ |
| पशुसमाजे | पशुसमजे | ७६ | ६ |
| मनुतस्था | मनुतष्ठा | ७६ | ६ |
| तत प्रभृ | ततः प्रभृ | ७६ | १३ |
| गुरुदन्ड | गुरुदण्ड | ८० | २१ |
| केप्यचिरा | कोप्यचिरा | ८१ | १६ |
| वतमान | वर्तमान | ८१ | २० |
| मन्थथा | मन्यथा | ८२ | १३ |
| निर्विक्ता | निर्विविक्ता | ८२ | १४ |
| सुचिरजाज्वल्य | सुचिरं जाज्वल्य | ८२ | २२ |
| भवदव्यवहार | भवद्व्यवहार | ८३ | १६ |
| तेप्येनन | तेप्यनेन | ८६ | २० |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
| --- | --- | --- | --- |
| शन्तिम् | शान्तिम् | ८६ | ५ |
| कौलिन्य | कौलीन्य | ८६ | ७ |
| विनयार्जवेम्यः | विनयार्जवेभ्यः | ८६ | ७ |
| स्वचितं | स्वचित्तं | ८६ | १५ |
| ल्किश्नाति | क्लिश्नाति | ९० | ११ |
| मुद्रिनरन्ति | मुद्गिरन्ति | ९० | १८ |
| कापयेन | कापथेन | ९० | २० |
| भीषतरो | भीषणतरो | ९२ | १३ |
| वरीवर्धते | वरीवृध्यते | ९३ | ७ |
| वाह्यमानास्ते | वाह्यमानास्ते | ९३ | ११ |
| लोकाद | लोकाद् | ९४ | ६ |
| चात्स्वरूप | चुत्स्वरूप | ९४ | १६ |
| स्मामाकं | स्माकं | ९४ | १८ |
| चधा | चुधा | ९५ | २ |
| बुभुचा | बुभुचा | ९५ | ६ |
| वैकल्प | विकल्प | ९५ | ६ |
| मितिहसे | मितिहासे | ९६ | १० |
| सुदर्लभा | सुदुर्लभा | ९६ | १३ |
| तदल्लेखो | तदुल्लेखो | ९६ | २२ |
| निर्थक | निरर्थक | ९६ | २२ |
| संदिग्धव्यम् | सन्देग्धव्यम् | ९७ | १३ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| दिक्चक्राते | दिक्चक्रात् | ६६ | २ |
| हृतसवस्वा | हृतसर्वस्वा | १०२ | ११ |
| मवगमय्य | मपगमय्य | १०२ | १३ |
| चक्र: | चकु: | १०२ | २० |
| विजृम्भिरे | विजजृम्भिरे | १०४ | २ |
| विललसु | विलेसु | १०४ | ३ |
| मन्दं मदं | मन्दं मन्दं | १०४ | १६ |
| कियते | क्रियते | १०५ | २२ |
| शिखरेसु | शिखरेषु | १०६ | १६ |
| सन्मानार्हान् | सम्मानार्हान् | १०७ | १ |
| धन्यस्तेषां | धन्यन्तेषां | १०७ | ४ |
| विरौतु | विरोतु | १०८ | ५ |
| वमविधास्यत | वं व्यधास्यत | ११० | ८ |
| व्यवहारेष | व्यवहारेषु | १११ | १२ |
| येऽङ्करमात्र | येऽङ्कुरमात्र | ११२ | ४ |
| हुराधय: | दुराधय: | ११२ | १५ |
| क्लेशमाज: | क्लेशभाज: | ११३ | १० |
| गूढमाश्रन्ति | गूढमाश्रयन्ति | ११५ | २२ |
| नार्दीभवन्ति | नार्द्रीभवन्ति | ११६ | ३ |
| पश्यातामेव | पश्यतामेव | ११७ | १८ |
| तं वर्ज | तं वर्जयित्वा | ११८ | २२ |

| अशुद्धम् | शुद्धम | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| वोन्तते: | वोन्नते: | ११६ | १० |
| वृषकन्धा: | वृषस्कन्धा: | १२० | २२ |
| द्र तपदं | द्रुतपदं | १२१ | १६ |
| भवता | भवतां | १२४ | १० |
| उद्यत्पद्यन्ते | उत्पद्यन्ते | १२६ | १८ |
| सवदोषा | सर्वदोषा | १२६ | २ |
| मतिनैकेन | मितेनैकेन | १३२ | १४ |
| वद्वृथा | वद्वृथा | १३२ | २२ |
| देवरयातणां | देवरयातॄणां | १३२ | २२ |
| कालकवल | कालवदन | १३४ | १ |
| णाश्रियन्ते | णाश्रीयन्ते | १३४ | ८ |
| माषिता | भाषिता | १३४ | १३ |
| सम्यक | सम्यग् | १३४ | २२ |
| बह्वार्थार्जन | बह्वर्थार्जन | १३५ | १६ |
| लब्धा | लब्ध्वा | १३५ | २२ |
| समुदासभ्य | समुदारसभ्य | १३६ | १२ |
| महोजस्विनी | महौजस्विनी | १४० | १६ |
| कर्णपूरायमां | कर्णपूरायमाणं | १४२ | १६ |
| मसंविवादितया | मविसंवादितया | १४३ | ११ |
| कत्वा | कृत्वा | १४३ | १४ |
| रसिकाना | रसिकानां | १४४ | ८ |
| शाचस्य | शौचस्य | १४५ | १ |
| चण्डीदास | चण्डिदास | १४५ | १४ |
| क्षीणासागरे | क्षीरसागरे | १४६ | १० |
| दोऽङ्गली | दोऽङ्गुली | १४७ | ५ |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| वेगा मरुति | वेगो मरुति | १४७ | १२ |
| ज्जिजृम्भे | ज्जजृम्भे | १४७ | १६ |
| कबयितु | कवयितु | १४८ | ६ |
| गुरून्मदतया | गुरून्मादतया | १४८ | ११ |
| रञ्जायामास | रञ्जयामास | १४६ | १० |
| नभ्य | नव्य | १४६ | १४ |
| कवलव्यादान | वदनव्यादान | १५१ | १२ |
| निर्व्वार्याणा | निवार्याणा | १५१ | १६ |
| महानुभव | महानुभाव | १५४ | २ |
| शतद्र | शतद्रु | १५७ | २० |
| स्वल्व | स्वल्प | १५७ | २२ |
| तथाऽन्येति | तथान्येनेति | १६० | १२ |
| वैक्रमात्रो | वैक्रमात्रं | १६१ | ७ |
| यथाः ना | यथा ना | १६५ | १५ |
| सुर्नाविवरत्व | सुर्नवावतारत्व | १६५ | १७ |
| मभैतेन | मयैतेन | १६८ | १ |
| प्रकृत | प्राकृत | १६६ | ६ |
| ममावताल्वे | ममावतारत्वे | १७२ | २ |
| ग्रान्त | प्रान्त | १७२ | १४ |
| कणाजनित | कणजनित | १७४ | १३ |
| तांद सक्र | तां सकृद् | १७५ | १ |
| च पश्यतामकुर्वताश्च | चापश्यतामकुर्वाताश्च | १७५ | १३ |
| नर्थापते | नर्थापाते | १७६ | २ |
| रागो विगुणेषु | न विगुणेषु विरागो न | १७६ | ७ |
| निमुक्तस्य | निर्मुक्तस्य | १८६ | १० |

| अशुद्धम् | शुद्धम् | पृष्ठम् | पंक्तिः |
|---|---|---|---|
| जन्मभूमः | जन्मभूमिः | १७७ | [illegible] |
| मवा | मेवा | १७७ | ६ |
| लब्धा | लब्ध्वा | १७७ | १४ |
| गौरवचणं | गौरवरचणं | १८० | २० |
| निदद्रः | निदद्रुः | १८१ | १४ |
| विवक्किनां | विवेक्किनां | १८१ | २० |
| जन्मभृमि | जन्मभूमि | १८१ | २१ |
| श्रतपूर्वा | श्रुतपूर्वा | १८२ | १३ |
| भग्नाऽभच | भग्नाऽभवच | १८२ | २२ |
| चद्राशयं | चुद्राशयं | १८३ | ६ |
| साम्पूतं | साम्प्रतं | १८६ | १४ |
| क्वचित | क्वचित् | १९० | ४ |
| सादर | सादरं | १९० | १३ |
| व्यार्थँजनशसन | व्यार्थाजनशंसन | १९० | १६ |
| घणुक | द्वयणुक | १९४ | १६ |
| सुष्टिवभूव | सृष्टिर्बभूव | १९६ | २ |
| ग्रजानां | प्रजानां | १९६ | १० |
| पौतै | पोतै | १९७ | १६ |
| राथ | रार्थ | १९८ | १४ |
| सम्राऽसद्र | स तम्राऽसद्र | २०३ | २ |
| वस्तून्य | वस्तुन्य | २०३ | १० |
| दः:खानां | दुःखानां | २०४ | २० |
| त्याबाल्यं | त्याबाल्यं | २०५ | १२ |
| तदास्मत | तदास्मत | २०६ | ५ |
| वाग्यगुयन्त्र | वाग्यन्त्र | २०७ | ६ |

पण्डित पद्मसिंहशर्मप्रणीतानां पुस्तकानां

# विज्ञप्तिः

—:०:—

साहित्य-रसिकाः ! कोऽत्र साहित्यवित्समाजे तादृशः सहृदयो यो न सँस्तौति श्रीमतां प्राप्त-मङ्गलाप्रसादपारितोषिकाणामखिल-भारतीयाष्टादश-हिन्दीसाहित्यसम्मेलनाधिपानां तत्रभवतां सुगृहीतनाम-धेयानां पण्डितप्रवर-श्रीपद्मसिंहशर्मणां नाम, तल्लेखनीं वा रसखनीम्। येषां लेखधोरणीमहमहमिकया प्रविविक्षन्ति सर्वे रसाः सर्वेऽलङ्काराश्च। तत्रापि सत्यपि सर्वत्र समे सर्वरसवर्णनपाटवे विशेषतः कमपि वक्रिमाणं विच्छित्तिञ्च काञ्चिच्चमत्कारिणीमञ्चति तल्लेखनी प्राप्ते करुणरस-संस्मरणे शृङ्गारे च निर्विकारे। अमुयोः करुणरससंस्मरण-स्यैव निष्यन्दभूतोऽयं विविधविषयक-द्वाविंशति-निबन्ध-संग्रहस्वरूपो विस्मारितान्यगुणरागः पठतां सविकल्प इव योगभागः प्राप्तविद्वज्जनानुरागः

"पद्म-परागः" मूल्यञ्चास्य
पादोनं रूप्यक-त्रयम् २॥।)